September, October & January, 1935 & 36.

C-107

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NOS. 453, 454 & 457.

# वीरमित्रोदय—

## शुद्धिप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

[illegible]

न्यायाचार्यपण्डितपद्मप्रसादोपाध्यायेन

संशोधितः ।

# VĪRAMITRODAYA

## SUDDHIPRAKĀS'A

by

MAHAMAHOPADHYAYA PANDIT MITRA MIS'RA

EDITED BY

Nyāyāchārya

Pandit Padma Prasāda Upādhyāy.

FASCICULAS. I–III. १-३.

PUBLISHED & SOLD BY THE SECRETARY,
CHOWKHAMBA SANSKRIT SERIES OFFICE,
Benares City.



श्रीः

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितसङ्ख्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकाः ४६३. ४५४, ४६७.

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NOS. 453, 454 & 457

THE

# VĪRAMITRODAYA

# SUDHIPRAKĀŚA

by

MAHĀMAHOPĀDHYĀYA PANDIT MITRA MIS'RA

EDITED BY

Nyāyāchārya

Pandit Padma Prasāda Upādhyāya

Vol. VIII. FASCICULAS. I-III. १ ३.

PUBLISHED BY

JAYA KRISHNA DAS HARI DAS GUPTA

*The Chowkhamba Sanskrit Series Office.*

*BENARES.*

1937.

॥ श्री ॥

चौखम्बा-संस्कृत-ग्रन्थमाला

( ग्रन्थ-संख्या ३० )

ग्रन्थाङ्काः ४५३, ४५४, ४५७,

श्रीः

# वीरमित्रोदय-

## शुद्धिप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

भट्टराई इत्युपपदेन

न्यायाचार्यपण्डितपद्मप्रसादोपाध्यायेन

संशोधितः ।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

सं० १९९४ वै.

प्राप्तिस्थानम्—

# जयकृष्णदास हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

# भूमिका ।

हंहो ! विद्यैकधनाः ! धर्मैकतुल्याः ! विद्वत्तल्लजाः !

अस्मिन् खलु निरवधौ संसरणाम्बुधौ युगपन्मज्जनोन्मज्जनायासनिर्यासनिदानमेकमेव नूनमनूनं तत्त्वज्ञानमाकलयन्ति समुच्छलदविच्छिन्नजन्ममरणपरम्परागिरिणदीप्रवाहपातदराः श्रुतिस्मृतीतिहासपुराणप्रमाणतादराः कल्याणकृते कदर्थितकलेवराः कोविदवराः । अनारोपितस्य रूपस्य साक्षात्कृतिमेव च तत्त्वज्ञानत्वेन व्यवहरन्ति गरीयांसो विवेचकवरीयांसः । अनारोपितं च रूपं तदेव जगति, यद् देशतः कालतो वस्तुतश्चापरिच्छिन्नम्, श्रुतिश्चात्रानुकूला "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य"मित्यादिका । एवंविधस्य च रूपस्य साक्षात्कारो नेन्द्रियव्यापारायत्तजन्मा सम्भावयितुमपि शक्यः प्रमादविधुरैरिति श्रवणमनननिदिध्यासनाहितसंस्कारविशेषैरच्छस्फटिकस्वच्छे मानसमुकुरे प्रतिबिम्ब एव सः । बिम्बप्रतिबिम्बयोश्चौपाधिकमन्यत्वं चकास्ते न तात्त्विकमिति न द्वैतिभिर्विद्वेष्टव्यम्, तमेव च 'यत्साक्षादपरोक्षाद् ब्रह्म' इति श्रुतिरप्यनुशास्ति' स च संस्कारविशेषः सामान्यविशेषाधीनामन्दमन्दतासमालिङ्गितकान्तरे मातङ्गकुले कृतो मन्त्रदीक्षासंस्कार इवापरिसङ्ख्येयजनिजातसंचिताघसन्दोहधूलिधूसरेऽन्तःकरणे नात्मानमेव लभते कुतो वा प्रतिबिम्बग्रहणयोग्यतामादधीत, तस्याश्चापगमो न विहितानुष्ठितिप्रतिषिद्धपरिहृतिमन्तरा, तत्र प्रतिषिद्धपरिहृतेः सार्वदिकतया विशेषणविशेषानपेक्षत्वेऽपि विहितानुष्ठितेरस्ति समग्राङ्गकलापाधिकारितावच्छेदकविशेषणविशेषग्रामसापेक्षता, अङ्गकलापाधिकारितावच्छेदकधर्मविशेषविरहाधिकारिका च सा सिकतोप्ता लतेव आधुनिकसुधारककराकर्षणकम्पिता राजनीतिरिव वनितासखीसङ्गता प्रव्रज्येव विफलतामेवासादयतीति कर्मफलाभीप्सुना मनस्विना नित्यनैमित्तिककाम्यभेदेन विभक्तानां त्रयाणां कर्मणामनुष्ठितौ प्रथममधिकारितासम्पादनशीला धर्मविशेषा एवान्वेषणीयाः, तेषु च शौचस्याप्यास्ते विशेषणविशेषता, यदन्तरेणमपि कर्मबीजं नापूर्वाङ्कुरं प्रसवितुमीष्टे, तद्विरहे च फल्गुतामेवावलम्बन्ते निखिलान्यपि कर्मजातानि, व्यर्थतामेवोपयाति विशेषत आमुष्मिकप्रयोजना । प्रयोजितसायासोपचितं वसुचयम् । किं बहुना, अशनायायासितायाऽपि न रोचते शुद्धिहीनतयावगतमन्नाद्यम् । पिपासाकुलितोऽपि नाभिलषति तादृशं शिशिरतरमपि पानीयं पातुम् । बलवत्कायव्यापारशतैः श्रान्तोऽपि प्रशिथिलाङ्गकलापोऽपि नाकाङ्क्षतेऽपवित्रां निबिडविटपिप्रच्छायशीतलामपि वसुधामध्यासितुमिति सर्वस्मिन्नेव लौकिकेऽलौकिके च वस्तुनि शुद्धिरपेक्षितेति कासौ शुद्धिः ? कतिधा च सा ? कतमैरुपायैरुपपादनीयेत्यादिविचिकित्साप्रमत्तकरेणुका बाधत एवानारतं निर्णिनीपूणां मनस्विनामन्तःकरणनलिनानि, ताश्चाकृतिश्च न शास्त्रीयाध्यवसायतीक्ष्णाङ्कुशपरिग्रहं विना, तत्परिग्रहोऽपि न सम्यग्विवेचनमन्तरा, तद्विवेचनमपि न प्रमाणानिपुणनम्बरस्थां विनेति शुद्धयशुद्धिविषयं समुपलब्धमानानां

मुनिवचनानां विषयव्यवस्थायै निर्मितोऽयं महाप्रबन्धः, महाटवीदुर्गमदुर्गकन्दरानिक्षि-प्तो महामणिरिव सम्प्रति श्रीजयकृष्णश्रेष्ठिमहोदयानां कथनीयतापथमनवतीर्णेन प्रबलेन प्रयत्नशतेन कथंकथमपि प्रकाश्यतां नीतः ।

यश्च नास्ति नः शास्त्रे विश्वासः, शुद्धिश्च मलविरहितत्वरूपं स्वच्छत्वमेव, तच्च प्र-त्यक्षप्रमाणसमधिगम्यमेवेत्यनर्थकं तदवधारणार्थमेतावतो ग्रन्थराशेः प्रणयनमिति प्रत्या-चक्षीत स प्रतिवक्तव्यः, तदेवमलं शास्त्रैकसमधिगम्यमिति नः सिद्धान्तः, प्रत्यक्षसम-धिगम्ये तु नास्मिन् यथाकथञ्चिद् दृश्यानामुपपद्येतापि, आत्मादीनान्त्वदृश्यानां मलि-नतामलिनते कथं निर्णायेताम्, नास्ति कश्चनात्मा, न चार्थकामातिरिक्तौ पुरुषार्थौ, नापि प्रत्यक्षतन्मूलकानुमानातिरिक्तं प्रमाणम् । नापि च जन्मान्तरमिति प्रलपतां च प्रमाणचर्चाचतुरैः श्वश्चतुरचेतोभिर्नैयायिकतनयैरेव वागिन्द्रियनियमनात्मकमौनव्रतप्रा-[illegible] प्रवर्तनीयाः ।

किञ्च—विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥

इति मनुवचनानुसारेण पतितानां तेषां लोमवल्लाङ्गूलवतामिव धर्मानुष्ठितावन-धिकाराच्चास्त्येव शुद्धेरावश्यकता, ये पुनरधिकारसंपन्नाः पुरुषार्थचतुष्टयप्रमातारः, धर्मस्यैवेतरपुरुषार्थमूलतया धर्मानुष्ठानेषु नियोजितकायवाङ्मनोव्यापाराः, तैः शुद्धेः [illegible] आस्तिकतया तेषां कृते कृतात्मपरिग्रहा ग्रन्थप्रणयननिर्वाहिका कृतिर्न निरर्थता कथमप्यापद्येत इत्यलं निर्मर्यादैः पाण्डितम्मन्यैः शुष्ककलहेनेति ।

यद्यपि शुद्धिनिरूपणपराः सन्ति बहवो मन्वर्थमुक्तावलीमिताक्षरापरार्कबालम्भट्टीप्र-भृतिपरिवारपरिवृंहिताः, [illegible]स्मृतिचन्द्रिकाशुद्धिविवेकशुद्धितत्त्वसिन्धुप्रभृतिपरिचा-रकाश्रितैः सादरं सेविता अमिताः संहिताः, तथापि ता बहुलपक्षपक्षपातिन्यायाभिनीत-भक्तोमसेवनाः काशीपुरीसरणश्रेणय इवान्तरा प्रकाशं न सम्यक् शुद्धिपदवीनिर्धा-रणाय पर्याप्ता इति [illegible] महामण्डलमण्डनायमाना [illegible] मण्डपाद्भिरन्त्रभ-[illegible] महाभाग्या [illegible] कल्पा [illegible] शु-[illegible] प्रकारान् [illegible] प्रमाणपुरःसरं [illegible] इति सर्वमपि [illegible] गेमुषीविशेषजुषां ग-[illegible] माश्रयणेनेति । अत्र [illegible] शुद्ध्यायमेकमादर्शपुस्तकं [illegible] प्रकल्पने, प्रतन्भग-[illegible] ग्रन्थमहे-[illegible] नुमता स्थले ॥ तत्र तत्र बहुपाठ्यतं स्यात्, [illegible] पुनः शरणमिति—

[illegible] ।

॥ श्रीः ॥

## अथ वीरमित्रोदयशुद्धिप्रकाशस्य

# विषयानुक्रमणिका ।

इति वीरमित्रोदयशुद्धिप्रकाशस्य विषयानुक्रमणिका।



प्राप्तिस्थानम्—

चौखम्बा-संस्कृत-पुस्तकालय,

बनारस सिटी।

श्रीगणेशाय नमः ।

अथ

# वीरमित्रोदयशुद्धिप्रकाशः ।

कोपाटोपनटत्सटोद्भटमटद्भ्रूभीषणभ्रूकुटि-
भ्राम्यद्भैरवदृष्टि निर्भरनमद्गुर्वीकरोर्वीधरम् ।
गीर्वाणारिवपुर्विपाटविकटाभोगत्रुटत्स्फाटक
ब्रह्माण्डोरुकटाहकोटि नृहरेरव्यादपूर्वं वपुः ॥ १ ॥
सटाग्रव्यग्रेन्दुस्रवदमृतबिन्दुप्रतिबलन्-
महादैत्यारम्भस्फुरितगुरुसंरम्भरभसः ।
लिहन्नाशाचक्रं हुतवहशिखावद्रसनया
नृसिंहो रंहोभिर्हमयतु मदंहो मदकलम् ॥ २ ॥
संसारध्वंसिकंसप्रमुखसुररिपुप्रांशुवंशावतंस-
स्सौ वंशीधरो वः प्रचुरयतु चिरं शं स राधारिरंसी ।
यच्चूडा रूढगूढस्मितमधुरमुखाम्भोजशोभां दिदृक्षु-
गुंजाभिः सानुरागालिकानिकटनटच्चन्द्रकव्यक्तचक्षुः ॥ ३ ॥
लीलाभ्रान्तिविसर्पदम्बरतया व्यग्रार्द्धकान्तं पद-
न्यासन्यञ्चदुदञ्चदद्रिवसुधाभोगीन्द्रकूर्माधिपम् ।
फूत्कारस्फुरदुत्पतत्फणिकुलं रिङ्गज्जटाताडन-
भ्रान्तव्योमगभीरदुन्दुभि नटन्नव्यात्स वो धूर्जटिः ॥ ४ ॥
कुम्भोद्भ्रान्तमधुव्रतावलिवलज्झुङ्कारकोलाहलैः
शुण्डास्फालनविह्वलैः स्तुत इव व्यालैर्वियत्प्लाविभिः ।
मज्जत्कुम्भमहावगाहनकृतारम्भो महाम्भोनिधौ
हेरम्बः क्रियतां कृताम्बरकरालम्बाञ्चिरं वः शिवम् ॥ ५ ॥
समन्तात्पश्यन्ती समसमयमेव त्रिभुवनं
त्रिभिर्नेत्रैर्दोर्भिर्दशभिरपि पान्ती दश दिशः ।
दधाना पारीन्द्रोपरि चरणमेकं परपदा-
हतारिर्वो हन्यान्महिषमथनी मोहमहिषम् ॥ ६ ॥

वामान् भिन्दन्नवामान् भुवमनुसुखयन् पूरयन्नर्थिकामान्
श्रीमान् भीमानुकारी बहलबलभरैर्मेदिनीमल्लनामा ।
आसीदाशाविपेन्द्रद्युतिधवलयशा भूपचक्रावतंसः
श्रीकाशीराजवंशे विधुरिव जलधौ सर्वभूसार्वभौमः ॥ ७ ॥
संग्रामग्रामकामो निरुपममहिमा सत्त्वविश्रामधाम
कामस्वारिचक्रं मिहिर इव तमो विक्रमोरुक्रमेण ।
सारैर्मेरोरुदारैरपर इव गिरिर्मेदिनीमल्लनेन
प्रख्यातः क्षोणिचक्रे समजनि नृपतिर्मेदिनीमल्लनामा ॥८॥
निर्व्यङ्क्ष्णजयाद्रिर्विधुमिव जगतीमर्जुनाभैर्यशोभिः
सम्पूर्यावार्यवीर्यो विशिखवितरणैरर्जुनो दुर्जनानाम् ।
साम्राज्योपार्जनश्रीरगणितगुणभूरर्जुनप्रांशुबाहु-
र्नाम्नाऽभूदर्जुनोऽस्मादपरपतिरतुलो मेदिनीमल्लभूपात् ॥९॥
बुद्धिः शुद्धिमती क्षमा निरुपमा विद्यानवद्या मनो
गाम्भीर्यैकनिकेतनं वितरणं दीनार्तिनिर्दारणम् ।
आसीदर्जुनभूपतेर्विदधतो विद्रावणं विद्विषां
भूमीनामवनं च कारणगुणात्कार्यं यशोऽप्यर्जुनम् ॥ १० ॥
तस्मादाविरभूत्प्रभूतमहिमा भूमीपतेरर्जुनात्
सौजन्यैकनिधिर्गुणैरनवधिर्लावण्यवारांनिधिः ।
भिन्दन् दुर्जनमर्जयन् बहु यशः प्रौढप्रतापोदयै
र्दुर्जेयो मलखाननामनिखिलक्ष्मामण्डलाखण्डलः ॥ ११ ॥
यस्मिन् शासति नीतिभिः क्षितिमिमां निर्वैरमासीज्जगत्
पारीन्द्रेण समं करीन्द्रकलभसारम्भोऽपि सम्भावितः ।
श्येनः क्रीडति कौतुकी स्म विहगैश्चिक्रीड नक्रैर्झषः
किं वान्यद्गहनेऽभवत्सह मृगैः शार्दूलविक्रीडितम् ॥ १२ ॥

हिमविशदयशोभिशोभिताशो
महिमतिरोहितवारिधिप्रभावः ।
समजनि मलखानतः प्रतापे
त्रिजगति रुद्र इव प्रतापरुद्रः ॥ १३ ॥
शुचि धनमर्थिनि सहसा यशसा सममानने गुणो जगतः ।
पुत्रे भूरमिदधे चेतो रुद्रे प्रतापरुद्रेण ॥ १४ ॥
जातः प्रतापरुद्रात्ससमुद्रां पालयन्नवनीम् ।
कृतरिपुकाननदाहो मधुकरसाहो महीपतिः शुशुभे ॥ १५ ॥

पृथुः पुण्याभोगैर्विहितहितयोगैरनुदयत्-
खलायोगैर्योगैः कृतसुकृतियोगैरपि गुरुः ।
भुजस्तम्भालम्बालसयितविश्वम्भरतया
बभौ प्रौढोत्साहः स मधुकरसाहः क्षितिपतिः ॥ १६ ॥
प्रजागणरुजापहो द्युतिमहोदयाविष्कृतः
सुधांशुरिव मांसलो रसभरैः सभारञ्जनः ।
प्रदीप्तकुमुदावलिर्द्विजपतिश्च न क्षत्रपो
नृपो जयति सत्कृपो मधुकरः कृतारित्रपः ॥ १७ ॥
विन्यस्य वीरसिंहे भूपतिसिंहे महीभारम् ।
ज्ञानानलमलदाहो मधुकरसाहो दिवं भेजे ॥ १८ ॥
अन्तर्गम्भीरतान्धूकृतसलिलनिधिर्लालिताशेषबन्धु
र्बुन्देलानन्दसिन्धुः सुललितललनालोचनेन्दीवरेन्दुः ।
भ्रूभङ्गीलेशभङ्गीकृतरिपुनिवहो नृत्यसङ्गीतरङ्गी
सन्मातङ्गी तुरङ्गी धरणिपतिरभूद्वीरसिंहो नृसिंहः ॥ १९ ॥
अमुष्य प्रस्थाने सति सपदि नानेभनिवहै
रिहैकोऽपि द्वेषी न खलु रणरोषी समजनि ।
परं तस्थौ दुःस्थो गहनकुहरस्थोऽपि भयतः
क्षिपन्ननुर्वीदिक्षु भ्रमितचकितं चक्षुरभितः ॥ २० ॥
दानं कल्पमहीरुहोपरि यशः क्षीरोदनीरोपरि
प्रज्ञा शक्रपुरोहितोपरि महासारोऽपि मेरूपरि ।
द्यावामेरूपरि प्रतापगरिमा कामोपरि श्रीरभूत्
सिंहातिक्रमवीरसिंहनृपतेः किं किं न कस्योपरि ॥ २१ ॥
दानैरर्थिनमर्थनाविरहिणं प्रत्यर्थिनं च क्षणात्
कुर्वाणे सति वीरसिंहनिखिलक्ष्मामण्डलाखण्डले ।
कामं चेतसि कामधेनुरतनोत्कल्पद्रुमः कल्पितं
मोघीभूतजनिः समाश्रितवनीश्चिन्तां च चिन्तामणिः ॥२२॥
भ्रामं भ्राममसंभ्रमं त्रिजगतीचक्राणि चक्रे चिरा
च्चारं शीलितविष्णुपादपदवी ब्रह्माण्डभाण्डोपरि ।
ब्रह्माण्डं निजमण्डमण्डलमिवाच्छाद्यैव सैवाधुना
विश्वेषामपि यस्य भास्वरयशोहंसी वतंसीयति ॥ २३ ॥
जलकणिकामिव जलधिं कणमिव कनकाचलं मनुते ।
नृपसिंहवीरसिंहो वितरणरंहो यदा तनुते ॥ २४ ॥

यदा भवति कुण्डलीकृतमहाधनुर्मण्डल
स्तदा नयनताण्डवस्तुतिखण्डवः पाण्डवः ।
मनो वितरणोत्सुकं वहति वीरसिंहो यदा
तदा पुनरुदारवीर्यमवर्णि कर्णो जनैः ॥ २५ ॥

शौर्यौदार्यगभीरताधृतिदयादानादिनानागुणा
नुर्वीमुद्वहमानवत्यधिपतिस्पर्द्धालवोःशालिनि ।
सर्वोऽप्यैव जुहारसिंहधरणीधौरेयचूडामणौ
मज्जन् ब्रह्मणि वीरसिंहसुकृती तस्थौ स्वयं निर्गुणः ॥ २६ ॥

नद्यः स्वादुजला द्रुमाश्च सुफला भूरुर्वरा भूसुरा
वेदध्यानविधूयमानदुरिता लोका विशोका बभुः ।
राजन्नीतिनिरीतिरीति पितरीवोर्वीमिमां शासति
श्रीमद्वीरजुहारसिंहनृपतौ भ्रूभङ्गभग्नद्विषि ॥ २७ ॥

संग्रामोत्कटताण्डवोद्भटभटैरारब्धहेलाहठै
श्चण्डाडम्बरपूरिताम्बरतटक्षीराब्धिगोत्राऽवटैः ।
भूभृत्सिंहजुहारसिंहधरणीजानेः प्रयाणे रणे
शौर्योदार्यधनोऽपि को नु धरणीचक्रे न चक्रे भयम् ॥२८॥

तावद्वीरगभीरहुङ्कृतिरवस्तावद्गजाडम्बर
स्तावत्तुङ्गतुरङ्गरिङ्खणचमत्कारश्चमूनामपि ।
तावत्तोयमहामहीभृदटवीदुर्गग्रहो विद्विषां
यावन्नैव जुहारसिंहनृपतिर्युद्धाय बद्धोत्सवः ॥ २९ ॥

अयं यदि महामना वितरणाय धत्ते धियं
श्रियं कनकभूधरोऽश्नाति ह्रियं च कर्णोऽटति ।
दधीचिरपचीयते बलिरलीकरूपायते
तदातिमलिनायते स किल कल्पभूमीरुहः ॥ ३० ॥

प्रासादागनङ्गागनागमणिभूदानादिनानातपः
प्रागल्भ्येन महेन्द्रचन्द्रवरुणब्रह्मेशविष्णुस्थली ।
प्राचण्ड्येन जिता मिता वसुमती कोदण्डदोर्दण्डयो
र्जानीते जुहारसिंहनृपतिः कुत्र प्रतीपो न वा ॥ ३१ ॥

ब्रह्माभूच्चतुराननः स्मरहरः पञ्चाननः षण्मुखः
स्कन्दो भूपजुहारसिंहयशसो गानोत्सवेऽप्युत्सुकः ।
तस्याभोगमुदीक्ष्य भूधरनभोनद्यस्त्रिलोकी दिशः
सप्तद्वीपमयी मही च विधिना श्लिष्टेन निर्वाहिताः ॥ ३२ ॥

तुङ्गत्वादनवाप्य दैवततरोः पुष्पाणि सर्वाः समं
श्रीमद्वीरजुहारसिंहनृपतेर्दानं समानं जगुः ।
क्रीडावुर्वहभारनिर्भरनमद्ग्रीवे तु देवद्रुमे
श्लाघन्ते सुलभायमानकुसुमास्तं भूरि देवस्त्रियः ॥ ३३ ॥
भीमो यः सहदेव एव पृतनादुर्द्धर्षपार्श्वो लस-
च्छ्रीभूमी नकुलः सदार्जुनमहाख्यातिः क्षमामण्डले ।
कर्णश्रीकृतवर्मभीष्मघटनाशौर्यैर्दुर्योधनो
रोषादेव युधिष्ठिरो यदि भवेत्कः स्यादमुष्याग्रतः ॥ ३४ ॥
सत्कीर्तिप्रामवामाभरणभूतजगद्विक्रमादित्यनामा
धाम्ना भूम्ना महिम्ना विघटितरिपुणा विक्रमोपक्रमेण ।
शुभ्रांशुः पीवरांसः पृथुभुजपरिघस्तस्य वंशावतंसो
विश्वोदञ्चत्प्रशंसो गुणिगणहृदयानन्दनो नन्दनोऽभूत् ॥३५॥
आशापूर्तिं च कुर्वन् करवितरणतः पद्मिनीप्राणबन्धुः
प्रोद्यद्दिव्याम्बरश्रीः स्फुटमहिमरुचिः सर्वदाध्वस्तदोषः ।
जम्भारातेरिहोच्चैरचलसमुदयात्सुप्रभातप्रकाशी
पुत्रो राज्ञः पवित्रो रचयति सुदिनं विक्रमादित्य एव ॥३६॥
सार्थीकुर्वन्निरर्थीकृतसुरविटपी चार्थिसार्थं निजार्थैं
र्व्यर्थीभूतारिपृथ्वीपतिरमरगुरुस्पर्द्धिवर्द्धिष्णुबुद्धिः ।
मानैर्यानादिदानैर्बहुविधगुणिभिर्गीयते यः सभायां
प्रातर्जातः स भूपः सुकविकुलमुदे विक्रमादित्य एव ॥३७॥
दानं दीनमनोरथावधि रणारम्भोऽरिनाशावधि
क्रोधो वागवधि प्रतापयशसोः पन्था दिगन्तावधि ।
दाक्षिण्यं क्षितिरक्षणावधि हरौ भक्तिश्च जीवावधि
व्यालुप्तावधि वीरविक्रमरवेः श्रेयः परं वर्द्धते ॥ ३८ ॥
हेमाद्रेः श्रियमन्यथैव कुरुते चक्रे च गौरीं तनुं
कैलासोपरि शोभते पटयति स्पष्टं च दिङ्मण्डलम् ।
भोगीन्द्रं न दधे श्रुतौ बत जटागूढां च गङ्गां व्यधा
ल्लोकानामयमीश्वरोऽस्य यशसस्त्वैश्वर्यमुज्जृम्भते ॥३९॥
श्रीगोपाचलमौलिमण्डलमणिः श्रीदूरवारान्वये
श्रीहंसोदयहंसपण्डित इति ख्यातो द्विजाधीश्वरः ।
यं लक्ष्मीश्च सरस्वती च विगतद्वन्द्वं चिरं भेजतु
श्रीकारं रभसात्समानमुभयोः साम्नाऽपमायं गुणैः ॥ ४० ॥
पट्टु दिक्षु विदिक्षु कुर्वतीनां नटलीलां स्फुरत्कीर्तिनर्तकीनाम् ।

स्फुरदध्वरधूमधोरणीह स्फुटवेणीति जनैरमानि यस्य ॥ ४१ ॥

ततो नल इवारणेरतुलधामभूर्भूभुजां
शिरोमणिरहोमणिर्धरणिनामवामप्रवः ।
रणी बहुगुणी धनी भुवि वनीपकश्रीजनी
रमारमणमिश्रणी परशुराममिश्रोऽजनि ॥ ४२ ॥

येनागत्य पुरा पुरारिनगरे विद्याऽनवद्याऽर्जिता
श्रीचण्डीश्वरमग्निहोत्रितिलकं लब्ध्वा गरीयोगुरुम् ।
शुद्धा सैव महोद्यमेन बहुधा भान्ती भवन्ती स्थिरा
तद्वंश्येषु कियच्च कल्पलतिकेवाद्यापि सूते फलम् ॥ ४३ ॥

आस्यारविन्दमनुपास्य गुरोरपास्य
लास्यं चतुर्मुखमुखेषु सरस्वतीह ।
सालङ्कृतिश्च सरसा च गुणान्विता च
यस्याऽऽतनोति रसनोपरि ताण्डवानि ॥ ४४ ॥

अङ्के कोमलतेव सीमनि दृशोरेकैव रेखाञ्जनी
कस्तूरी मकरीव भालफलके धारेव मूर्धालकी ।
ऊर्ध्वं भृङ्गपरम्परेव कवरीसौरभ्यलोभाकुला
यस्यैवाध्वरधूमधोरणिरभूदाशाकुरङ्गीदृशः ॥ ४५ ॥

सुभासुरयशोनिधेः सुनिरवद्यविद्यानिधेः
सुचारुकवितानिधेः स्मृतिनिधेः श्रुतिश्रीनिधेः ।
अयं सुकृतगौरवात्परशुराममिश्राद् गुणै-
रनूनमहिमा पितुर्जगति मित्रमिश्रोऽजनि ॥ ४६ ॥

धर्मार्थैकनिकेतनं विधिमयं कर्मावलीदर्शनं
स्मृत्यम्भोजमहोदयं श्रुतिमयं श्रीवीरमित्रोदयम् ।
द्राक्सिद्धीकृतशुद्धसिद्धिरतया श्रीवीरसिंहाज्ञया
तेने विश्वमुदे पुरे पुरभिदः श्रीमित्रमिश्रः कृती ॥ ४७ ॥

भूमण्डलाखण्डलवीरसिंहनृपाज्ञया हंसकुलावतंसः ।
श्रीमित्रमिश्रः कृतशुद्धबुद्धिः शुद्धिप्रकाशं विशदीकरोति ॥४८॥

आदौ शुद्धिस्वरूपोक्तिस्तद्भेदोऽथ विवेचितः ।
रजस्वलाशौचविधिस्ततस्तद्धर्मकीर्तनम् ॥
रजोविशेषतः शुद्धिविशेषोऽथ निरूपितः ।
गर्भस्रुताघशौचं च बालाद्याशौचमेव च ॥
कन्याशौचं चाथ कथितं सम्पूर्णाशौचमेव च ।
अथासापिण्ड्याशौचं तु सगुणागुणभेदतः ।

व्यवस्था कथिता वर्णसन्निपातेऽप्यशुद्धता ॥
कथिताथ विदेशस्थाशौचं सम्यङ्‌निरूपितम् ।
मृत्योर्विशेषेऽशौचं च शवानुगमने तथा ॥
तन्निर्हाराशुचित्वं च तथाशौचस्य सङ्करः ।
विधिश्चाथ निषेधश्च तथाशौचे निरूपितौ ॥
महागुरुनिपाते च विशिष्याशौचकीर्तनम् ।
अशौचकालास्पृश्यत्वनिर्णयस्तदनन्तरम् ॥
सद्यः शौचं तथा भूमिशुद्धिश्चापि निरूपिता ।
उदकस्य तथा शुद्धिः स्वभावेन च शुद्धयः ॥
तैजसादिद्रव्यशुद्धिरत्यन्तोपहते तथा ।
शुद्धिरुक्ताथ पक्वान्नशुद्धिश्चापि निरूपिता ॥
देहशुद्धिरथ प्रोक्ता ततः प्रक्षालनादिना ।
शुद्धिरुक्ताथ शारीरं शौचं चापि निरूपितम् ॥
तत्र आचमनस्याथ कल्पश्च सुनिरूपितः ।
अपवादश्च तस्याथ स्नानशुद्धिस्ततः परम् ॥
मुमूर्षुकृत्यं च ततः प्रसङ्गेन निरूपितम् ।
आहिताग्नौ मृते मर्त्ये कृत्यं कातीयशाखिभिः ॥
निरूपितं तथा स्मार्ताग्नियुक्ते तन्निरूपितम् ।
तथा बह्वृचशाखीये श्रौताग्निसहिते मृते ।
कृत्यं निरूपितं स्मार्ताग्नियुक्तेऽपि मृते तथा ॥
छन्दोगेये ततः श्रौताग्नियुक्ते मृतके सति ।
कथितं तन्त्रतः स्मार्ताग्नियुक्तेऽस्मिन् मृते तथा ॥
सर्वेषां च निरग्नीनां मृतौ कृत्यं निरूपितम् ।
सूतिकानां मृतौ कृत्यविशेषोऽथ निरूपितः ॥
रजस्वलामृतौ चाथ गर्भिण्याश्च मृतौ तथा ।
भर्त्रा सह सतीनां च गमनेऽनुगतौ तथा ॥
प्रकारश्चिन्तितः पश्चात्प्रोषिते मृतके सति ।
कृत्यप्रकारो निपुणं विस्तरेण निरूपितः ॥
मृतेर्विशेषे कृत्यानां विशेषोऽथ प्रपञ्चितः ।
तत्रादौ कथितः सम्यङ्नारायणबलेर्विधिः ॥
सर्पदंशकृतौ कृत्यविशेषोऽथ सुभाषितः ।
पञ्चकान्तर्मृतौ पश्चात्त्रिपुष्करमृतौ तथा ॥

अथ त्रिपादमरणे तद्विशेषो निरूपितः ।
व्याघ्रादिना मृतौ दानान्यथोक्तानि पृथक् पृथक् ॥
ततः सलिलदानोक्तिरस्थिसञ्चयनं ततः ।
नवश्राद्धमथाशौचान्ताहकृत्यं निरूपितम् ॥
एकादशाहिकश्राद्धान्यनुप्रोक्तान्यनन्तरम् ।
मृतशय्यादानविधिर्वृषोत्सर्गस्ततः परम् ॥
षोडशश्राद्धकथनमुदकुम्भविधिस्ततः ।
सपिण्डीकरणं चाथ विस्तरेण निरूपितम् ॥
शुद्धिप्रकाश एतस्मिन्नर्था एते महाशयैः ।
प्रसक्तानुप्रसक्ताश्चान्ये मित्रमिश्रैः प्रकाशिताः ॥

तत्र शुद्धिर्नामाशौचसंसर्गाभावः । आशौचं च सन्ध्यापञ्चमहायज्ञादिकर्मानधिकारसम्पादकोऽतिशयविशेषः । स च चेतने जननमरणास्पृश्यस्पर्शाद्याहितोऽदृष्टविशेष एव, ताम्रकांस्याद्यचेतने तु प्रोक्षणादिजन्यो व्रीहिष्विव चाण्डालाद्यस्पृश्यस्पर्शादिजन्योऽम्लादिसंसर्गनाश्यश्चाधेयशक्तिविशेषो न त्वदृष्टं, तस्य चेतनगुणत्वात् । उभयत्रापि वा चेतनाचेतनयोर्धर्माऽधर्मविलक्षणाधेयशक्तिविशेष एवातिशयः । तस्य सुखदुःखान्यतरजनकत्वे प्रमाणाभावेन धर्माधर्मरूपत्वाभावात् । (१)अस्तु वा तत्तच्चाण्डालाद्यस्पृश्यसंसर्गोत्पत्तिकालीनयावदम्लादिसं-

(१) अत्र ताम्रादावम्लसंयोगे सत्यप्यस्पृश्यसंसर्गाद्यसमयध्वंसस्य सत्त्वेन तदानीमशुचित्वव्यवहाराभावाद् विशिष्टान्तं ध्वंसविशेषणतयोपात्तम् । तथा च तदानीं यावदभावान्तर्गताम्लसंयोगप्रागभावस्य सत्त्वान्न निरुक्तव्यवहारापत्तिः । ध्वंसात्यन्ताभावगोर्ध्वंसविरहेणास्पृश्यसंसर्गोत्पत्तिकालीनयोस्तयोरम्लसंयोगकालेऽपि सत्त्वेन तदानीमप्यशुचित्वव्यवहारापत्तिरिति यावत्पदोपादानम् । भेदघटिताभावकूटनिवेशे गौरवात् संसर्गपदं कूटलाघवार्थम् । अतीतप्रागभावभाविध्वंसघटितकूटस्य कस्यापि ताम्रादेरसत्त्वात् कदापि कुत्राप्यशुचित्वव्यवहारो न स्यादिति कालीनान्तं संसर्गाभावविशेषणम् । चण्डालस्पर्शक्षणे तत्पूर्वक्षणे वाऽशुचित्वव्यवहारवारणाय विशेष्यदलम् । न च निरुक्तकालीनत्वविशिष्टाम्लादिसंसर्गाभावकूटविवक्षणान्नोक्तदोष इति वाच्यम् । तथाविवक्षणे चाण्डालस्पर्शद्वितीयादिक्षणेऽपि अशुचित्वव्यवहारो न स्यात्, निरुक्तोत्पत्तिकालीनत्वविशिष्टकूटस्य द्वितीयादिक्षणेऽसत्त्वात् । अनुगमश्चात्र—अस्पृश्यसंसर्गोत्पत्तिध्वंसोविशिष्टकूटत्वम् । तच्चाशुचित्वव्यवहारप्रयोजकतावच्छेदकम् । वैशिष्ट्यं च स्वाधिकरणकालनिष्ठाधिकरणतानिरूपितावच्छेदकत्व स्वप्रतियोग्युत्पत्तिकालीनाम्लादिसंसर्गाभावत्वावच्छिन्नानुयोगितकपर्याप्तित्वोभयसम्बन्धेनेति सङ्क्षेप इति ।

सर्गाभावविशिष्टस्तच्चाण्डालाद्यस्पृश्यसंसर्गाद्यसमयध्वंस एव सः । अतश्च शुक्तं सर्वेषाममीषां तत्तत्ताम्रकांस्यादिद्रव्याङ्गकसम्बन्धादिसुकृतविरोधित्वादाशौचपदवाच्यत्वम् । अतस्तत्संसर्गाद्यभाव एव शौचमिति सिद्धम् । हारलतादयोऽप्येवम् ।

रुद्रधरादयस्तु शुद्ध्यशुद्ध्योरुभयोरपि भावरूपत्वमेव न त्वितरस्येतराभावत्वं विनिगमकाभावादित्याहुः ।

तत्र शौचस्यातिरिक्तत्वे चाण्डालादिस्पर्शनिमित्तकस्नानाचमनादेस्तज्जन्याशौचनिवर्तकत्वेनोभयवादिसिद्धस्य शौचस्यान्यत्वरहेतुत्वकल्पनापत्तेः । अन्यथा "चान्द्रायणेन शुद्धिः स्यात्" इत्यादिप्रायश्चित्तेऽपि पुण्यान्तरोत्पत्तिप्रसंगः । अथ तत्र पापाभाववदस्त्येव लाघवाच्छुद्धिपदप्रयोगो न तु पुण्यान्तरोत्पत्तिः; गौरवापत्तेरिति प्रकृतेऽपि दीयतां दृष्टिः । अत एव न कर्माङ्गाचमनादौ शुद्धिपदप्रयोगः । तस्य प्रयाजादिवद्द्वारानुपकारकत्वादिति दिक् ।

तत्र शुद्धिभेदानाह ।

हारीतः ।

द्विविधमेव शौचं भवति बाह्यमाभ्यन्तरं च । तत्र बाह्यं त्रिविधं कुलशौचमर्थशौचं शारीरं च, सूतकमृतकयोर्दशरात्रमुभयतः कुलस्याशौचम् ।आभ्यन्तरं भावशुद्धिः। अर्थशौचं द्रव्यशुद्धिः। शारीरं=अस्पृश्यस्पर्शनाद्यशौचाभावः । तत्र कुलशौचप्रतियोगिनमाह सूतकेति । उभयतः=उभयोः सूतकमृतकयोरित्यन्वयः । दशरात्रमिति त्र्यहादेरप्युपलक्षकम् । सूतकादिग्रहणं रजस्वलादेरुपलक्षकम् । न च तच्छारीरान्तःपाति, मनुना जननाद्याशौचप्रकरणे रजस्वलाशौचस्याभिहितत्वात् । न च रजस्वलाशौचस्य स्त्रीमात्रनिष्ठत्वेन कथं कुलाशौचान्तःपातित्वं, प्रथमादिमासीयगर्भस्रावाशौचवत्स्त्रीमात्रनिष्ठत्वेऽपि कुलाशौचत्वोपपत्तेः । कुलाशौचत्वं च तादृशव्यवहारविषयत्वमेव मन्त्रलक्षणादिवदिति निबन्धकाराः । अत्र चाशौचे निमित्तनिश्चय एव प्रयोजको न तु निमित्तोत्पत्तिमात्रम् "भिन्ने जुहोति" इत्यादौ निमित्तनिश्चयस्यैव प्रयोजकत्वात् ।

किंच ।

अज्ञातस्य जननादेराशौचनिमित्तत्वे देशान्तरीयनिमित्तशङ्कया सर्वदा विहितकर्मानुष्ठानं न स्यात् । अत एव "देशान्तरगतं श्रुत्वा" इत्यादौ श्रुत्वेत्युक्तम् । एवं च निमित्तनिश्चयस्यैवाशौचप्रयोजकत्वे सिद्धे दशाहाभ्यन्तरे तन्निश्चये न्यायेन प्राप्तस्यापि तत एवाशौचदिनगणनस्य वचनाद्बाधः । किन्तूत्पत्तिदिनमारभ्यैव गणनम् । एवमन्यत्रापि न्यायेनान्यथा प्राप्तौ अन्यथात्वं वाचनिकं द्रष्टव्यम् ।

अथ रजस्वलाशौचम् ।

तत्र रजःस्वरूपोत्पत्तिस्तावत्ससङ्ग्रहमते ।

दशवर्षाधिका कन्या भवत्येव रजस्वला ॥
बहिःपुष्पास्फुटीभावदन्तः पुष्पं स्फुरत्यपि ।
वह्निर्दीपशिखायोगाद्भेदः कोशस्य दृश्यते ॥

तथा—

वर्षद्वादशकादूर्ध्वं यदि पुष्पं बहिर्न हि ।
अन्तःपुष्पं भवत्येव पनसोदुम्बरादिवत् ॥
अतस्तु तत्र कुर्वीत तत्सङ्गं बुद्धिमान्नरः ।

रजोनिमित्तमाशौचमाह ।

वसिष्ठः ।

रजस्वला त्रिरात्रमशुचिर्भवति । अत्र रजोनिश्चयस्यैवाशौचनिमित्तत्वमित्युक्तम् ।

प्रजापतिरपि ।

अविज्ञाते मले सा चेन्मलवद्वसना यदि ।
कृतं गेहेषु जुष्टं स्याच्छुद्धिस्तस्यास्त्रिरात्रतः ॥
निःसन्दिग्धे परिज्ञाते आर्तवे शुद्धिकारणम् ।
सन्देहमात्रे स्नानं स्यादित्युवाच प्रजापतिः ॥

मलेऽविज्ञाते सति स्त्री यदि मलवद्वसना भवेत्तदा तथा चेद् गृहे किञ्चित्कार्यं कृतं स्यात् तज्जुष्टमेव शुद्ध्येवेत्यर्थः । आर्तवे परिज्ञाते तस्यास्त्रिरात्रतः शुद्धिः, स्नानं स्यात् शुद्धिकारणमित्यन्वयः । रात्रौ तु तन्निश्चये यदि अर्द्धरात्रात्पूर्वं रजोदर्शनं तदा पूर्वदिनम् । ऊर्ध्वं चेदुत्तरमित्येकः पक्षः । रात्रिं त्रिभागां कृत्वा तृतीयभागेनोत्तरं नो चेत् पूर्वं इति द्वितीयः । यामत्रये चेत्पूर्वं चतुर्थे परमिति तृतीयः । उदयात्पूर्वं चेत्पूर्वदिनम्, ऊर्ध्वंचेदुत्तरमिति चतुर्थः ।

कश्यपः ।

अर्द्धरात्रावधिः कालः सूतकादौ विधीयते ।
रात्रिं कुर्यात्त्रिभागां तु द्वौ भागौ पूर्व एव तु ॥
उत्तरोऽशः प्रभातेन योज्यते ऋतुसूतके ।

कात्यायनः ।

रात्र्याश्चतुर्थभागात्प्राग्यदि वाससि योषितः ।
मलः स्याज्जेत्त्रिभागेण पूर्वेणाह्ना विशुध्यति ।
अर्थाच्चतुर्थभागे चेदुत्तरेणेति लक्ष्यते ।

तथा कश्यप एव ।

रात्रावेव समुत्पन्ने मृते रजसि सूतके ।
पूर्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः ॥

एषां पक्षाणां देशाचाराद्व्यवस्था ।

अथ रजस्वलाधर्माः ।

रजस्वला त्रिरात्रमशुचिर्भवति, सा नाञ्जीत, नाभ्यञ्जीत, नाप्सु स्नायात्, अधः शयीत, न दिवा स्वप्यात्, न ग्रहान्निरीक्षेत, नाग्निं स्पृशेत्, न रज्जुं सृजेत्, न दन्तान्धावयेत्, न हसेत्, न किञ्चिदाचरेत्, अखर्वेण पात्रेण पिबेत्, नाञ्जलिना पिबेत्, न पात्रेण लोहितायसेन चेति । मदनपारिजातादौ तु । अञ्जलिना वा पिबेत्पात्रेण लोहितायसेन पिबेदिति पाठः । अत्र खर्वेणेति खर्वस्य सूक्ष्मस्य मृन्मयस्य प्रतिषेधः । खर्वो वामहस्त इति रत्नाकरः । लोहितायसं ताम्रम् ।

पैठीनसिः ।

न नखान्निकृन्तयेन्नोपमार्जयेत्, न स्रजं सृजेत्, न गन्धान्सेवेत, न पर्णेन पिबेन्न गोपीथेनेति । गोपीथो गोवन्मुखेन पानम् ।

हारीतः ।

भूमौ कार्ष्णायसे मृन्मये वाऽश्नीयात् । कार्ष्णायसम्=अयःपात्रम् ।

अङ्गिराः ।

हस्तेऽश्नीयान्मृन्मये वा हविर्भुक् क्षितिशायिनी ।

स्मृतिमञ्जर्याम् ।

तस्मादुदक्यया सार्द्धं नैकगेहे तु संवसेत् ।
प्रतिग्रहं च संवादमस्या अन्नं च वर्जयेत् ॥
रजस्वलां पतिर्गच्छेच्चाण्डालो जायते सुतः ।
आर्तवाभिप्लुतास्नाताजातस्त्वप्सु मरिष्यति ॥
तैलेनाभ्यञ्जनं कुर्यात्कुष्ठरोगी प्रजायते ।
आर्तवे चेत्खनेद्भूमिं स्वल्पायुर्जायते नरः ॥
नेत्रयोरञ्जनं कुर्यात्काणो वान्धश्च जायते ।
पुष्पिणी दन्तधावी स्याज्जायते श्यावदन्तकः ॥
नखानां कृन्तनं कुर्यात् कुनखी जायते सुतः ।
ऋतौ रज्ज्वादिकच्छेदं कुर्यात्क्लीबः प्रजायते ॥
तन्तूनां सृजते रज्जुमुद्बन्धनमृतो भवेत् ।
पर्णपात्रेऽन्नमश्नीयादुन्मादी तेन जायते ॥
खर्वे शरावे भुञ्जीयाद्वामनो वा प्रजायते ।

उदक्या पललं क्षौद्रं गन्धं पुष्पं घृतं त्यजेत् ॥
प्रवासं स्नातवा नारी ग्रहाणामीक्षणं त्यजेत् ।

एते च गन्धादिनिषेधा द्वितीयादिरजोदर्शनविषयाः । प्रथमे तद्ग्रहणस्य संस्कारप्रकाशे उक्तत्वात् ।

अत्र च चण्डालस्पर्शग्रहणादिनिमित्तकस्नानप्राप्तौ प्रकारमाह ।

पराशरः ।

स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।
पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥
सिक्तगात्रा भवेदद्भिः साङ्गोपाङ्गा कथञ्चन ।
न वस्त्रपीडनं कुर्यान्नान्यद्वासश्च धारयेत् ॥
व्रतं रजस्वलानियमम् ।

अशुचिदिनत्रये विशेषमाह स एव ।

प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी ॥
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति ।

अत्र चाण्डाल्यादिशब्दः तद्गमनादिप्रायश्चित्ततुल्यप्रायश्चित्तप्राप्त्यर्थं इति माधवः ।

चतुर्थेऽहनि च स्नानोत्तरं शुद्धिः, शौचं कृत्वा क्षत्रियादिस्त्री पादन्यूनमृत्तिकाभिर्विधवा द्विगुणाभिः शौचं कृत्वा मलं प्रक्षाल्य दन्तधावनपूर्वकं सङ्गवे स्नायात् । स्नानोत्तरं कर्तव्यमुक्तम्—

स्कन्दपुराणे ।

सुस्नाता भर्तृवदनमीक्षेन्नान्यस्य कस्य चित् ।
अथ वा मनसि ध्यात्वा पतिं भानुं विलोकयेत् ॥

ज्वराद्यभिभवे—

उशनाः ।

ज्वराभिभूता या नारी रजसा च परिप्लुता ।
कथं तस्या भवेच्छौचं शुद्धिः स्यात् केन कर्मणा ॥
चतुर्थेऽहनि संप्राप्ते स्पृशेदन्या तु तां स्त्रियम् ।
सा सचैला वगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ॥
दशद्वादशकृत्वो वा आचमेच्च पुनः पुनः ।
अन्ते च वाससां त्यागस्ततः शुद्धिर्भवेत्तु सा ॥
दद्याच्छक्त्या ततो दानं पुण्याहेन विशुद्ध्यति ।

अयं च स्नानप्रकार आतुरमात्रस्य शुद्ध्यर्थकस्नानप्राप्तौ ज्ञेयः ।

आतुरे स्नान आपन्ने दशकृत्वो ह्यनातुरः ।

स्नात्वा स्नात्वा स्पृशेदेनं ततः शुध्येत् स आतुरः ॥

इति पराशरवचनात् । अन्ते च वाससां त्यागोऽसंभवाद्विषयः । यत्तु "वासोभिर्दृशभिश्चैव परिधाय यथाक्रमम्" इत्यत्रिवचनं तत्संभवद्विषयम् ।

अत्र येयं चतुर्थेऽहनि स्नात्वा शुद्धिः सा रजोनिवृत्त्यभावेऽपि भर्तृशुश्रूषादौ स्पर्शादौ च ज्ञेया । दैवपित्र्यकर्माधिकारस्तु परत एव ।

स्नाता रजस्वला या तु चतुर्थेऽहनि शुद्ध्यति ।
कुर्याद्रजोनिवृत्तौ तु देवपित्र्यादिकर्म च ॥

इति पराशरवचनात् । चतुर्थेऽहनि भर्तृशुश्रूषादाविति शेषः । "चतुर्थेऽहनि संशुद्धा भवति व्यावहारिकी" इति स्मृतेः । "शुद्धा भर्तुश्चतुर्थेऽहि स्नानेन स्त्री रजस्वला" इति स्मृतेश्च । एवं च "रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला" इति मनुवचनमपि दैवादिविषयमेव व्याख्येयम् । यत्तु "दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति" इत्यापस्तम्बवचने पञ्चमग्रहणं तद्रजोनिवृत्तिकालोपलक्षणम् । एकवाक्यतायां लाघवात् । ऋतुगमनस्य तु दैवादिभिन्नत्वेऽपि चतुर्थे निषेधः, "आद्याश्चतस्रश्च वर्जयेत्" इति वचनात् ज्ञेयः । मिताक्षराद्येवम् । मदनपारिजाते तु चतुर्थरात्रावपि गर्भाधानमिच्छन्तीति हारीतवचनात् ऋतुगमनस्य चतुर्थेदिने विकल्पः । स च व्यवस्थितः । रजोनिवृत्तौ विधिः, अनिवृत्तौ तु प्रतिषेधः । स्पर्शादिविषये तु पूर्वोक्तैव व्यवस्थेत्युक्तम् । अन्येतु स्पर्शादिविषये यथोक्तैव व्यवस्था । दैवपित्र्यविषये तु पञ्चमेऽहनि एव रजोनिवृत्तौ शुद्धिः, न तु चतुर्थे दिने रजोनिवृत्तावपि, नवा पञ्चमेऽहनीति रजोनिवृत्तिकालोपलक्षणम् । पञ्चमेऽहनीति वाक्यस्य रजोनिवृत्तिवाक्यस्य चोपसंहारेणापि एकवाक्यतालाभे उपलक्षणत्वेन विवक्षायां प्रमाणाभावात् । अतश्च पञ्चमादिदिन एव रजोनिवृत्तौ शुद्धिः, अनिवृत्तौ त्वशुद्धिरेव दैव पित्र्ये च कर्मणीत्याहुः ।

ये तु चतुर्थे स्पर्शादौ शुद्धिः । पञ्चमे दैवादौ शुद्धिः, रजोनिवृत्तेस्तु न व्यवस्थायामुपयोग इति वदन्ति । तन्मते "रजस्युपरत" इत्यादिमन्वादिवचनानां का गतिरिति न विद्मः । एकरजोदर्शनोत्तरं सप्तदश दिनमध्ये पुनारजोदर्शने नाशौचम् । अष्टादशाह एकाहः । एकोनविंशे द्व्यहः । ततस्त्रिरात्राच्छुद्धिः ।

तथा चात्रिः ।

रजस्वला यदि स्नात्वा पुनरेव रजस्वला ।
अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥

एकोनविंशतेरर्वागेकाहः स्यात्ततो द्व्यहम् ।
विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत् ॥

सप्तदशदिनपर्यन्तमाशौचाभावेऽपि स्नानमात्रमाचारात् ज्ञेयम् । यत्तु "चतुर्दशादिनादर्वागशुचित्वं न विद्यते" इति स्मृत्यन्तरं तत्स्नानदिनमारभ्य ज्ञेयम् । अयं चाशुचित्वप्रतिषेधो यस्या विंशतिदिनोत्तरकालमेव प्रायशो रजोदर्शनं तद्विषयम् ।

यस्याः पुनरारूढयौवनायाः प्रागेवाष्टादशदिनात्प्राचुर्येण रजोनिर्गमस्तस्या अशौचमाह ।

कश्यपः ।

त्रयोदशादिनादूर्ध्वं रजो दृष्टवती यदि ।
अष्टादशाहात्प्राग्वापि युवत्याः स्यात्त्रिरात्रकम् ॥
एकादशाहे त्वेकाहं द्विरात्रं द्वादशेऽहनि ।
ऊर्ध्वं त्रिरात्रं विज्ञेयमिति कुण्डलिनो मतम् ॥

अथ रजोविशेषेण शुध्यपवादः ।

तत्र रजोभेदास्तावत् ।

माधवीये स्मृतिः ।

रागजं रोगजं चैव कालोत्पन्नं तथैव च ॥
द्रव्यजं चैव संप्रोक्तं रजस्तुर्धा प्रदर्श्यते ।

एतेषां लक्षणमाह सैव ।

अर्वाक् प्रसूतेरुत्पन्नं मेदोवृद्ध्याङ्गनासु यत् ।
तद्रागजमिति प्रोक्तं प्रजोत्खेदसमुद्भवम् ॥
अत्यर्थं यद्रजः स्त्रीणां तद्रोगजमिति स्मृतम् ।
अष्टादशादिनादूर्ध्वं स्नानप्रभृतिसंख्यया ॥
यद्रजस्तु समुत्पन्नं तत्कालोत्पन्नमुच्यते ।
भेषजद्रव्यस्य वैषम्याद्धातुवैषम्यसंभवम् ॥
द्रव्यजं रज इत्युक्तं तत्कादाचित्कसंभवम् ।

अत्र येयं शुद्धिरुक्ता सा कालजरजोवद्रागजेऽपि ज्ञेया । आशौचप्रापकसामान्यवाक्यस्यापवादकाभावात् । रोगजे तु विशेषः ।

रोगेण तु रजः स्त्रीणामन्वहं तु प्रवर्तते ।
नाशुचिः सा ततस्तेन तत्स्याद्वैकालिकं यतः ॥

इति पराशरस्मृतेः । वैकालिकं रजोदर्शन उत्सर्गतो यः कालः तद्भिन्नकालिकमित्यर्थः । इदं चाशुचित्वाभावप्रतिपादनं स्पर्शादिविषयम् ।

दैवादौ तु रजोनिवृत्तिपर्यन्तमशुचित्वमस्त्येव ।

साध्वाचारा न तावत्स्त्री रजो यावत्प्रवर्तते ।
रजोनिवृत्तौ गम्या सा गृहकर्माणि चैव हि ॥

इति रोगरजोऽनुवृत्तौ तेनैवाभिधानात् । साधुराचारो दैवादिरूपः । गृहकर्मणि=पाकादौ ।

द्रव्यजे त्वाह ।

अङ्गिराः ।

आद्वादशाहान्नारीणां मूत्रवच्छौचमिष्यते ।
अष्टादशाहात्स्नानं स्यात्त्रिरात्रं परतोऽशुचिः ॥
एतत्तु द्रव्यजे विद्याद्रोगजे पूर्वमीरितम् । इति ।

अथ गर्भस्रावाशौचम् ।

तत्र मनुः ।

रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति ।

मासतुल्या यावन्तो गर्भग्रहणमासास्तत्समसंख्याका रात्रय इत्यर्थः। रात्रिपदमाशौचप्रकरणे सर्वत्राहोरात्रपरम् । एवमहःपदमपि ज्ञेयम् । अत्र च स्रवतिधातुर्यद्यपि द्रवद्रव्याधःपतने सर्वत्र प्रयुज्यते, तथापि उपक्रमे रात्रिभिरिति बहुवचनोपादानादत्र लिङ्गसमवायाद् द्रवाद्रवसाधारणेऽधःपतनमात्रे प्रवर्तते । द्रवत्वस्य प्रथममास एव सत्त्वेन तन्मासतुल्यरात्रिबहुत्वानुपपत्तेः । अतश्चेदं वचनं तृतीयादिमासविषयमेव ।

अत एव ।

गर्भस्रुत्यां यथामासमचिरे तूत्तमे त्रयः ।
राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव च ॥
अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्तिता ।

इति मरीचिवचनेऽपि "यथामासम्" इति मनुवचनैकवाक्यतया तृतीयादिमासपरमेव । अतश्चाचिर इत्यनेन चिरपदगम्यतृतीयादिभिन्नप्रथमद्वितीययोरेव ग्रहणम् । तत्रोत्तमे ब्राह्मणजातीयायां त्रयः । राजन्यादौ चतूरात्रादि विज्ञेयम् । तृतीये तु मासे सर्वेषां वर्णानां त्र्यहम् । चतुर्थे चतुरहं, पञ्चमे पञ्चाहं, षष्ठे षडहम् ।

षण्मासाभ्यन्तरं यावद्गर्भस्रावो भवेद् यदा ।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥
अत ऊर्ध्वं स्वजात्युक्तं तासामाशौचमिष्यते ।

इतिवचनात् । मिताक्षराकुल्लूकभट्टादयोऽप्येवम् । हरधरादयस्तु "मासतुल्याभिः" इत्यस्य यावन्तो मासा अतीतास्तावत्संख्याकाभी रात्रिभिरित्यर्थः । ततश्च तृतीयमासे गर्भस्रावेऽपि द्वयोरेवातीतत्वाद्बहुवचनानु-

पपत्तेश्चतुर्थादिविषयाण्येव मन्वादिवचनानि । अतश्च मरीचिवचनेऽचि-रपदेन तृतीयमासस्यापि ग्रहणात् । तत्रापि वर्णभेदेनाशौचभेदो ज्ञेयः । चतुर्थादौ तु त्र्यहाद्याशौचं सर्ववर्णसाधारणम् । अत एव ।

आचतुर्थाद्भवेत् स्रावः पातः पञ्चमषष्ठयोः ।

अत ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत् ।

इति पराशरपरिभाषितस्रावे—

मरीचिना ।

स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्ज्जनम् ।

पाते मातुर्यथामासं सपिण्डानां दिनत्रयम् ॥

इति त्रिरात्रविधानमुपपद्यते । अन्यथा हि चतुर्थे मासे चतुरहस्वी-कारे परिभाषितस्रावे त्रिरात्रविधानं नोपपद्येतेत्याहुः ।

माधवादयस्तु "मासतुल्याभिः" इत्यादौ यावन्तो मासा अतीता इति न विवक्षितम् ।

यावन्मासं स्थितो गर्भो दिनैस्तावत्तु सूतकम् ।

इति पराशरवचनाद्गर्भस्य माससम्बन्धमात्रप्रतीतेरतीतलक्षणायां प्र-माणाभावात् । अतश्च यावन्तो गर्भग्रहणमासास्तावत्समसंख्याकदिन-मशौचमित्येवार्थः । न चैवं मनुवचनस्य रात्रिभिरिति बहुवचनोपपत्ते-स्तृतीयादिमासविषयत्वं स्यादिति वाच्यम् । "गर्भमाससमा रात्रीः स्रंसने गर्भस्य त्र्यहं वा" इतिगौतमोक्तपक्षद्वयस्य षट्सु मासेषु समं स्या-दश्रुतत्वादिति न्यायेनैकैकमासत्रयपरत्वेनाद्यस्यापि माससमा रात्री-रिति पक्षस्य वचनानुरोधाच्चतुर्थादिविषयत्वप्रतीतेस्तदेकवाक्यतया मन्वादिवाक्यानामपि चतुर्थादिविषयत्वम् । ततश्चतुर्थादौ चतुरहाद्य-शौचम् । यत्तु "स्रावे मातुस्त्रिरात्रं स्यात्" इतिवचनं तच्च स्रावाशौ-चविधानपरम् सपिण्डवर्जनपरत्वात् । उभयविधाने वाक्यभेदापत्तेस्त-दनुरोधेन त्रिरात्रस्यापि मासत्रयस्थस्यैवानुवादोपपत्तिः । अतश्चाचिर इत्यनेनापि तद्भिन्नमासत्रयाभ्यन्तर एव वर्णभेदेनाशौचभेदो विधीयते इत्याहुः ।

यत्त्वत्र केचिदुक्तं सर्वेष्वेषु पक्षेषु प्रथमद्वितीयादौ क्षत्रियादीनां चतूरात्रादि तृतीयादौ त्र्यहादीतिवैलक्षण्यप्रसङ्गादचिरपदं द्वितीयमा-सपरमेव, यथामासमित्यपि अविशेषात्प्रथममासमारभ्य षड्मासपर्यन्तं हृद्यार्थं कर्माणि माससमसंख्यदिनाशौचविधानपरम् । अतश्च प्रथमे ए-काहप्राप्तावहोरात्रं वा गर्भसंस्रव इति यमवचनमपि सङ्गच्छते । अचिर इत्यनेन तु द्वितीय एव मासि अहृद्यार्थे वर्णभेदेन एकाद्वित्रिषड्रात्रम-

धिकं विधीयते । अतश्च प्रथमतृतीयादिमासेष्वपि वैयर्थ्यपरिहारार्थं मासममसंख्यदिनाशौचापेक्षया अधिकं देवादिकर्माणि एकद्वित्रिषड्-रात्रमाशौचं कल्पनीयमिति । तन्मनुवचनस्य बहुवचनानुरोधेन तृतीयादिपरत्वावश्यम्भावात्तदेकवाक्यतया मरीचिवचनस्यस्यापि यथामासमित्यस्य तृतीयादिपरत्वादयुक्तम् । किञ्च सर्वत्रैवाधिकाशौचकल्पनेऽचिरपदवैयर्थ्यापत्तिः । चतूरात्रादिशब्दानामेकद्वित्रिषड्रात्रत्वादौ लक्षणापत्तेश्च । वैलक्षण्यप्रसङ्गदोषस्तु वचनवैयर्थ्यापेक्षयाऽदोष एव । एतेनैतद्दोषप्रसङ्गेनैव "राजन्ये तु चतूरात्रम्" इत्यादिमरीचिवचनावयवस्याविवक्षितार्थत्वं यन्मदनपारिजातेनोक्तं तदनुसारेणैव च वोपदेवादिभिर्वर्णभेदेनाशौचभेदो नोद्घाटितः, प्रत्युत तुल्यत्वमुक्तम्, तन्निरस्तं वेदितव्यम् । वैयर्थ्यापेक्षया तस्याऽदोषत्वात् । तस्मान्माधवमतमेव युक्तमिति प्रतिभाति इत्यलमतिविस्तरेण ।

इदं च स्रावाशौचं मातुरेव "रात्रयो मासतुल्याः स्युर्जनन्या गर्भसंस्रव" इतिदेवलवचनात् । सपिण्डानां तु स्रावे सद्यः शौचम् । पाते त्रिरात्रम् "स्रावे मातुस्त्रिरात्रं स्यात्" इतिपूर्वलिखितमरीचिवचनात् । अत्र स्रावपातौ पराशरपरिभाषिताविति मिताक्षराकारः ।

माधवस्तु ।

गर्भस्रावे सपिण्डानां सद्यःशौचेऽपि पितुः स्नानमात्रमधिकम् । गर्भस्रावे मासतुल्या रात्रयः स्त्रीणां, स्नानमात्रं तु पुरुषस्येति वृद्धवशिष्ठोक्तेरित्याह । मदनपारिजातोऽप्येवम् ।

केचित्तु पुरुषपदं सपिण्डोपलक्षणम् । तेन स्रावे सपिण्डानां स्नानमाहुः ।

रुद्रधरादयस्तु सगुणसपिण्डानां सद्यःशौचं, निर्गुणानामहोरात्रं, सर्वाशित्वसर्वविक्रयित्वादिदोषवतां तु त्रिरात्रम् ।

गर्भच्युतावहोरात्रं सपिण्डेऽत्यन्तनिर्गुणे ।
यथेच्छाचरणे ज्ञातौ त्रिरात्रमिति निश्चयः ॥

इति कूर्मपुराणात् । निर्गुणे क्रियाशून्ये अहोरात्रम् । अतश्च "अहोरात्रं वा गर्भसंस्रव" इति यमवचनमपि एतद्विषयमेव व्याख्येयम् । यथेच्छाचरणे सर्वाशित्वादिदोषवति त्रिरात्रम् । यत्तु प्रागुदाहृतं मरीचिवचनम् "यदपि च जातमृते मृतजाते वा कुलस्य त्रिरात्रम्" इति हारीतवचनं, तदपि एतद्विषयमित्याहुः ।

इदं च मासममा इति स्रावाशौचं दशममासावधि नवममासावधि वा मृतजाते ज्ञेयम् । यदि तु सप्तममासादारभ्य जीवन् जातस्तदा मा-

तुः सम्पूर्णाशौचम् । अन्येषां तु स्रावबदिति मेधातिथिः ।

प्राच्यास्तु सप्तमाष्टममासयोरपि जातमृते मृतजाते वा मातुः सम्पूर्णा-शौचमेव । सपिण्डानां तु मृतजाते सगुणत्वादिविशेषेन पूर्ववदेव व्यवस्था ।

षण्मासाभ्यन्तरं यावद्गर्भस्रावो भवेद्यदि ।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥
अत ऊर्ध्वं स्वजात्युक्तं तासामाशौचमिष्यते ।
सद्यः शौचं सपिण्डानां गर्भस्य पतने सति ॥

इति कूर्मपुराणात् ।

पतनं मृतस्रावः । सद्यःशौचं गुणवद्विषयम् । जातमृते तु त्रिरात्रम् । जातमृते मृतजाते वा कुलस्य त्रिरात्रमिति हारीतवचनात् । जातमृतः=जननाव्यवहितोत्तरकालं मृतः, मुहूर्तमात्रं वा जीवनं विवक्षितम् । मृतजाते त्रिरात्रं तु सर्वाशित्वादिदोषवद्विषयमित्याहुः ।

माधवस्तु ।

आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः ।
अत ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत् ॥

इति पराशरवचनात्पूर्वोदाहृतकूर्मपुराणे सप्तममासप्रभृति मातुः पूर्णमाशौचम् । दशाहग्रहणं पूर्णाशौचोपलक्षणं सपिण्डानां तु सप्तमाष्टमयोर्माससंख्याकदिनान्याशौचम् ।

अधस्तान्नवमान्मासाच्छुद्धिः स्यात्प्रसवे कथम् ।
मृते जीवति वा तस्मिन्नहोभिर्माससंख्यया ॥

इति चतुर्विंशतिमतात् । प्रसवे=परिभाषितप्रसूतौ । इदं च विषयान्तराभावात्सपिण्डविषयमेवेत्याह । वस्तुतस्तु सप्तममासप्रभृति सपिण्डानां सर्वदा पूर्णमेवाशौचम् । उदाहृतपराशरवचने विशेषानुपादानात् । उक्तवचनानां तु व्यवस्थाऽनुपदमेव वक्ष्यते । मिताक्षराप्येवम्, आचारश्च ।

अथ जननाशौचम् ।

तत्र मनुः ।

यथेदं शावमाशौचं सपिण्डेषु विधीयते ।
जननेऽप्येवमेव स्यान्निपुणां शुद्धिमिच्छताम् ॥ इति

जनने=पराशरपरिभाषिते सप्तमप्रभृतिपूर्णप्रसवे । अतश्च तत्र शावाशौचस्य दशाहादेरतिदेशः सपिण्डेषु क्रियते । अत एव जातमृते मृतजाते वा सपिण्डानां दशाहमिति; हारीतः सर्वत्रैव सपिण्डानां दशाहमाह । यत्तु बृहद्विष्णुवचनम् जातमृते मृतजाते वा कुलस्य

सद्यःशौचमिति न तत्प्रसवनिमित्ताशौचाभावप्रतिपादनपरम् । अपि तु शिशुमरणनिमित्ताशौचस्य स्नानमात्राच्छुद्धिप्रतिपादनपरम् ।

दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः ।
शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते ॥

इत्यादौ तस्यैव निषेधात् ।

यत्तु—

जीवन् जातो यदि मृतो मृतः सूतक एव तु ।
सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम् ॥

इति वचनं तज्जननानन्तरं नालोच्छेदनात्प्राक् मृतौ पित्रादीनां जनननिमित्तमाशौचं दिनत्रयमित्येवं परम् ।

यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ॥

इति जैमिनिवचनान्नालोच्छेदनोत्तरकालं दशाहादिप्रवृत्तेः । एवं च हारीतवचनमपि त्रिरात्रविधायकमेतद्विषयकमेव ।

यदपि ।

मुहूर्तं जीवितो बालः पञ्चत्वं यदि गच्छति ।
मातुर्दशाहाच्छुद्धिः स्यात्सद्यःशौचास्तु गोत्रिणः ॥

इति वचनं तदपि अग्निहोत्राद्यर्थकशुद्धिपरम्, अग्निहोत्रार्थं स्नानोपस्पर्शनान्तकालं शुद्धिरिति शङ्खवचनात् । यत्तु चतुर्विंशतिमतवचनं सपिण्डानां मासतुल्यदिनाशौचविधायकं तन्निबन्धान्तरेष्वदर्शनान् निर्मूलम् । समूलत्वे वाऽसन्निहितसपिण्डपरं युगान्तरपरं वेति दिक् ।

तदयमर्थः । सप्तमप्रभृति मृतजाते दशाहमेव हारीतवाक्यात् । अनौचित्यं तु वचनान्न दोषः । नालच्छेदात्प्राक् जातमृते पित्रादीनां त्रिरात्रम्, मातुः पूर्णं, तदुत्तरं तु सर्वेषां पूर्णमेवेति । अत्र मनुवचने शावाशौचस्य जननेऽतिदेशात् क्षत्रियादीनामपि जनने द्वादशाहादेरेव प्राप्तिः ।

शुद्ध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति ॥

इति पराशरवचनाच्च । शाववदस्पृश्यत्वेऽपि सर्वेषां प्राप्ते विशेषमाह—संवर्तः ।

पुत्रे जाते पितुः स्नानं सचैलस्य विधीयते ।
माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ॥

अत्र पुत्रग्रहणात् स्त्र्यपत्ये न स्नानमपीति रुद्रधरादयः । वस्तुतो जन-

नस्य निमित्तत्वेन तद्विशेषणस्य पुत्रपदस्योपलक्षणार्थत्वात्कन्यापत्येऽपि स्नानं भवत्येव। मदनपारिजातोऽप्येवम्।

ब्रह्मपुराणे।

सूतके तु मुखं दृष्ट्वा जातस्य जनकः शुचिः।
कृत्वा सचैलं स्नानं तु शुद्धो भवति तत्क्षणात्॥

अत्र मुखं दृष्ट्वेत्युक्तेर्देशान्तरे स्नानाभाव इति गम्यते इति काश्चित्। तन्न "निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च" इत्येतद्विरोधात्। मुखंदृष्ट्वेति निश्चयार्थमुक्तं, न तु वस्तुतो दर्शनोत्तरं स्नानम्।

पुत्रजन्म पिता श्रुत्वा सचैलं स्नानमाचरेत्।
ब्राह्मणेभ्यो धनं दत्वा ततो बालं विलोकयेत्॥

इति वचनात्। सपिण्डानां तु न स्नानमपि।

सूतके सूतिकावर्जमङ्गस्पर्शो न दुष्यति।
संस्पर्शे सूतिकायास्तु स्नानं तत्र विधीयते॥

इत्यङ्गिरोवचनात्।

पितुः पत्नीस्पर्शे तु—

पराशरः।

यदि पत्न्यां प्रसूतायां द्विजः संपर्कमृच्छति।
सूतकं तु भवेत्तस्य यदि विप्रः षडङ्गवित्॥

यद्यपि षडङ्गवित् तथापीत्यर्थः। सूतकम्=अस्पृश्यत्वरूपम्। कर्मान-धिकारलक्षणस्य तदभावेऽपि सत्त्वात्। अत्र सम्पर्कः=अभिगम इति काश्चित्। संसर्गमात्रमिति तु बहुसम्मतम्। मातुरपि वर्णभेदेनास्पृश्य-तायां विशेषमाह ब्रह्मपुराणम्।

ब्राह्मणी क्षत्रिया वैश्या प्रसूता दशभिर्दिनैः।
गतैः शूद्रा च संस्पर्शा त्रयोदशभिरेव च॥ इति।

यत्तु "सूतिका सर्ववर्णानां दशरात्रेण शुध्यति" इति प्रचेतोवचने-शूद्राया अपि दशरात्राभिधानम्, तत् सच्छूद्राविषयम्। सर्ववर्णपदं वा त्रैवर्णिकपरं व्याख्येयम्। कर्माधिकारस्तु मन्वाद्युक्ताशौचापगमेऽपि मासेन भवत्येवेत्याह।

पैठीनसिः।

सूतिकां पुत्रवतीं विंशतिरात्रेण स्नातां सर्वकर्माणि कारयेत्। मासेन स्त्रीजननीम्। पुत्रवतीं=पुत्रजननीम्। सर्वकर्माणि=अदृष्टार्थानि। दशाह-दिनैवास्पृश्यत्वापगमे सति दृष्टार्थकर्माधिकारसिद्धेरिति हारलताकारादयः। रत्नाकरस्तु पाकादिष्वपि विंशत्यामुत्तरमेवाधिकार इत्याह। स्नातामिति विंशत्यामुत्तरं पुनः स्नानविधानार्थम्। प्रथमषष्ठदशमेषु दिवसेषु जन-

ननिमित्तमाशौचं तद्विहिते कर्मणि नास्तीत्याह—

व्यासः ।

सूतिकावासनिलया जन्मदा नाम देवताः ।
तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्तिता ॥
प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा ।
त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि ॥

अत्र प्रतिग्रहेऽपि न दोष इत्याह ।

वृद्धयाज्ञवल्क्यः ।

तत्र सर्वं प्रतिग्राह्यं कृतान्नं चैव वर्जयेत् ।
भक्षयित्वा तु तन्मोहाद् द्विजश्चान्द्रायणं चरेत् ॥

कृतान्नं=सिद्धान्नम् । अन्याशौचमपि जननिमित्तजातकर्मषष्ठी-पूजादौ नाधिकारविघातकमित्याह ।

प्रजापतिः ।

आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।
कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुद्ध्यति ॥

अत्र प्रथमादिदिवसेषु यत्कृत्यं तत्संस्कारप्रकाशे द्रष्टव्यम् ।

अथ बालाद्यशौचम् ।

तत्र नालच्छेदात्पूर्वं उत्तरं वा शिशुमरणे नामकरणात्प्राक् तन्निमित्तं सद्यः शौचम् । "प्राङ् नामकरणात्सद्यः शौचम्" इतिशङ्खवचनात् । नामकरणग्रहणम्, आशौचान्तकालोपलक्षणम् "अन्तर्दशाह" इति पूर्वलिखितवचनैकवाक्यत्वात्, आशौचान्त एव नामकरणविधानाच्च । अत्र च यत्र सद्यःशौचमुच्यते तत्र स्नानादेव शुद्धिः । अन्यथा स्वरूपेणैव शुद्धौ तद्विधानानुपपत्तेः ।

यत्तु अन्तः सूतके चेदोत्थानादाशौचं सूतकवदिति पारस्करवचनं न तन्मरणनिमित्तपूर्णाशौचपरं किन्तु, आ उत्थानात्सूतकोत्थानावधि दशाहपर्यन्तमिति यावत्; सूतकवत्सूतकमेवेत्यर्थाङ्गीकारेण मरणाशौचपूर्णतानिषेधकमेव । मिताक्षरादयोऽप्येवम् ।

रुद्रधरादयस्तु सूतकवदित्यनेन मातुर्मरणनिमित्तं पूर्णाशौचं विधीयते। यत्तु शङ्खवचनं तत्सपिण्डविषयमित्याहुः । तन्न । अद्विवर्षे प्रेते मातापित्रोराशौचमेकरात्रमिति पारस्करेणैव दशाहोत्तरं मातुरेकरात्रप्रतिपादनाद्दशाहमध्ये पूर्णाशौचे वैषम्यापत्तेः । अत एव यद्धारलताकारेणोक्तम्, उक्तपारस्करवचने मरणनिमित्तपूर्णाशौचाविधानं मातापित्रोः, पूर्ववाक्ये तस्यैवोपस्थितत्वेनानुषङ्गात् । तयोश्च सूतकवदित्यनेनाऽपू-

श्यत्वं विधीयते। अन्यथा ओत्थानादित्यनेनैव सिद्धेः सूतकवदित्यस्या-नर्थक्यापत्तेः ।

जातमात्रस्य बालस्य यदि स्यान्मरणं पितुः ।
मातुश्च सूतकं तत्स्यात्पिता त्वस्पृश्य एव हि ॥
सद्यःशौचं सपिण्डानां कर्तव्यं सोदरस्य च ॥

इतिकूर्मपुराणाच्च ।

सपिण्डानां तु सद्यःशौचं पूर्वलिखितशङ्खवचनात् ।

बालस्त्वन्तर्दशाहे तु प्रेतत्वं यदि गच्छति ।
सद्य एव विशुद्धिः स्यान्नाशौचं नैव सूतकम् ॥

इति वचनाच्च ।

यत्तु जातमृते मृतजाते वा कुलस्य त्रिरात्रमिति हारीतवचनम्, तद्गर्भस्रावप्रकरणान्नवममासात्पूर्वं द्रष्टव्यमिति । तदप्ययुक्तम् । दशरात्रोत्तरं मातापित्रोरेकरात्रविधानेन वैषम्यापत्तेः । कूर्मपुराणवचनं तु मिताक्षराकाराद्यनादृतमपि एवं व्याख्येयं जातमृतेऽपि पितुर्मातुश्च कारात् सपिण्डानामपि तत्सूतकं स्यादेव, किन्तु पिता स्नानात्पूर्वमस्पृश्यः, सपिण्डानां तु सद्यःशौचं स्नानमपि नेत्यर्थ इति । तस्मादुक्तैव पारस्करवचनस्य व्याख्या ज्यायसी, आचारसिद्धा च । नामकरणोत्तरं मरणे तु षष्ठमासपर्यन्तस्य दाहादिकरणपक्ष एकरात्रम्, नो चेत्सद्य एव । "आदन्तजननात्सद्य" इति वचनात् । अत्र दन्तजननपदेन तज्जन्मकालः सप्तममासाख्यो लक्ष्यते । तस्य तत्कालत्वं च दन्तजन्म सप्तमे मासीत्युपनिषद्दर्शनात् । यद्यपि चात्राविशेषेण सद्यःशौचमुक्तं तथापि दाहाद्यकरण एवेदं द्रष्टव्यम् । दन्तजाते बाले प्रेते सद्य एव, नास्याग्निसंस्कारो नोदकक्रियेति विष्णुनाग्निसंस्काररहितस्यैव सद्यःशौचाभिधानात्। एवं च "अहस्त्वदत्तकन्यासु बालेषु च विशोधनमिति । अग्निसंस्कारस्य च वैकल्पिकत्वं वक्ष्यते । सकलदाक्षिणात्यसंमतश्चायमर्थः । रत्नाकरादयस्तु अजातदन्ते सद्य एव शुद्धिः । यत्तु क्वचिदजातदन्ते एकाहविधानं तद्दन्तजननसमये यस्य दन्तोत्पत्तिर्नास्ति तद्विषयम्, ईषज्जाततदन्तविषयं चेत्याहुः । हारलतादयस्तु सद्यःशौचं किंचिद्गुणशीलानां सपिण्डानाम्, अहोरात्रं तु निर्गुणसपिण्डानाम् ।

अजातदन्तमरणं संभवेद्यदि सत्तमाः ।
एकरात्रं सपिण्डानां यदि तेऽत्यन्तनिर्गुणाः ॥

इति कूर्मपुराणादित्याहुः । षण्मासादूर्ध्वं चूडाकरणपर्यन्तमेकाहः । "नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता" इति मनुवचनात् ।

अत्र चूडाग्रहणं न कालोपलक्षणम्, तथासति तस्याः प्रथमवर्षेऽप्युक्तत्वात्कृतचूडे च त्रिरात्राशौचस्य वक्ष्यमाणत्वात् "विप्रे न्यूनत्रिवर्षे तु मृते शुद्धिस्तु नैशिकी" इतिवचनविरोधापत्तेः । तथा हि "निवृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते" इत्यत्रापि चूडाग्रहणस्य कालोपलक्षकत्वेन प्रथमवर्षेऽपि त्रिरात्रापत्तिः स्यादेव । अतो न चूडाकालोपलक्षणं चूडाशब्दः । तेन षण्मासोत्तरं चूडाकरणपर्यन्तमेकाहः । यत्तु ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रमिति वशिष्ठवचनं तत्प्रथमवार्षिकचूडाकरणाभिप्रायम् ।

एवं ऊनद्विवार्षिकमधिकृत्य—

नास्य कार्योऽग्निसंस्कारो न च कार्योदकक्रिया ।
अरण्ये काष्ठवत्त्यक्त्वा क्षपेयुस्त्र्यहमेव तु ॥

इति मनुवचनम् । तदप्येतद्विषयम् । निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते इति मनुना कृतचूडस्य त्रिरात्राभिधानात् । अत एव कृतचूडस्य दाहाभावेऽपि त्रिरात्रम् । अरण्ये काष्ठवत्त्यक्त्वा" इति मनुवचनात् ।

यत्तु ।

यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितिः ।
दाहयित्वा तथाप्येनमाशौचं त्र्यहमाचरेत् ॥

इत्याङ्गिरोवचनम् । तद्वर्षत्रयादूर्ध्वं कुलधर्मापेक्षया चूडोत्कर्षे वेदितव्यम् । नचेदं वचनं वर्षत्रयात्प्राक् त्रिरात्रं विधत्ते । विप्रे न्यूनत्रिवर्षे तु मृते शुद्धिस्तु नैशिकी" इत्येतद्विरोधात् । तस्मात्त्रिवर्षोत्तरं उपनयनपर्यन्तं त्रिरात्रमेवेति सिद्धम् । मिताक्षराप्येवम् । हारलतादयस्तु चूडाशब्देन तृतीयवर्षाख्यकालो लक्ष्यते, तस्य मुख्यत्वात्, प्रथमाऽब्दे तु चूडाकरणं कुलधर्मापेक्षयाऽपवादः, तेन षण्मासादूर्ध्वं द्वितीयवर्षसमाप्तिं यावन्मरणे एकरात्रम् "आचूडान्नैशिकी" तिवचनात् । इदं च किंचिद्गुणशालीनां सपिण्डानाम् ।

अथोर्ध्वं दन्तजननात्सपिण्डानामशौचकम् ।
एकाहं निर्गुणानां तु चौलादूर्ध्वं त्रिरात्रकम् ॥

इति कूर्मोक्तेः । अत्यन्तनिर्गुणानां तु त्रिरात्रम्, अत्यन्तसगुणानां सद्यःशौचम् । ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रम् सद्यः शौचमिति गौतम इति वशिष्ठवचनात् । एवं "त्रिरात्रमाव्रतादेशात्' इत्यत्रापि व्रतग्रहणं कालोपलक्षणम् । स च मासत्रयाधिकषट्वर्षोत्तरकालः । उपनयने गर्भाष्टमस्यापि मुख्यत्वेन नवभिर्गर्भमासैः समं गणनया तस्य तत्कालत्वोपपत्तेः । नचोपलक्षणत्वे मानाभावः ।

अनुपनीतो विप्रस्तु राजा वैश्यावनुग्रहात् ।
अगृहीतव्रतोदस्तु वैश्यः शूद्रस्त्ववस्त्रयुक् ॥
म्रियेत यदि तत्र स्यादाशौचं त्र्यहमेव तु ।
द्विजन्मनामयं कालस्त्रयाणां तु षडाब्दिकः ॥
पञ्चाब्दिकस्तु शूद्राणां स्वजात्युक्तमतः परम् ॥

इत्यादिपुराणैकवाक्यतालाभात् । अवस्त्रयुक्=अविवाहितः। अतश्च व-र्षद्वयोत्तरं उपलक्षितकालपर्यन्तं त्रिरात्रमित्याहुः । इदं च नामकरण-मारभ्योपनयनपर्यन्तमाशौचं सपिण्डानामेव । मातापित्रोस्तु त्रिरात्रमे-व । "बालानामजातदन्तानां त्रिरात्रेण शुद्धिरिति कश्यपवचनात् । बीजि-कादभिसम्बन्धादनुरुन्ध्यादघं त्र्यहम्" इतिमनुवचनाच्च । इदं च बालाद्याशौचं सर्ववर्णसाधारणम् "तुल्यं वयसि सर्वेषामतिक्रान्तं तथै-व च"इति व्याघ्रपादवचनात् ।

माधवास्तु ।

विप्रे न्यूने त्रिभिर्वर्षैर्मृते शुद्धिस्तु नैशिकी ।
अह्ना क्षत्रिये शुद्धिस्त्रिभिर्वैश्ये मृते तथा ॥
निवृत्तचूडके विप्रे त्रिरात्राच्छुद्धिरिष्यते ।
निवृत्ते क्षत्रिये षड्भिर्वैश्ये नवभिरेव च ॥
शूद्रे त्रिवर्षान्न्यूने तु मृते शुद्धिस्तु पञ्चभिः ।
अत ऊर्ध्वं मृते शूद्रे द्वादशाहो विधीयते ॥

इति अङ्गिरोवचनाद्बालाद्याशौचे वैषम्यमपि । इदं च षण्मासोत्तरं उपनयनपर्यन्तं द्रष्टव्यम् । आशौचोत्तरं षण्मासमध्ये तु त्रैवर्णिकस्य तुल्यम्, शूद्रस्य तु त्र्यह इत्यनुवृत्तौ "तथा वै शूद्रजन्मना"मितिशङ्खस्म-रणात् । "आदन्तजन्मनः शूद्रे मृते बाले त्र्यहं भवेत्"इतिचतुर्भुजधृतव-चनाच्चेत्याहुः । इति बालाद्याशौचम् ।

अथ स्त्र्याशौचम् ।

सर्ववर्णानामेव सोदरभ्रातुर्भगिन्या आदन्तजन्ममरणे सद्यःशौच-म् । आचूडादेकरात्रम् । विवाहपर्यन्तं त्रिरात्रम् ।

आदन्तात्सोदरे सद्य आचूडादेकरात्रकम् ।
आप्रदानात्त्रिरात्रं स्याद् दशरात्रमतः परम् ॥

इतिकौर्मात् । प्रदानमत्र विवाहः,ततः परं दशरात्रोक्तेः । इदं दशरात्रं भर्तृसपिण्डविषयम् "दत्तानां भर्तुरेव हि"इत्यनेनैकवाक्यत्वात्, सोदरव्यतिरिक्तपितृमात्रादिसर्वसपिण्डानां तु कन्याया जन्मप्रभृति चूडान्तं मरणे सद्यःशौचम् । तदुपरि वाग्दानपर्यन्तमेकरात्रम् । वाग्दा-

नोत्तरं विवाहपर्यन्तं भर्तृकुले पितृकुले च त्रिरात्रं विवाहात्परं भर्तृकुल एव सम्पूर्णाशौचम् ।

आजन्मनस्तु चूडान्तं यत्र कन्या विपद्यते ।
सद्यःशौचं भवेत्तत्र सर्ववर्णेषु नित्यशः ॥
ततो वाग्दानपर्यन्तं यावदेकाहमेव हि ।
अतः परं प्रवृद्धानां त्रिरात्रमिति निश्चयः ॥
वाक्प्रदाने कृते तत्र ज्ञेयं चोभयतस्त्र्यहम् ।
पितुर्वरस्य च ततो दत्तानां भर्तुरेव हि ॥

इत्यादिपुराणात् । अत्राजन्मन इत्यनेन जननाशौचमध्ये कन्यामरणे मातापित्रोः सद्यः शौचमिति स्मार्तादयो गौडाः ।

अन्ये तु जननाशौचमध्ये कन्यामरणे पुंबालमरणवदेव, आजन्मन इति तु मरणनिमित्तसद्यःशौचविधानपरमित्याहुः ।

इदं चादिपुराणवाक्यं सोदरव्यतिरिक्तपित्रादिसर्वसापिण्डपरं प्रागुक्तम्, कौर्म्ये सोदरस्य विशेषोक्तेः ।

माधवस्तु ।

अदन्तजातासु पित्रोरेकरात्रमिति कार्ष्णाजिनिवचनाद्दन्तजातामरणे पित्रोरेकारात्रस्य ।

प्रत्ताप्रत्तासु योषित्सु संस्कृतासंस्कृतासु च ।
मातापित्रोस्त्रिरात्रं स्यादन्येषां तु यथाविधि ॥

इति शङ्खवचनेन च दन्तजातामरणे तयोस्त्रिरात्रस्य च सिद्धेः, "आजन्मनस्तु" इत्यादिपुराणवचनं पितृमातृसोदरान्यसपिण्डविषयमित्याह । ततो वाग्दानपर्यन्तमिति । चूडोत्तरं वाग्दानपर्यन्तमित्यर्थः । तथा च—

याज्ञवल्क्यः ।

अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् । इति ।

अत्र यद्यपि आदिपुराणैकवाक्यतया कृतचूडाया एव वाग्दानपर्यन्तमेकाहः प्रतीयते । तथापि तृतीयवर्षादूर्ध्वमकृतचूडाया अपि वाग्दानपर्यन्तमेकाहो द्रष्टव्यः ।

अविशेषेण वर्णानामर्वाक् संस्कारकर्मणः ।
त्रिरात्रेण भवेच्छुद्धिः कन्यास्वह्ना विधीयते ।

इत्यनेन यदा पुंबाले त्रिरात्रं तदा कन्यायामेकरात्रविधानात्, तत्र च तृतीयवर्षादूर्ध्वमकृतचूडस्यापि त्र्यहोक्तेः । यदा तु पुंबाले ऊनद्विवर्षोत्तरमेवाकृतचूडेऽपि त्रिरात्राशौचं, तदा कन्याया अपि द्विवर्षोत्तरमेवाकृतचूडाया अपि वाग्दानपर्यन्तमेकाहः । अतः परं प्रवृद्धानामिति । कृत

वाग्दानावस्थातः परं प्रवृद्धानामाधिकरूपाणाम् । अधिकरूपमाह । वाक्प्रदानमिति । उभयमाह । पितुर्वरस्य चेति । पितृसपिण्डस्य भर्तृसपिण्डस्य चेत्यर्थः । तथा च ।

मनुः ।

स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः ।
यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभयः ॥ इति ॥

असंस्कृतानाम्=अविवाहितानाम् । बान्धवा=भर्तृसपिण्डास्त्र्यहाच्छुध्यन्ति । एतच्च वाग्दानोत्तरं,तत्पूर्वं भर्तृपक्षे संबन्धाभावात् यथोक्तेन त्रिरात्रेण । सनाभयः=पितृसपिण्डाः । अत्र सापिण्ड्यं साप्तपौरुषम् । "अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम्" इति वचनात् । यत्तु अप्रत्तानां त्रिपौरुषमिति वशिष्ठस्मृतौ त्रिपुरुषग्रहणं तत्र अप्रत्तानामित्यस्यावाग्दत्तानामित्यर्थः, तेन वाग्दानात्पूर्वं त्रिपौरुषं वशिष्ठवचनात्, तदुत्तरं तु साप्तपौरुषमेवेति दाक्षिणात्याः ।

अप्रत्तानां त्रिपौरुषमिति वाग्दानोत्तरविषयम् । "अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुष"मिति वचनं तु प्राग्विषयम् । कन्यानामिति साप्तपौरुषसापिण्ड्यव्यवहारादिति रुद्रधरः ।

त्रिपौरुषमेवात्र सापिण्ड्यम् । अप्रत्तानामित्यस्याविवाहितानामित्यर्थः । "अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम्"इति रत्नाकरधृतं तु विवाहे पितृपक्षविषयमिति गौडाः । अत्र वाग्दानपदं तदुपधानपरं न कालोपलक्षणम् । तेन वाग्दानाभावे चूडोत्तरं विवाहपर्यन्तमेकरात्रमेव । वाग्दाने सत्येव त्रिरात्रमिति हारलताकारादयो दाक्षिणात्याश्च ।

चूडामणिस्तु ।

चूडोत्तरं वाग्दानकालपर्यन्तमेकाहः । वाग्दानकालस्तु गर्भाष्टमाब्दः, अष्टमो वा । मुख्यविवाहकालत्वात् । तथा च ।

स्मृतिसारे ।

सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः ।
कन्यायाः शस्यते राजन्नन्यथा धर्महानिकृत् ।

वाग्दानकालोत्तरं वाग्दानाभावे यावद्विवाहं पितृपक्ष एव त्रिरात्रम् । वाग्दाने तु यावद्विवाहं पक्षद्वय एव त्रिरात्रमित्याह ।

"दत्तानां भर्तुरेव हि"इति दत्तानां विवाहितानां भर्तुरेवेति पितृपक्षव्यवच्छेदः ।

अत्र दाक्षिणात्याः ।

ऊढायाः पित्रोर्गेहे प्रसवे तयोरेकरात्रं तद्गृहवासिनां भ्रातॄणां च । एवं भ्रातृगेहे भगिन्याः प्रसवे भ्रातॄणामेकरात्रम् । मरणे तु त्रिरात्रम् ।

पित्रोस्तु स्वगृहे भर्तृगृहे वा मरणे त्रिरात्रमेव । तथा च—

विष्णुः ।

संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे, तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदैकरात्रं त्रिरात्रं वेति । पितृपक्षस्येति शेषः । तदुपक्रमात् । पक्षपदेन भ्रातर एव गृह्यन्ते, वाक्यान्तरेण भगिनीमरणे तस्य त्रिरात्रविधानात् । पतिगृहे ऊढायाः प्रसवे पित्रादीनां नाशौचम् । प्रापकाभावात् । मरणे तु पित्रोस्त्रिरात्रं भवत्येव ।

बैजिकादभिसंबन्धादनुरुध्यादघं त्र्यहम् ।

इति प्रागुक्तवचनात् ,

प्रत्ताप्रत्तासु योषित्सु संस्कृतासंस्कृतासु च ।
मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि ॥

इति शङ्खस्मरणाच्चेत्याहुः ।

गौडास्तु ।

उक्तशङ्खवचनमूढायाः पितृगेहे मरणविषयम् ।

गृहे मृतासु दत्तासु कन्यासु स्यात् त्र्यहं पितुः ॥
निवासराजनि प्रेते जाते दौहित्रके तथा ॥

इति शङ्खवचनान्तरेण ऊढायाः पितृगेहमरण एव त्रिरात्रबोधनात् । अन्यथा गृह इत्यस्य वैयर्थ्यापत्तेः, विष्णुवाक्ये चैकरात्रं प्रसवमरणयोरुभयोरपि ज्ञेयम् । तदपि भ्रात्रादिविषयम् । त्रिरात्रं तु पितुः, मातुश्च जनकत्वाविशेषात् । तदपि प्रसवे मरणे च । इदं व्यक्तम्—

आदिपुराणे ।

दत्ता नारी पितुर्गेहे सूयते म्रियतेऽथवा ।
स्वमशौचं चरेत्सम्यक् पृथक्स्थानव्यवस्थिता ॥
तद्बन्धुवर्गस्त्वेकेन शुद्ध्यते जनकस्त्रिभिः ।

पितुर्गेहे यदा सूयते म्रियते वा दत्ता नारी तदा सा प्रसवे पैठीनस्युक्तमाशौचं चरेत् । पृथक्स्थाने पित्रादिसंसर्गशून्ये पितृगृहे स्थिता सा चेत्तदा तद्बन्धुवर्गो गोत्रादिरेकाहेन, जनकस्त्र्यहेण शुध्यति, जनकत्वाविशेषाज्जनन्यपि । संसर्गे तु पित्रादेः संपूर्णमाशौचम् ।

यस्तैः सहासनं कुर्यात् शयनादीनि चैव हि ।
बान्धवो वा परो वापि स दशाहेन शुद्ध्यति ।

इति वचनादिति स्मार्ताः । एतन्मते—

दत्ता नारी पितुर्गेहेऽप्रधाने सूयते यदा ।

इति कल्पतरुधृतवाक्ये अप्रधाने पित्रादिसंसर्गशून्य इत्यर्थो बोध्यः ।

अन्ये तु पितुः शयनभोजनदेवार्च्चनगेहे यदा सूयते म्रियते वा तदा पिता स्वं स्वजात्युक्तमाशौचं दशरात्रादिकं चरेत् । भ्रात्रादिस्त्वशौचंस्त्रिः, शयनभोजनदेवार्चनगृहभिन्नगृहे चेत्सूयते म्रियते वा पिता त्रिरात्रेण भ्रात्रादिस्त्वेकेन शुध्येदित्यर्थः । अन्यथा स्मार्तमते स्वं पैठीनस्युक्तं चरेदित्यत्र "दत्ता नारी पितुर्गेहे" इत्युपादानं व्यर्थं स्यादित्याहुः ।

परे तु पितुः प्रधाने गेहे सूयते म्रियते वा तदा जनकादिभिः बन्धुवर्गैरेकेन, यदि तु प्रधानगृहभिन्नगृहव्यवस्थिता तदा स्वभर्तृकुलमेवाशौचं चरेत् न पित्रादिर्यद्यपि तद्गृहस्थितेत्यर्थमाहुः ।

हरिहरस्तु "पितृगृह" इत्यशौचभागिगृहोपलक्षणम् । तेन भ्रात्रादिमरणे भ्रात्रादेरेकाहः तत्कथयोः पित्रोस्त्र्यह इत्याह ।

परपूर्वायास्त्वशौचे ।

ब्रह्मपुराणे ।

अन्यपूर्वा गृहे यस्य भार्या स्यात् तस्य नित्यशः ।
अशौचं सर्वकार्येषु गृहे भवति सर्वदा ॥
दानं प्रतिग्रहः स्नानं सर्वं तस्य वृथा भवेत् ।

अत्र गेह इत्युपादानात्समस्तगृहकार्यकारिणीत्यर्थ इति हारलता । प्रतिग्रहश्रवणाद्ब्राह्मणमात्रपरमिदम् ।

शङ्खः ।

हीनवर्णा तु या नारी प्रमादात्प्रसवं व्रजेत् ।
प्रसवे मरणे तज्जमशौचं नोपशाम्यति ॥

हीनवर्णा अत्र शूद्रा । प्रमादात् विना परिणयं तत्कृतसङ्ग्रहणात् । तेना परिणीता शूद्रा यद्युत्तमवर्णात्पुत्रमुत्पादयति तदा तस्याः प्रसवमरणजन्यमशौचं तद्गर्भजनकस्य यावज्जीवं भवतीति शुद्धिचिन्तामणिः ।

आदिपुराणे ।

पित्रा दत्ता तु यान्यस्मै स्यात्त्र्यादन्यमाश्रिता ।
यं संश्रितवती भूयः तस्याशौचं भवेत्त्र्यहम् ॥
मृतायां वा प्रसूतायां नान्येषामिति निश्चयः ।
पदे तु सप्तमे या तु बलात्काचिद् धृता भवेत् ।
स्वामिगोत्रं भवेत्तस्यास्तच्च भूयो विशिष्यते ।
पैतृकं त्वप्रसूतायां ततः पौर्विकभर्तृकम् ।
कामादक्षतयोनिश्चेदन्यं गत्वा व्यवस्थिता ॥
तस्यान्यस्य सगोत्रा स्याद् यं संश्रितवती स्वयम् ।

पित्रा यस्मै दत्ता तं त्यक्त्वा स्वातन्त्र्यादन्यमाश्रितायाः प्रसवमरणयोर्यमाश्रिता तस्यैव त्रिरात्रमाशौचम् न तु तस्य सपिण्डानामित्यर्थः । अस्वातन्त्र्यादन्याश्रितायां विशेषमाह । पदे त्विति सप्तपदीकरणेन पत्नीत्वे जात इत्यर्थः । उत्तरत्र स्वामिगोत्रमित्यभिधानात् । अत्रापि विशेषमाह । तच्चेति । तस्या यावत्प्रसवो न तावत् पितृगोत्रं, प्रसवोत्तरं पूर्वभर्तृगोत्रम् ।

स्वातन्त्र्येणाश्रितायाः किं गोत्रमत्राह । कामादक्षतयोनिश्चेदिति । कामादाश्रयणेऽपि पूर्वस्वामिगोत्रतैवेति हारलता । एवं च "यं संश्रितवती" इत्यादिना द्वितीयभर्तुर्यदशौचमुक्तं तदन्यक्षतयोनित्वे सत्येव । गोत्राशौचयोर्नियमस्यौत्सर्गिकत्वात् । तथा च क्षतयोनेः कामतोऽन्याश्रितायाः, अक्षतयोनेस्तु बलादाश्रितायाः, पूर्वस्वामिसगोत्रत्वात्पूर्वस्वामिन एवाशौचमित्याचार्यचूडामणिः । यं संश्रितवतीत्यादिकं क्षतयोनेरेव, अक्षतयोनेस्तु कामादाश्रयेण द्वितीयस्वामिसगोत्रत्वात् द्वितीयस्वामिसपिण्डानामप्यशुचित्वाज्ञान्येषामित्यस्यासङ्गतिः । अत एवाशौचप्रकरणे सगोत्रत्वकथनं द्वितीयभर्तृसपिण्डानामप्यशुचित्वायेति स्मृतिदर्पण इति वाचस्पतिमिश्रानुसारिणः ।

इदमत्र बोध्यम् । सजातीयास्वन्यगासु त्र्यहम् ।

परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च ॥

त्रिरात्रं स्यात्तथाचार्ये भार्यास्वन्यगतासु च ।

इतिकौर्म्यात् । हीनजातीयास्वन्यगास्वहोरात्रम् ।

निवासराजनि प्रेते तदहः शुद्धिकारणम् ।

परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च ॥

इति वचनात् । हीनतरजातीयास्वन्यगासु नाशौचम् । तदाहतुः— शङ्खलिखितौ ।

अन्यपूर्वासु भार्यासु कृतकेषु मृतेषु च ।

सद्यःशौचं विनिर्दिष्टं जनने मरणेऽपि च ॥ इति ॥

अत्र दाक्षिणात्याः ।

प्रतिलोमभिन्नान्याश्रितासु पत्नीषु प्रसूतासु मृतासु च पूर्वापरपत्योस्त्रिदिनमाशौचम् "परपूर्वासु भार्यासु" इत्यादि कौर्म्यात् । पितुश्च त्रिरात्रं सपिण्डानामेकरात्रम् ।

सूतके मृतके चैव त्रिरात्रं परपूर्वयोः ।

एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः ॥

इति मरीचिवाक्यात् ।

परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च ।
भर्तृपित्रोस्त्रिरात्रं स्यादेकाहं तु सपिण्डतः ॥

इति हारीतैकवाक्यत्वात् । पितृपत्योरेकरात्रं स्वसन्निधाने, तयोरेकाहपक्षे च सपिण्डानां स्नानमात्रमित्याहुः ।

अत्र प्रागुक्तादिपुराणैकवाक्यतयैव व्यवस्था बोध्येति दिक् ।

अथ सम्पूर्णाशौचम् ।

बृहस्पतिः ।

दशाहेन सपिण्डास्तु शुध्यन्ति प्रेतसूतके ।
त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः ॥

मृतसूतके जननमरणयोः सप्तमावधयः सपिण्डाः । तथा च ।

मनुः ।

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।
समानोदकभावस्तु जन्मनाम्नोरवेदने ।

बीजिनमभिव्याप्य सप्तमे पूर्णे सत्यष्टमे सापिण्डताया निवृत्तिस्तदुक्तम् ।

मात्स्ये ।

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥

तथा च बीजिप्रभृतिसप्तमान्ताः सपिण्डाः । ब्राह्मणा दशाहेन, क्षत्रिया द्वादशाहेन, वैश्याः पञ्चदशाहेन, शूद्रा मासेन शुध्यन्तीत्यर्थः । कन्यानां तु तृतीयपुरुषावधयः सपिण्डाः । "सपिण्डता तु कन्यानां सवर्णानां त्रिपौरुषी" इति सुमन्तुवचनात् । तेन कन्याया वृद्धपितामहादौ सापिण्ड्यनिवृत्तिः । अत एव कन्यायाः पितामहभ्रात्रा तत्सन्ततिभिश्च सह सापिण्ड्याभावात् कन्याजन्ममरणयोस्तेषां सापिण्डाशौचं नास्ति किन्तु समानोदकनिमित्तमेवाशौचम् । एवं तेषामपि मरण जननाभ्यां कन्यानामिति शूलपाणिः । कन्यापदार्थस्तु स्त्र्याशौचप्रकरणोक्तो मतभेदेन बोध्यः । समानोदकास्त्रिविधाः । दशमाच्चतुर्दशाज्जन्मनामस्मृतिपर्यन्तभेदात् । "जन्मनामस्मृतेरेके तत्परं गोत्रमुच्यते" इति वृहन्मनुवाक्यात् । तत्राष्टमपुरुषादारभ्य दशमपुरुषपर्यन्ताः सकुल्यास्त्र्यहेण शुध्यन्तीति । तथा च—

मनुः ।

जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते ।

एकादशादारभ्य चतुर्दशपर्यन्ताः पक्षिण्या, पक्षिणीमसपिण्ड इति

गौतमस्मरणात् । पञ्चदशादारभ्य एतेऽस्मत्कुलजा इति गोत्रनामस्मृतिपर्यन्ताः, एकाहेन, "गोत्रजानामहः स्मृतम्" इतिजाबालात् । तत एतेऽस्मद्वंश्या इति ज्ञायमाना केवलगोत्रजास्ते स्नानेन शुध्यन्ति "स्नात्वा शुध्यन्ति गोत्रजा" इति बृहस्पतिरिति गौडाः ।

हारलताकृतस्तु समानोदके नानाशौचकल्पा गुणतारतम्येन व्यवस्थिता इत्याहुः ।

दाक्षिणात्यास्तु । अष्टमादारभ्य चतुर्दशान्ताः समानोदकाः, ते त्र्यहाशौचभागिनस्तद्भिन्नगोत्रजानामेकरात्रमित्याहुः ।

दासादीनां चैदमाशौचं स्वामिना सहैकत्र वासे भवति ।

दासान्तेवासिभृतकाः शिष्याश्चैकत्र वासिनः ॥
स्वामितुल्येन शौचेन शुध्यन्ति मृतसूतके ।

इति बृहस्पतेः । नान्येषां विशेषवचनाभावात् । "जनने मरणे नित्यम्" इत्यादिवचनं व्याकुर्वता हारलताकृताप्येवमुक्तम् । तत्र दासानामानुलोम्ये नाशौचमित्याह ।

विष्णुः ।

पत्नीनां दासानामानुलोम्येन स्वामितुल्यमाशौचम् । मृते स्वामिन्यात्मीयम् । दासानां हि प्रातिलोम्यं तदा भवति यदुत्कृष्टवर्णो हीनवर्णस्य दास्यं करोति, तादृशस्य स्वामितुल्यमेवाशौचम् । समानोदकादेरशौचं च सर्ववर्णेषु तुल्यं वर्णभेदेन विशेषानुक्तेः ।

अथाऽसपिण्डाशौचम् ।

मनुः ।

त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति ।
तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः ॥
श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत् ।
मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च ॥
प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितिः ।
अश्रोत्रिये त्वहः कृत्स्नमनूचाने तथा गुरौ ॥
सब्रह्मचारिण्येकाहमतीते क्षपणं स्मृतम् ।

आचार्यः=उपनीय साङ्गवेदाध्यापकः ।

बृहस्पतिरपि ।

त्र्यहं मातामहाचार्यश्रोत्रियेष्वशुचिर्भवेत् ॥ इति ।

दिवारात्रम्=अहोरात्रम् । एतच्चाशौचभागिनोऽनध्यापके गुरुपुत्रे, जीवत आचार्यस्य पत्न्यां च बोध्यम् । गुरुपुत्रेणाप्यध्यापितस्य शिष्य-

स्य, आचार्याभावे आचार्यपत्नीशुश्रूषकस्य नैष्ठिकब्रह्मचारिणश्च तयो-स्त्रिरात्रम् ।

अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ।
आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते ॥
गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत् ।

इति मनुवचनात् । तथा च त्र्यहमिति प्राप्ते—

गौतमः ।

आचार्यतत्पुत्रशिष्यभार्ज्येषु चैवम् ।

अनौरसगुरुपुत्रासवर्णगुरुपत्नीविषयं मनूक्तमेकाहमशौचमिति पारिजातः । सपिण्डस्याचार्यत्वे दशाह एव, न तु आचार्यत्वनिमित्तमाधिकम् । तथा च ।

आश्वलायनः ।

दशाहं सपिण्डेषु गुरौ वा सपिण्डे त्रिरात्रमितरेष्वाचार्येष्वित्यादि ।

अत्र गुरौ वा सपिण्डे दशरात्रमिति सम्बन्धः । गुरुत्वनिमित्तं नाधिक्यमिति भावः । इतरेषु=असपिण्डेषु आचार्येषु त्रिरात्रमित्यर्थः । अत्र "गुरौ वा सपिण्डे" इत्याश्वलायने पाठ इति वाचस्पतिमिश्राः ।

अत्र मिताक्षरादिकृतः ।

यस्तु मुख्यो गुरुः पिता तदुपरमे सपिण्डत्वाद्दशाह एव, यस्तु पिता पुत्रानुत्पाद्य संस्कृत्य वेदानध्याप्य वेदार्थं ग्राहयित्वा वृत्तिं विदधाति तस्य महागुरुत्वात्तदुपरमे द्वादशरात्रं वा "महागुरुषु दानाध्ययने वर्जयेरन्नित्यादि आश्वलायनोक्तं द्रष्टव्यम् । एवं यदाऽऽचार्यमातामहादेरन्त्येष्टिं शिष्यदौहित्रादिः करोति तदा दशरात्रमाशौचम् ।

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् ।
प्रेताहारैः समं तत्र दशाहेन विशुध्यति ॥

इति मनुवचनादित्याहुः । श्रोत्रिये तूपसम्पन्ने" इति श्रोत्रिये=एकशाखाध्येतरि "एकां शाखामधीत्य श्रोत्रियो भवतीति" बौधायनवचनात् । उपसम्पन्ने=स्वगृहे अन्यत्र वा । एकस्थानवासिनीति हारलता ।

तदाहाङ्गिराः ।

गृहे यस्य मृतः कश्चिदसपिण्डः कथञ्चन ।
तस्याप्यशौचं विज्ञेयं त्रिरात्रमिति निश्चयः ॥

गृह इत्येकस्थानोपलक्षणम् । गृह इत्येव विवक्षितमिति मिश्राः । मैत्रीभ्रातिवैश्यादिना स्वाचारेण चोपसम्पन्ने त्रिरात्रमिति दाक्षिणात्याः । अ-

सपिण्डोऽत्र श्रोत्रियोऽभिमतः । अश्रोत्रिये तु स्वगृहे मृते एकाहमेव । तथा चैकरात्रमित्यनुवृत्तौ—

विष्णुः ।

असपिण्डे तु स्ववेश्मनि मृते इति ।

अत्रासपिण्डः=श्रोत्रियो ग्राह्यः । मातुल इत्यादि । मातुः सहोदरभ्रातरि भिन्नस्थानमृते पक्षिणीं व्याप्याशौचम् । एकस्थानमृते तु "मातृष्वसृमातुलयोः श्वश्रूश्वशुरयोर्गुरौ ऋत्विजि चोपरते त्रिरात्रम्" इति प्रचेतसा त्रिरात्रमुक्तम् । सगुणमातुलविषयं त्रिरात्रमित्यन्ये । मातुर्वैमात्रेयभ्रातरि त्वेकरात्रम् ।

अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् ।
गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च ॥

इति याज्ञवल्क्यवचनस्य तद्विषयत्वात् । अत्र शिष्यमरणे गौतमेन त्र्यहम्, मनुना पाक्षिणी, याज्ञवल्क्येनैकाहमुक्तम् । तत्र गुरुकुलस्थस्यैव शिष्यस्य मरणे तदाचार्यस्य त्रिरात्रम्, उपनीय कृत्स्नं वेदमध्यापितस्यान्यत्र स्थितस्यापि शिष्यस्य मरणे त्वेकाहमित्यविरोधः । ऋत्विङ्मरणे मनुना पाक्षिणी, प्रचेतसा त्रिरात्रम्, ऋत्विजां चेति बौधायनेन च त्रिरात्रमुक्तम् । तत्र यजमानसन्निधौ मरणे त्र्यहम् । अन्यत्र पाक्षिणीत्यविरोधः । कुलक्रमागतानां सर्वदा याजकानां मरणे त्रिरात्रम् । अन्येषां पाक्षिणीति हारलता । बान्धवेषु चेति । अत्र बान्धवपदेनात्मबान्धवाः पितृबान्धवाश्च ग्राह्याः, न तु मातृबान्धवाः । मातृबन्धौ जाबालिनाहर्विधानात् । तथा च—

जाबालिः ।

समानोदकानां त्र्यहं गोत्रजानामहः स्मृतम् ।
मातृबन्धौ गुरौ मित्रे मण्डलाधिपतौ तथा ॥ इति ।

एतेन मातृबन्धावपि पाक्षिणीति दाक्षिणात्यमतं चिन्त्यम् ।

तत्रात्मबान्धवाः—

आत्ममातुः स्वसुः पुत्रा आत्मपितुः स्वसुः सुताः ।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥

इति मिताक्षरायामुक्ताः ।

पितृबान्धवाः—

पितुः पितुः स्वसुः पुत्राः पितुर्मातुः स्वसुः सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेया पितृबान्धवाः ॥

इत्यनेनोक्ताः ।

मातृबान्धवाः—

मातुः पितुःस्वसुः पुत्राः मातुर्मातुःस्वसुः सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥

इत्यनेनोक्ताः । यमानुक्ताः श्वसुरादयोऽप्यत्र बान्धवपदेन गृह्यन्ते । विशेषादित्येके । तथा च—

यमः ।

श्वसुरयोर्भगिन्यां च मातुलान्यां च मातुले ।
पित्रोः स्वसरि तत्पुत्रे पक्षिणीं क्षपयेन्निशाम् ॥

मिताक्षरायाम्—

वृद्धमनुः ।

मातुले श्वसुरे मित्रे गुरौ गुर्वङ्गनासु च ।
अशौचं पक्षिणीं रात्रिं मृता मातामही यदि ।
संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनी सुते ॥ इति ।

शुद्धावित्यनुवृत्तौ—

विष्णुः ।

आचार्ये मातामहे च व्यतीते त्रिरात्रेण ।
अनौरसेषु पुत्रेषु जातेषु च मृतेषु च ।
परपूर्वासु भार्यासु प्रसूतासु मृतासु च ॥

आचार्यपत्नीपुत्रोपाध्यायमातुलश्वसुरश्वश्रूश्वसुर्यसहाध्यायिशिष्येषु चैकरात्रेणेति । श्वसुर्यः=शालकः । अत्र श्वसुरयोर्मरणे प्रचेतसा त्रिरात्रं वृद्धमनुना पक्षिणी, विष्णुना चाहोरात्रमुक्तम् । तत्र जामातुर्गृहे तयोर्मरणे तस्य त्रिरात्रम् । निजगृहस्थयोस्तयोर्निर्गुणयोर्मरणे तस्यैकरात्रम् । सगुणयोस्तु पक्षिणीति मिश्राः । श्वसुरयोः स्वगृहभिन्नेऽपि सान्निधिमरणे त्रिरात्रम् । एकग्राममरणे पक्षिणी, भिन्नग्राममरणेऽहोरात्रम् । एवं मातृस्वसरि तुल्यन्यायात् पितृष्वसरि च बोध्यमिति गौडाः । अत्रेदं बीजं, "श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्" इत्यनेन सान्निधिस्थे यत्र त्रिरात्रमुक्तं तत्रैव "एकाहं स्यादुपाध्याये स्वग्रामश्रोत्रियेऽपि च" इति कौर्मेण सन्निधान एकरात्रविधानादन्यत्रापि तद्रीत्या सान्निध्यतारतम्येणाशौचतारतम्यं कल्प्यते ।

बहूनामेकधर्माणामेकस्यापि यदुच्यते ।
सर्वेषामेव तद्धर्म इति धर्मो व्यवस्थितः ॥

इति बौधायनवचनात्, तत्र च त्रिरात्रं श्वश्रूमरणे श्वसुरे चैतदेव हीत्यस्य स्वगृहमात्रे श्वसुरयोर्मरणे त्रिरात्रपरत्वे "त्रिरात्रमसपि-

ण्डेषु स्वगृहे संस्थितेषु च" इत्यनेन कौर्म्मेण सम्बन्धिमात्रपरेण पुनरुक्तत्वात्, पक्षिरात्रं श्वश्रूमरणे इत्यादेः सन्निधिमात्रे मरणे तत्परत्वं कल्प्यते। एवं स्वग्रामश्रोत्रियेषु चेत्यत्र स्वग्रामत्वेनाविशेषादन्यत्रापि तथा कल्प्यते। एवमन्यत्रापि दौहित्रभागिनेयादेः स्वयमकृतसंस्कारस्य पक्षिणी। स्वयं कृतसंस्कारस्य तु त्रिरात्रं—

संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते।
संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः॥
पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत्।
त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान् मनुः॥

इति मिताक्षराधृतवृद्धयाज्ञवल्कीयात्। संस्कृते=स्वयं दाहादिना संस्कृते। तथा च—

पैठीनसिः।

असम्बन्धिनो द्विजान् दहित्वा सद्यः शौचं सम्बन्धे तु त्रिरात्रमिति।

ऊढकन्यानां तु दाहादिकं विनापि त्रिरात्रम्। संस्कृत इत्यस्योपनीत इत्यर्थादनुपनीतयोर्दौहित्रभागिनेययोः पक्षिणी। उपनीतयोस्तु त्रिरात्रमिति दाक्षिणात्याः। तच्चिन्त्यम्। "दानाध्ययने वर्ज्जयेरन्" "दशाहं सपिण्डेषु गुरौ वासपिण्डे त्रिरात्रम्" इतराचार्यैरित्याश्वलायनवचने दशाहाशौचमुपक्रम्य त्रिरात्राद्याशौचविधानात्। यादृग्वयसि यादृशमरणे सपिण्डानां दशाहादिसम्पूर्णाशौचम्, तादृग्वयस्यैव तादृशमरणे त्रिरात्राशौचम्। अन्यथाऽजातदन्तमातुलादिमरणे भागिनेयादेः पक्षिण्यादि तत्सपिण्डानां सद्यःशौचमिति वैषम्यापत्तेः। इदमशौचमेकस्थानमृते दौहित्रे। भिन्नस्थानमृते दौहित्रे भगिनीपतौ जामातरि च सद्यःशौचम्। तथा च।

मिताक्षरायाम्—

भगिन्यां संस्कृतायां तु भ्रातर्यपि च संस्कृते।
मित्रे जामातरि प्रेते दौहित्रे भगिनीपतौ॥
श्यालके तत्सुते चैव सद्यः स्नानेन शुध्यति।

उपनीतभ्रातृविवाहितभगिन्योर्मरणे सद्यःशौचम्। मातृष्वसृपितृष्वसृमातुलानां भिन्नस्थानमरणे पक्षिणी, एकस्थानमरणे तु त्रिरात्रम्। तथा च—

प्रचेताः।

मातृस्वसृमातुलयोः श्वश्रूश्वसुरयोर्गुरौ।
ऋत्विजि चोपरते त्रिरात्रमिति॥

मातृष्वसृपदं पितृस्वसुरुपलक्षणम् ।

मातृष्वसृपातिपितृस्वसृपत्योर्मृतयोर्नाशौचं वचनाभावात् । मातामहमरणे तु त्रिरात्रं "मातामहानां मरणे त्रिरात्रं स्यादशौचकम्" इति कौर्म्यात् । मातामहीमरणे तु पक्षिणी । "अशौचं पक्षिणीं रात्रिं मृता माता-मही यदि" इतिवचनात् । अत्र पक्षिणीशब्देन दिने श्रवणे दिनद्वयसहित रात्रिवद् रात्रिश्रवणे रात्रिद्वयसहितं दिनमप्युच्यते तुल्यन्यायादिति रुद्रधरः ।

मिश्रास्तु रात्रिमरणेऽपि दिनद्वयसहिता रात्रिरेव सा । "पूर्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः" इति कश्यपवचनादित्याहुः । युक्तं चैतत् । "द्वावहावेकरात्रिश्च पक्षिणीत्यभिधीयते" इति भट्टनारायणधृत-वचनात् । पक्षतुल्यौ दिवसौ पार्श्वयोः स्त इति पक्षिणी रात्रिरिति । स्मार्ता अप्येवम् । प्रेते राजनि सज्योतिः=स्वदेशराजनि मृते सज्योतिः सूर्यतारकात्मकज्योतिर्दर्शनपर्यन्तं दिवा मरणश्रवणे दिनमात्रम्, रात्रि-मरणश्रवणे रात्रिमात्रं प्रजानामशौचमित्यर्थः । इदं चापरिपालकराज-विषयम् । परिपालके राजनि मृते त्वहोरात्रम् । तथा च ।

याज्ञवल्क्यः ।

निवासराजनि प्रेते तदहः शुद्धिकारणम् । इति ।

यत्तु शङ्खेन ।

गृहे मृतासु कन्यासु दत्तासु स्यादहः पितुः ।
निवासराजनि प्रेते जाते दौहित्रके तथा ॥

इति राज्ञो मरणे त्र्यहमुक्तम् । तद्यस्य गृहे राजा म्रियते तस्य बोध्यम्, गृह इत्यस्यानुषङ्गात् । ग्रामनाथे नष्टेऽपि सज्योतिः ।

ग्रामेश्वरे कुलपतौ श्रोत्रिये चातपस्विनि ।
शिष्ये पञ्चत्वमापन्ने शुद्धिर्नक्षत्रदर्शनात् ।

इति वृद्धयाज्ञवल्कीयादिति दाक्षिणात्याः । अश्रोत्रिये त्विति । एतत्स्वगृह-मृतविषयमिति प्रागुक्तम् । अनूचाने साङ्गवेदाध्येतरीति मिश्राः । यस्य क्षत्रियस्य नृपतेर्देशे स्थीयते तस्मिन् श्रोत्रियेऽनधीनवेदे सज्योतिः । अनूचाने=सम्यगधीतवेदे तु नृपतौ मृते अहः कृत्स्नमहोरात्रमित्यर्थं इति हारलता । तथा गुराविति=अत्र "अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः । तमपीह गुरुं विद्यात्" इति मनुवचनपरिभाषितो गुरुर्ग्राह्यः । तत्रा-नुपनीयाल्पश्रुतोपकारके मनुक्तमहर्मात्रम् । अनुपनीयैकशाखाध्या-पके, उपनीय किञ्चिद्वेदाध्यापके, मातुले श्वशुरे मित्रे गुरावित्यादि-

र्ध्वमनूका पक्षिणी । उपनीयैकशाखाध्यापके त्रिरात्रमिति बोध्यम् । तदुक्ताह बौधायनः ।

त्रिरात्रमहोरात्रमेकाहमिति कुर्वीत । आचार्योपाध्यायतत्पुत्रेषु त्रिरात्रमृत्विजां च शिष्यसतीर्थ्यसब्रह्मचारिषु त्रिरात्रमहोरात्रमेकाहमिति कुर्वीत । आचार्ये त्रिरात्रम्, उपाध्यायेऽहोरात्रं, तत्पुत्र उपाध्यायपुत्र एकाहम् । दिवामरणे दिनमात्रं रात्रिमरणे तुल्यन्यायात् रात्रिमात्रम्, यथा संख्येन कुर्वीतेत्यर्थः । आचार्यपुत्रे च हीनजातीये दिनमात्रं रात्रिमात्रं च ऋत्विजां याजकानां संनिधौ मरणे त्रिरात्रं व्याख्यातम् । सतीर्थ्ये=एकस्माद् गुरोरध्ययनं कुर्वाणे । अहोरात्रम् । सब्रह्मचारिणि भिन्नगुरुशिष्ये वेदभागभूतसव्रतचारिणि दिनमात्रं रात्रिमात्रं वा । सतीर्थ्ये एकस्थानभूतं पक्षिणी । तथा च—

गौतमः ।

पक्षिणीमसपिण्डे योनिसम्बन्धे सहाध्यायिनि च ।

असपिण्डे योनिसम्बन्ध इति समानाधिकरणम् । अन्यथाऽसपिण्डेष्वेकाहविधायकहारीतविरोधः स्यात् । रत्नाकरोऽप्येवमिति मिश्राः । असपिण्डे एकादशपुरुषमारभ्याचतुर्दशात् पक्षिणी । तदुक्तं जन्मनामस्मृतिपर्यन्तमहः योनिसम्बन्धे मातृष्वस्रेयपितृष्वस्रेयभागिनेयादिकं इति गौडाः । सब्रह्मचारिणीति सब्रह्मचारी=वेदभागविशेषाध्ययनाङ्गव्रतचारीतयोर्मध्येऽन्यतरस्मिन् मृतेऽपरस्य ब्रह्मचारिण एकाहमिति वचनस्यार्थः ।

गौतमः । सहाध्यायिनि सब्रह्मचारिण्येकाह इति ।

कौर्म्ये ।

परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च ।

त्रिरात्रं स्यात्तथाचार्ये स्वभार्यास्वन्यगासु च ॥

कृतकेषु चेति चकारात् क्षेत्रजादिषु च । तथा च ।

ब्राह्मे ।

औरसं वर्जयित्वा तु सर्ववर्णेषु सर्वदा ।

क्षेत्रजादिषु पुत्रेषु जातकेषु मृतेषु च ।

आशौचं तु त्रिरात्रं स्यात् समानामिति निश्चयः ।

समानां=सजातीयानाम् । तथा च सजातीयानामौरसभिन्नानां क्षेत्रजाद्येकादशपुत्राणां परपूर्वाणां भार्याणां च प्रसवमरणयोस्त्रिरात्रमशौचम् । असमानजातीयानां तेषामहोरात्रम् । तथा च ।

याज्ञवल्क्यः ।

अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च ।

निवासराजनि प्रेते तदहः शुद्धिकारणम् । इति ।

अपकृष्टजातीयानामेषां नाशौचम् । तदाहतुः—

शङ्खलिखितौ ।

अन्यपूर्वासु भार्यासु कृतकेषु सुतेषु च ।
सद्यः शौचं विनिर्दिष्टं जनने मरणे ऽपि च ॥ इति ।

पितृमरणेऽपि तेषां त्रिरात्रमाह ।

ब्रह्मपुराणम् ।

दत्तकश्च स्वयं दत्तः कृत्रिमः क्रीत एव च ।
अपविद्धाश्च ये पुत्रा भरणीयाः सदैव ते ।
भिन्नगोत्राः पृथक्पिण्डाः पृथग्वंशकराः स्मृताः ।
सूतके मृतके चैव त्र्यहाशौचस्य भागिनः ॥

एतच्च कलौ दत्तकपुत्रमात्रविषयम् । अन्येषां "दत्तौरसेतराणां च पुत्रत्वेन परिग्रहः" इत्यादिपुराणेन कलिवर्ज्यषूक्तत्वेन निषिद्धत्वात् ।

ब्रह्मपुराणे ।

आदावेकस्य दत्तायां कुत्रचित्पुत्रयोर्द्वयोः ।
पितुर्यत्र त्रिरात्रं स्यादेकं तत्र सपिण्डनाम् ।
एका माता द्वयोर्यत्र पितरौ द्वौ च कुत्र चित् ।
तयोः स्यात् सूतकादैक्यं मृतकाच्च परस्परम् ।

प्रथममन्येनोढाद्य तेनैव जनितपुत्रा पुत्रसहितैवान्यमाश्रिता, पश्चात् तेनापि जनितपुत्रा पुत्रयोर्यथा संभवं प्रसवमरणयोर्द्वितीयपुत्रपितुस्त्रिरात्रम् । एवंविधे च विषये यत्र परस्त्रीपुत्रजनकस्य त्रिरात्रं तत्र तत्सपिण्डानामेकरात्रं, भिन्नपितृकयोस्तु द्वयोः पुत्रयोरेकमातृजयोः प्रसवे मरणे चान्योन्यमातृजात्युक्तमशौचमिति हारलता । आदावित्यादि । द्वयोः क्षेत्रजस्य तदनन्तरजस्य जननमरणयोः पितुः क्षेत्रिणो, बीजिनो वा स्वस्वपुत्रजन्ममरणयोस्त्रिरात्रं तत्सपिण्डयोरेकरात्रम । भ्रात्रोस्तु परस्परं स्वजात्युक्तम् । एवं पुत्रमात्रोरपीत्यर्थं इति मिश्राः । अत्र विशेषमाह-

नारदः—

पित्रा ये तु नियुक्तायामेकेन बहुभिस्तथा ।
अऋक्थभाजस्ते सर्वे बीजिनामेव ते सुताः ।
दद्युस्ते बीजिने पिण्डं माता चेच्छुल्कतो हृता ।
अशुल्कोपहृतायां तु पिण्डदा वोढुरेव ते ।

अऋक्थभाजः क्षेत्रिणामित्यर्थः । एवकारेण द्विपितृकत्वव्यवच्छेदः । इदं शुल्कतः स्त्रीसंग्रहे बोध्यम् । शुल्काभावे क्षेत्रिण एव पिण्डदा

इति। श्राद्धविवेकेऽप्येवम्। भिन्नपितृकसोदरस्य जनने एकाहम्, मरणे त्र्यहः,।

मात्रैकया द्विपितृकौ भ्रातरावन्यगोत्रजौ।
एकाहं सूतके तत्र त्रिरात्रं मृतके तयोः।

इति मरीचिवचनादिति दाक्षिणात्याः।

ऋष्यशृङ्गः।

अपुत्रस्य च या पुत्री सापि पिण्डप्रदा भवेत्।
तस्य पिण्डान् दशैतान् वा एकाहेनैव निर्वपेत्।

एकाहेनैव वा निर्वपेदित्यन्वयः। व्यवस्थितविकल्पश्चायम्, तेन कृतचूडा कन्या वाग्दानपर्यन्तमेकाहेन, वाग्दत्ता विवाहिता च त्रिरात्रेण, दश पिण्डान् दद्यात्। तथा च।

आदिपुराणम्।

दत्तानां चाप्यदत्तानां कन्यानां कुरुते पिता।
चतुर्थेऽहनि तास्तेषां कुर्वीरन् सुसमाहिताः॥

इति हारलता। तथा च "यावदशौचं पिण्डान् दद्यात्" इत्यादिविष्णुसूत्रैकवाक्यतया कृतचूडाया वाग्दानपर्यन्तमेकाहो वाग्दत्ताविवाहितयोस्त्रिरात्रमशौचमिति लभ्यते। युक्तं चैतत्। जन्ममरणे यस्य यावदशौचं तन्मरणे तस्य तावदशौचस्यौत्सर्गिकत्वादिति स्मार्त्तादयः।

दाक्षिणात्यास्तु कन्याया अपि पिण्डदानपक्षे दशाहमेवेत्याहुः।

स्ववंशे वानप्रस्थे यतौ षण्डके नपुंसके च मृते स्नानमात्रम्। तथा च

पराशरः।

देशान्तरे मृतं श्रुत्वा क्लीबे वैखानसे यतौ।
मृते स्नानेन शुध्यन्ति गर्भस्रावे तु गोत्रिणः॥ इति।

अथ सगुणनिर्गुणभेदेन व्यवस्था।

मनुः।

दशाहं शावमाशौचं सपिण्डेषु विधीयते।
आरात्संचयनादस्थ्नां त्र्यहमेकाहमेव च॥

अस्थ्नामारात् सञ्चयनादिति चतुरहपर्यन्तमित्यर्थः।

यद्यपि "अपरेद्युस्तृतीये वा चाहथो संचयनं भवेत्" इति छन्दोगपरिशिष्टकृतान्यत्रापि तद्विहितं तथापि "चतुर्थे दिवसेऽस्थिसंचयनम्" इति विष्णवाद्युक्तमिह ग्राह्यम्। "त्र्यहमेकाहमेव च" इत्युत्तरोत्तरलघुकालोपदेशात्। ब्राह्मणविषयं चेदं वचनम्। "शुद्ध्येत् विप्रो दशाहेन"

इत्यादिना मनुनैव ब्राह्मणविषयस्योपसंहारात्। तेनात्र क्षत्रियादेर स्थिसंचयनकालो न गृह्यते। तथा च।

दक्षः।

एकाहाद् ब्राह्मणः शुद्ध्येदग्निवेदसमन्वितः।
हीने हीनतरे चैव त्र्यहश्चतुरहस्तथा।

तथा च—

श्रौताग्निमन्त्रब्राह्मणात्मकवेदाध्ययनोभयान्वितो यस्तस्यैकाहः। अनयोरेकतरशून्यो हीनः केवलश्रौताग्निमान् केवलमन्त्रब्राह्मणात्मकवेदाध्ययनवान् वा तस्य त्र्यहः। एतद्द्वयशून्यो हीनतरः केवलस्मार्तश्रौताग्निमान् तस्य चतुरहः। यद्यपि मन्त्रमात्रवेदस्मार्ताग्न्युभयवतश्च हीनतरत्वात्, चतुरह एव युक्तस्तथापि—

त्रिरात्रेण विशुद्ध्येत्तु विप्रो वेदाग्निसंयुतः।
पञ्चाहेनाग्निहीनस्तु दशाहाद् ब्राह्मणब्रुवः॥

इति बृहस्पतिवचने वेदाग्नियोगे त्र्यहविधानात्। वेदविदोऽग्निहीनस्य पञ्चाहविधानाद्वेदपदस्य मन्त्रमात्रपरत्वात्। अग्निपदस्य च स्मार्ताग्निमात्रपरत्वान्मन्त्रमात्रवेदस्मार्ताग्निमतस्त्र्यहः, केवलमन्त्रमात्रविदः पञ्चाह इति सिद्धम्। इदं च।

एकाहाद्ब्राह्मणः शुद्ध्येद्योऽग्निवेदसमन्वितः।
त्र्यहात् केवलवेदस्तु निर्गुणो दशभिर्दिनैः॥

इत्यत्र पराशरवचने केवलवेदग्रहणं केवलश्रौताग्निमपि गृह्णाति। तुल्यन्यायत्वात्। निर्गुणो दशभिर्दिनैरित्यत्र स्मार्ताग्निमन्त्रमात्रवेदयोगात्मकगुणाभावोऽपि बोध्यः। श्रौताग्निमन्त्रब्राह्मणात्मकगुणयोगाभावपरत्वे तु मनुदक्षोक्तचतुरहबृहस्पत्युक्तपञ्चाहपक्षयोर्निर्विषयतापत्तेः। इदं च।

एकद्वित्रिगुणैर्युक्ताश्चतुस्त्र्येकदिनैः क्रमात्।
सर्वेऽपि सर्वयोगेन सद्यः शौचाः प्रकीर्तिताः॥

इति जाबालिवचन एको गुणः स्मार्ताग्निमात्रं, द्वौ गुणौ स्मार्ताग्निमन्त्रमात्रवेदौ, त्रयो गुणाः मन्त्रब्राह्मणात्मकवेदेन मन्त्रमात्रवेदेन वा सह श्रौतस्मार्ताग्निसार्थकवेदश्रौतस्मार्ताग्निस्वाश्रमविहितयावत्क्रियायोगे सद्यः शौचम्। तथा च-

देवलः।

ग्रन्थार्थतो विजानाति वेदमङ्गैः समन्वितम्।
सकल्पं सरहस्यं च क्रियावांश्चेन्न सूतकम्।

मन्त्रार्थतो ग्रन्थतोऽर्थतश्च। अङ्गानि शिक्षा कल्पो निरुक्तछन्दोव्याकरणाज्योतींषि। कल्पो ज्योतिष्टोमादिपद्धतिः, कल्पस्य पृथगुपादानं स्वकर्मप्रतिपत्त्यनुकूलपरकीयकल्पस्यापि ग्रहणार्थम्। रहस्यमुपनिषत्। क्रियावान् श्रौतस्मार्ताग्निहोत्रादिक्रियावान्, स्ववर्णाश्रमविहितयावत्क्रियापरश्च, तादृशब्राह्मणस्यापि नैकाहादिसूतकम्, किन्तु सद्यः शौचमित्यर्थः। तथा च।

पराशरः।

अग्नयो यत्र हूयन्ते वेदो वा यत्र पठ्यते।
सततं वैश्वदेवश्च क्रियावाँश्चेन्न सूतकम्॥ इति।

अत्र वाचस्पतिमिश्राः। जाबालिवचन एको गुणो विज्ञानार्थसाङ्गवेदमात्रम्, द्वौ गुणौ तादृशवेदस्मार्ताग्नी, त्रयो गुणास्तादृशवेदश्रौतस्मार्ताग्नयः, सर्वयोग उक्त एव। बृहस्पतिवचने वा "वेदाग्नी" इत्यत्राग्निपदं स्मार्ताग्निमात्रपरम्। पञ्चाहेनेति अर्थाङ्गादिहीनसकलवेदमात्रविदः पञ्चाहाच्छुद्धिरित्यर्थकम्। तेन गुणत्रयवत एकाहबोधकेनैकगुणवतश्चतुरहविधायकेन जाबालिवचनेनाविरोधः। एकं वेदैकदेशविन्मात्रस्य षडहाशौचे-

सद्यः शौचं तथैकाहस्त्र्यहश्चतुरहस्तथा।
षड्दशाहाद्दशाहश्च पक्षो मासस्तथैव च॥

इति दक्षोक्तस्य षडहस्य गुणहानिप्रयुक्तं तस्यान्यत्राचारितार्थत्वादित्याहुः।

कल्पतरुकृतस्तु।

पराशरवचनेऽग्निपदं श्रौताग्निपरम्। एवं-एकाहाद्ब्राह्मणः शुद्ध्येद्योऽग्निवेदसमन्वितः। इति प्रागुदाहृतवचनेऽपि "त्र्यहाच्छुद्धिमवाप्नोति योऽग्निवेदसमन्वित" इति शङ्खवचने उक्तबृहस्पतिवचने चाग्निपदं स्मार्ताग्निपरम्, दक्षवचने हीन इत्यस्य पराशरवचने च केवलवेदस्त्वित्यस्य श्रौताग्निशून्यस्मार्ताग्निमान् वेदैकदेशाध्यायीत्यर्थः, न त्वग्निमात्रशून्यः, तस्य "पञ्चाहेनाग्निहीनस्त्व"ति बृहस्पतिना पञ्चाहोक्तेः। हीनतर इत्यस्यासम्पूर्णवेदाध्यायीत्यर्थ इत्याहुः।

एवं क्षत्रिवैश्ययोरग्निमतोर्दशाहद्वादशाहौ।

तथा च।

पराशरः।

क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः।
तथैव द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात्॥

शूद्रस्यापि विशेषमाह—

याज्ञवल्क्यः ।

क्षत्रियस्य दशाहानि विशां पञ्चदशैव तु ।
त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः ॥

न्यायवर्तिनः=श्रद्धया द्विजशुश्रूषापञ्चयज्ञादिशूद्रविहितक्रियावतः शूद्रस्य । पञ्चदशाहाशौचम् । अत्यन्तगुणवतां सर्वेषामेव दशाहमाह—

देवलः ।

आशुच्यं दशरात्रं तु सर्वत्राप्यपरे विदुः ।
निधने प्रसवे चैव पश्यन्तः कर्मणः क्षयम् ॥

स्मृत्यन्तरे—

सर्वेषामेव वर्णानां सूतके मृतके तथा ।
दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत् ॥ इति ।

अयमशौचसङ्कोचः सगुणानामप्यशुचिपुत्राद्यसम्पर्क एव ।

सम्पर्काद् दुष्यते विप्रो जनने मरणेऽपि वा ।
सम्पर्काद्विनिवृत्तानां नाशौचं नैव सूतकम् ॥

इति पराशरोक्तेः । अत एव सगुणानामपि सम्पर्के दशाहाद्यबाधः । सोऽपि सम्पर्कविनिवृत्ताशौचानिवृत्तिस्तत्तत्कर्मण्येव, सर्वत्राशौचानिवृत्तिस्तु सगुणानां निर्गुणानां च सर्वेषां दशाहादूर्ध्वमेव । तथापि "दशाहं शावमाशौचम्" इत्यादिसामान्यप्राप्तदशाहादिबाधपुरस्सरमेव "एकाहाद् ब्राह्मणः शुद्ध्ये"दित्यादिविधायकं भवति । बाधस्य चानुपपत्तिनिबन्धनत्वात् यावत्यबाधितेऽनुपपत्तिप्रशमो न भवति तावदनेन बाधितव्यम् । अतः कियदनेन बाध्यमित्यपेक्षायामपेक्षितविशेषसमर्पणक्षमस्य "अग्निवेदसमन्वित" इत्यादिवाक्यशेषस्य दर्शनादग्निहोत्रादौ कर्मणि स्वाध्यायाध्ययनादौ च व्यवतिष्ठते न पुनर्दानादावपि। अत एव ।

दशाहं शावमाशौचं सपिण्डेषु विधीयते ।
अर्वाक्सञ्चयनादस्थ्नां त्र्यहमेकाहमेव च ॥

इति कल्पचतुष्टयम्—

कुशूलधान्यको वा स्यात् कुम्भीधान्यक एव वा ।
त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा ॥

इत्येतत्प्रतिपादितचतुर्विधगृहस्थविषयम् । यो दशाहोपयोगिसंचयकुशूलधान्यस्तस्य दशाह एव, चतुरहपर्याप्तधनस्य कुम्भीधान्यस्य चतुरहः, त्र्यहपर्याप्तधनस्य त्र्यहः । एकाहपर्याप्तधनस्यैकाहः,

यस्य च सद्यः शौचं विना नार्त्युपशमस्तस्याद्यस्तानिकस्य सद्यः शौचमिति मिताक्षरा।

हारलताकृतोऽपि होमाध्यापनार्थमेवायमशौचसंकोचो, न तु प्रतिषिद्धसंध्यापञ्चमहायज्ञाद्युपयोगार्थम्। यथा छन्दोगपरिशिष्टम्।

सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते।
होमः श्रौते तु कर्त्तव्यः शुष्कान्नेनापि वा फलैः॥

अत्र होमेऽशौचसंकोचो न तु सन्ध्यादाविति प्रतीयते।

पारस्करोऽपि।

नित्यानि निवर्त्तेरन् वैतानवर्जमिति।

वैतानः=श्रौतो होमः।

मनुरपि।

न वर्द्धयेदघाहानि प्रत्यूहेन्नाग्निषु क्रियाम्।
न च तत्कर्म कुर्वाणः सनाभ्योऽप्यशुचिर्भवेत्॥

अत्र तत्कर्मेति तच्छब्देनाग्निहोत्रकर्मोपादानो होमक्रियार्थमेवाशौचाभावं दर्शयति। तथा—

शङ्खलिखितौ।

अग्निहोत्रार्थं स्नानोपस्पर्शनादेव पिता शुचिः।
अत्राग्निहोत्रार्थमिति वदन्तौ क्रियान्तरेऽशौचं दर्शयतः।

तथा च गौतमः।

सद्यः शौचं राज्ञां कार्याविरोधाय, ब्राह्मणानां च स्वाध्यायानिवृत्त्यर्थमिति।

तदेवमादिबहुतरवचनैः केवलं होमाध्यापनार्थमेवाशौचसंकोचः, सर्वाशौचनिवृत्तिस्तु सर्वेषामेव सगुणानां निर्गुणानां च दशाहोत्तरमेवेति प्रतीयत इत्याहुः।

पारस्करगृह्यव्याख्याता हरिहरमिश्रोऽप्येवम्।

आचार्यचूडामण्यादयस्तूक्तछन्दोगपरिशिष्टपारस्करशङ्खलिखितगौतमवचनेषु होमाध्यापनार्थं सद्यःशौचसिद्धेस्त्र्यहादिमध्येऽपि होमाध्यापनप्रतीतेः सन्ध्यापञ्चमहायज्ञादावेव त्र्यहाद्यशौचं वाच्यम्। तथा च त्र्यहादुत्तरं संध्याद्युपयोगसिद्धिर्निष्प्रत्यूहा। न च होमाध्यापनार्थं सद्यः शौचाभिधानं सर्वगुणयोगिसद्यःशौचपरम्। अन्येषान्तु त्र्यहादुत्तरमेव होमाध्यापने इति वाच्यम्।

जन्महानौ वितानस्य कर्मत्यागो न विद्यते।
शालाग्नौ केवले होमः कार्यं एवान्यगोत्रजैः॥

इत्यादिजाबालीयेन वितानकर्मात्यागकाले स्वयं स्मार्त्तकर्मत्यागवि-

श्यानस्य सद्यःशौचविषयत्वेनानुपपन्नत्वात्। न च त्र्यहाद्यशौचिनां त्र्यहा-द्युत्तरं दशाहमध्ये वितानकर्म स्वयं कार्यं स्मार्त्ताग्निहोमस्तु चतुरहादु-त्तरमपि दशाहमध्येऽन्यगोत्रजलाभे तद्द्वारा तदलाभे स्वयं कार्यं इति जाबालीयार्थः, कल्पनामात्रत्वात्। त्र्यहोत्तरं वितानकर्मवत् चतुरहा-द्युत्तरं स्मार्त्ताग्निहोमस्य स्वयंकरणसंभवेऽकर्तृत्वानौचित्यात्। तस्मादे-काहत्र्यहाद्यशौचमध्येऽपि श्रौताग्निहोमः स्वयं कार्यः, स्मार्त्ताग्निहोमास्तु चतुरहमध्येऽन्यगोत्रजद्वारा कार्यः।

सन्ध्यापञ्चमहायज्ञादिकमेकाहत्र्यहादिमध्य एव त्याज्यम्। तदुत्तरं तु सर्वाशौचनिवृत्त्या श्रौतस्मार्त्ताग्निहोमसन्ध्यापञ्चमहायज्ञादिकं स्वयं कार्यमिति सिद्धम्। न च "उभयत्र दशाहानि" इत्यादिजाबालीयेन दशा-हाशौचिनामेव एकाहत्र्यहादिकालीनस्नानाचमनाभ्यासादग्निहोत्रार्हता बोध्यते। अत एवाभ्यासावैयर्थ्यमिति वाच्यम्। निरग्नीनां स्वीयसपि-ण्डानां दशाहाशौचेऽपि साग्नेः स्नानोपस्पर्शनाभ्यासादग्निहोत्रार्हता बो-ध्यत इत्येतदर्थम्। तच्च सद्यःशौचार्थम्। एकमाचमनङ्कर्माङ्गपरमित्य-भ्यासः। न च—

सन्ध्यापञ्चमहायज्ञान्नैत्यकं स्मृतिकर्म च।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया॥

इति जाबालीये तन्मध्ये हापयेदित्यनेनैव सिद्धेर्दशाहान्ते पुनः क्रि-येति यदुक्तं तदेकाहाद्यशौचविगमेऽपि दशाहमध्ये सन्ध्याद्यकरणार्थ-मेवेति वाच्यम्। तर्हि समानोदकमरणादित्र्यहाशौचोत्तरमपि दशाह-मध्ये सन्ध्याद्यकरणापत्तेः। दशाहपदस्याशौचकालोपलक्षकत्वे तु वैयर्थ्यं दुर्वारम्। वस्तुतो "अनर्हः कर्मणां विप्रः सन्ध्याहीनो यतः स्मृत" इत्यादिवचनैः सन्ध्यायाः सर्वकर्मसाधारणाङ्गत्वावगतेरशौच-मध्यकर्त्तव्यताकत्वम्, न तु साधारणस्येति न्यायमूलमेव "दशाहान्ते पुनः क्रिया" इत्यनेनोक्तम्। यद्वा महागुरुनिपाते वर्षपर्यन्तं दैवपित्र्यक-र्मनिषेधात्तत्प्रतिप्रसवतयोक्तं दशाहान्त इत्यादि। किं च "सद्यःशौचं तथैकाहस्त्र्यहश्चतुरहस्तथा" इत्यादि दक्षवचने दशाहादिसमभिव्या-हारादेकाहादिनापि सर्वाशौचनिवृत्तिरवसीयते। परन्त्वयमशौचसं-कोचो युगान्तरविषयः "वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथा" इत्या-दिना कलौ तत्प्रतिषेधात्।

दशाह एव विप्रस्य सपिण्डमरणे सति।
कल्पान्तराणि कुर्वाणः कलौ भवति किल्बिषी॥

इति हारीतवचनाच्चेत्याहुः। माधवीयेऽप्येवम्।

अथ वर्णसन्निपाताशौचम् ।

दक्षः ।

वर्णानामानुलोम्येन स्त्रीणामेको यदा पतिः ।
दशाहषट्त्र्यहैकाहाः प्रसवे सूतकं भवेत् ॥

प्रसवो मरणमप्युपलक्षयति । वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणां याः स्त्रियः कन्यकास्तासां यथानुलोम्येन हीनहीनतरहीनतमपरिणय-क्रमेण एकः पतिस्तदा सवर्णायाः प्रसवमरणयोः पत्युः स्वजात्युक्तम् । हीनायाः षडहम् । हीनतरायास्त्र्यहम् । हीनतमाया एकाहमशौचमि-त्यर्थः । तथा च जातेषु मृतेषु चेत्यनुवृत्तौ—

विष्णुः ।

ब्राह्मणस्य क्षत्रियविट्शूद्रेषु सपिण्डेषु षड्रात्रत्रिरात्रैकरात्रैः क्षत्रियस्य विट्शूद्रेषु षड्रात्रत्रिरात्राभ्यां वैश्यस्य शूद्रेषु षड्रात्रेण । एतेनैतदुक्तं भवति । अनन्तरवर्णे षड्रात्रम् । एकान्तरे त्रिरात्रम् । द्व्यन्तरे एकरात्रम् । उक्तक्रमविरुद्धक्रमेण परिणये त्वाह—

बृहस्पतिः ।

शुध्येद्विप्रो दशाहेन जन्महान्योः स्वयोनिषु ।
सप्तपञ्चत्रिरात्रैस्तु क्षत्रविट्शूद्रयोनिषु ॥

व्युत्क्रमविवाहस्य निषिद्धत्वात्प्रायश्चित्तास्पदत्वाच्च निन्दित-तयाऽशौचातिरेको युक्तः । इदं हीनब्राह्मणविषयमिति स्मृतिदर्पणे ।

कौर्म्मे ।

क्षत्रविट्शूद्रदायादा ये स्युर्विप्रस्य बान्धवाः ।
तेषामशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते ॥
राजन्यवैश्यावप्येवं हीनवर्णासु योनिषु ।
स्वमेव शौचं कुर्यातां विशुद्ध्यर्थं न संशयः ॥
सर्वे तूत्तमवर्णानां शौचं कुर्युरनिन्दिताः ।
तद्वर्णविधिदृष्टेन स्वं तु शौचं स्वयोनिषु ।

अत्र न संशय इत्यन्तेन हीनवर्णेषु उत्तमवर्णस्य यत्स्वीयमशौच-मुक्तम्, तद्देशभेदव्यवस्थितम् । व्यक्तं चाह—

आदिपुराणे ।

बान्धवेषु तु विप्रस्य क्षत्रविट्शूद्रजातिषु ।
मृतेषु चाथजातेषु दशाहाच्छुद्धिरिष्यते ।
देशधर्मप्रमाणत्वात् षड्रात्रं क्षत्रियेष्वथ ।
त्रिरात्रमपि वैश्येषु शूद्रेष्वेकाहमेव च ।

क्षत्रियस्याथ वैश्यस्तु वैश्यस्य वृषलस्तथा ॥
म्रियते जायते बन्धुस्तथाशौचं स्वकं चरेत् ।
शूद्रा वैश्याः क्षत्रियास्तु क्रमादुत्तमजातिषु ॥
बान्धवेषु चरत्यन्तं यत्संख्यं तेषु विद्यते ।

अत्र बान्धवेषु च विप्रस्येत्यादिना देशधर्मप्रमाणत्वादित्यन्तेन क्षत्रादित्रिषु ब्राह्मणस्य यद्दशाहाशौचमुक्तम्, तद्देशविशेषव्यवस्थितमिति स्वयमेवोक्तम्। "षड्रात्रं क्षत्रियेष्वथेत्यादिना शूद्रेष्वेकाहम्" इत्यन्तेन तु दक्षोक्तविषयेऽशौचमुक्तम्। "क्षत्रियस्याथ वैश्यस्त्वित्यादिना स्वकं चरेत्" इत्यन्तेन वैश्यप्रसवमरणयोः क्षत्रियस्य द्वादशाहं शूद्राप्रसवमरणयोर्वैश्यस्य पञ्चदशाहं देशविशेषव्यवस्थितमुक्तम्। अपकृष्टक्षत्रियवैश्यविषयमिति मिश्राः। शूद्रा वैश्या इत्यादिना च ब्राह्मण्याः सपत्न्याः प्रसवमरणयोः क्षत्रियाद्यास्तिस्रः स्त्रियो दशाहं कुर्युः, क्षत्रियायाः सपत्न्याः प्रसवमरणयोर्वैश्या च शूद्रा च पञ्चदशाहं कुर्वीतेत्युक्तम्। एतद्व्यक्तमाह—

विष्णुः।

हीनवर्णानामधिकवर्णेषु सपिण्डेषु तदशौचव्यपगमेऽधिकवर्णाशौचापगमे नानाजातिषु भ्रातृषु साविण्ड्यं पुरुषत्रयविश्रान्तं इति। आहतुः शङ्खलिखितौ।

यद्येकजाता बहवः पृथक्क्षेत्राः पृथक्धनाः।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्त्तते त्रिषु ॥

एकपिण्डाः=सपिण्डाः। पृथक्शौचाः=मातृजात्युक्ताशौचाः। "मातुर्जातिर्न संशय" इति यमवचनात्। दक्षानुक्ताखिलव्यवस्थां स्पष्टमाह।

कूर्मपुराणे।

षड्रात्रं वा त्रिरात्रं वा एकरात्रं क्रमेण हि।
वैश्यक्षत्रियविप्राणां शूद्रेष्वाशौचमेव च ॥
अर्द्धमासोऽथ षड्रात्रं त्रिरात्रं द्विजपुङ्गवाः।
शूद्रक्षत्रियविप्राणां वैश्येष्वाशौचमिष्यते ॥
षड्रात्रं द्वादशाहं च विप्राणां वैश्यशूद्रयोः।
आशौचं क्षत्रिये प्रोक्तं क्रमेण द्विजपुङ्गवाः ॥
शूद्रविट्क्षत्रियाणां तु ब्राह्मणे संस्थिते सति।
दशरात्रेण शुद्धिः स्यादित्याह कमलोद्भवः ॥

वैश्यपरिणीतशूद्राप्रसवे तस्या मरणे तत्पुत्रमरणे च वैश्यस्य षड्रात्रमशौचम्। क्षत्रियपरिणीतशूद्राप्रसवे तस्या मरणे तत्पुत्रमरणे च

क्षत्रियस्य त्रिरात्रम् । ब्राह्मणपरिणीतशूद्राप्रसवे तस्यामरणे तत्पुत्रमरणे च ब्राह्मणस्यैकरात्रम् । वैश्यमरणे वैश्यपरिणीतवैश्याप्रसवे तस्या मरणे तत्पुत्रमरणे च वैश्यपरिणीतशूद्रायास्तत्पुत्रस्य च पञ्चदशाहमशौचम् । क्षत्रियपरिणीतवैश्याप्रसवे तस्या मरणे तत्पुत्रमरणे च क्षत्रियस्य षड्रात्रम्, ब्राह्मणपरिणीतवैश्याप्रसवे तस्या मरणे तत्पुत्रमरणे च ब्राह्मणस्य त्रिरात्रम् । ब्राह्मणपरिणीतक्षत्रियाप्रसवे तस्यामरणे तत्पुत्रमरणे च ब्राह्मणस्य षड्रात्रमशौचम् । क्षत्रियस्य मरणे क्षत्रियपरिणीतक्षत्रियाप्रसवे तस्या मरणे तत्पुत्रमरणे क्षत्रियपरिणीतवैश्या तत्पुत्राः क्षत्रियपरिणीतशूद्रातत्पुत्राश्च द्वादशाहं कुर्युः । ब्राह्मणमरणे ब्राह्मणपरिणीतब्राह्मणीप्रसवे तस्या मरणे तत्पुत्रमरणे च ब्राह्मणपरिणीतानां क्षत्रियावैश्याशूद्राणां तासां च पुत्राणां च दशरात्रमशौचम् ।

आपस्तम्बः ।

क्षत्रविट्शूद्रजातीया ये स्युर्विप्रस्य बान्धवाः ।
आशौचं पैतृकं तेषां विभक्तानां तु मातृकम् ।

ब्राह्मणपरिणीतानां क्षत्रियावैश्याशूद्राणां पुत्राः पित्रा सहैकत्रवसन्तः स्वीयस्वीयमातुः प्रसवमरणयोः पितृसम्बन्धिदशाहमेवाशौचं कुर्युः । पित्रा सह कृतविभागास्तयोरेव निमित्तयोः स्वीयस्वीयमातृजात्युक्तमशौचं कुर्वीरन् । "ये स्युर्विप्रस्य बान्धवा" इत्यत्र येऽव्यवस्था मृतसूतके इति पाठः । अव्यवस्था=अविभक्ताः इत्यर्थ इति मिश्राः । यथा विभागेऽशौचं तथैव पितृमरणेऽपीत्याह—

जाबालिः

नानाजातिषु पारक्यं पैतृकं जीवतः पितुः ।
अतीते मातृकं विद्यात् पारक्यमुभयोरपि ॥

एकपुरुषपरिणीतासु नानाजातीयासु स्त्रीषु मध्ये पारक्ये परिणेतृजातितः पराऽन्या या जातिस्तज्जातीयायाः स्त्रियाः प्रसवे मरणे च तस्या एव पूर्वोत्पन्नः पुत्रः पितरि जीवति पितृजात्युक्तमशौचं कुर्यात् । अतीते पितरि मातृजात्युक्तमशौचम् । एवं च पितृजीवनमरणयोरुभयोरपि पक्षयोः पारक्यमेवाशौचं भवति । पितृजीवने मातृजातितः पारक्यं पितृमरणे पितृजातितः पारक्यमिति हारलता । नानाजातिष्वेकतमस्य जननमरणयोः पितरि जीवति पितृवत् षडहादिकमेव भिन्नजातीयानां भ्रातृणामशौचं भवति । पितरि मृते मातरि जीवन्त्यां मातृजात्युक्तमेव दशाहादिकम् । उभयोरपि मृतयोः सतोर्यस्य जन्ममरणे

मृते ? आत्युक्तमेवाशौचं सर्वेषामपि भ्रातृणामित्यर्थः । नचोत्तमजातीय-भ्रातॄणां षट्त्र्यहैकाहबोधकेन हीनानां च मृतमातृजात्युक्ताशौचबोधकेन विष्ण्वादिवचनेन सह विरोधः । जाबालिवचनस्य विशेषविषयतया सामान्यविषयाणां विष्णवादिवचनानां मातापितृसत्त्वविषयकत्वात् । नचैवमपि "पारक्यमुभयोरपी"त्यनेन मातापितृसत्त्वे उत्तमानां हीनमातृजात्युक्ताशौचबोधकेन विष्ण्वादिवचनेन सह विरोधः । जाबालिवचनस्यात्यन्तापकृष्टब्राह्मणविषयकत्वादिति वाचस्पतिमिश्राः । अत्र विशेषमाह—

विष्णुः ।

पत्नीनां दासानामानुलोम्येन स्वामितुल्यमशौचम् । मृते स्वामिन्यात्मीयमानुलोम्येन सवर्णहीनतरादिक्रमेण परिणीतानां स्त्रीणां तत्पुत्राणां च सपिण्डजननमरणयोः पतिजीवनपक्षे यत्पुनरिवाशौचम् तदसत्त्वे तु स्वजात्युक्तमेव, विलोमपरिणीतानां तत्पुत्राणां च सर्वदा स्वजात्युक्तमेव, । पत्युक्ताशौचभागित्वे आनुलोम्यपरिणयनस्य विष्णुना विशिष्योपन्यस्तत्वात् । दासानां प्रातिलोम्यं तदा भवति यदूयुत्कृष्टवर्णो हीनवर्णस्य दास्यं करोति तादृशस्य स्वामितुल्यत्वाशौचम् । किन्तूत्कृष्टवर्णदासानां हीनवर्णानां प्रसवमरणयोः स्वामितुल्याशौचभागिता । एतच्च स्वामिना सहैकत्र वासे भवतीत्युक्तं प्राक् । अपकृष्टस्त्रीषूत्तमवर्णजनितानां मूर्द्धाभिषिक्तादीनां मातृजात्युक्ताशौचम् । ब्राह्मणात् क्षत्रियायामुत्पन्नः क्षत्रिय एव, क्षत्रियात् वैश्यायामुत्पन्नो वैश्य एव, वैश्याच्छूद्रायामुत्पन्नः शूद्र एवेत्यनेन मूर्द्धावसिक्तानां क्षत्रियादिधर्मप्रतिपादनात् । उत्तमवर्णस्त्रीषु अपकृष्टवर्णजनितानां सूतमागधकुम्भकाररजकादीनां प्रतिलोमजानां शूद्रतुल्यमशौचम् । "शौचाशौचं च कुर्वीरन् शूद्रवद्वर्णसङ्करा "इत्यादिपुराणादिति"गौडाः । माधवादयोऽपि । विज्ञानेश्वरस्तु "प्रतिलोमा धर्महीना" इति स्मरणादेषां नास्त्येवाशौचम् । किन्तु जनने मरणे च मूत्रपुरीषोत्सर्गवन्मलापकर्षार्थं स्नानमात्रम् । एवं प्रतिलोमाश्रितस्त्रीणां प्रतिलोमदासानामपि नाशौचम । "वर्णानामानुलोम्येन दास्यं न प्रतिलोमत" इति निषेधातिक्रमादित्याह ।

अथ विदेशस्थाशौचम् ।

तत्र तत्तन्मरणनिमित्ताशौचाहर्मध्ये तत्तन्मरणश्रवणे शेषाहोभिः शुद्धिः । स्वजात्युक्तमरणाशौचकालातिक्रमे वत्सरमध्ये तादृशाशौचनिमित्तमरणश्रवणे सार्ववर्णिकसपिण्डानां त्रिरात्रेण, वत्सरातिक्रमेण श्रवणे उदकदानसहितस्नानमात्रेण ।

विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् ।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥
अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत् ।
संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति ॥

इति मनुवचनात् । विगतं मृतम् । अत्र च विदेशस्थपदेन तद्देशस्थोऽपि तद्दिनेऽज्ञातमरणो गृह्यते, अन्यदेशस्थश्च । अनिर्दशमित्यत्र दशरात्रस्येत्यत्र च दशपदमशौचकालमात्रोपलक्षणम् । तेन त्रिरात्रादिमध्ये समानोदकादिमरणश्रवणेऽपीयं व्यवस्था । अन्यदेशमृतमित्यादिवक्ष्यमाणबार्हस्पत्यादिवाक्यैकवाक्यत्वादिति सर्वे ।

मैथिलास्तु दशाहेत्विति । अत्र दशाहपदं जात्युक्तसंपूर्णाशौचकालपरम्, असंपूर्णाशौचेऽतिक्रान्ताशौचस्य "तस्मिन्नेवातिकालज" मित्यादिनाग्रे निराकर्त्तव्यत्वादित्याहुः ।

स्पृष्ट्वैवाप इति स्नानं कृत्वेत्यर्थः ।

अतीते सूतके प्रोक्तं सपिण्डानां त्रिरात्रकम् ।
तथैव मरणे स्नानमूर्द्धं संवत्सरात्—

इति कौर्म्यात् ।

अत्र स्नानमुदकदानस्याप्युपलक्षणम् । "सर्वेषां वत्सरे पूर्णे प्रेते दत्त्वोदकं शुचिः" इति याज्ञवल्क्यात् । मनुवचने स्पृष्ट्वैवेत्येवकारस्तु कालापेक्षानिवृत्तये । इदं चतुर्णामपि वर्णानाम् । "तुल्यं वयसि सर्वेषामतिक्रान्तं तथैव च" इति व्याघ्रपादवाक्यात् ।

अतीते सूतके स्वे स्वे त्रिरात्रं स्यादशौचकम् ।
संवत्सरे व्यतीते तु सद्यः शौचं विधीयते ॥

इति शङ्खवचने वीप्साबलादत्र सूतकपदं मरणाशौचपरम् । सपिण्डजननाशौचकालातिक्रमेऽशौचाभावस्य वक्तव्यत्वात् । अतिक्रान्ताशौचं गृहिण एव न तद्द्रव्यस्येत्याह मिताक्षरायाम्—
अङ्गिराः ।

अतिक्रान्ते दशाहे तु पश्चाज्जानाति चेद् गृही ।
त्रिरात्रं सूतकं तस्य न तद्द्रव्येषु कर्हिचित् ॥

मातापित्रोः पत्युश्च मरणे वर्षमध्ये श्रुते त्रिरात्रम्, वर्षोपरि द्वितीयवर्षमध्ये श्रवणे त्वेकाहः ।

अशौचाहेष्वतीतेषु बन्धुश्चेच्छ्रूयते मृतः ।
तत्र त्रिरात्रमाशुच्यं भवेत् संवत्सरान्तरे ॥
ऊर्द्धं संवत्सराद्याद् बन्धुश्चेच्छ्रूयते मृतः ।

भवेदेकाहमेवात्र तच्च संन्यासिनां न तु ॥

इति देवलीयात् । आद्यादिति विशेषणात् द्वितीयादिवर्षोत्तरं स्नानमात्रं सपिण्डसाधारणम् । बन्धुरत्र माता पिता स्त्रीणां भर्त्ता च, तथा-चेश्वराचार्यधृतवाक्यम् ।

महागुरुनिपातेऽब्दात्परमेकाहमिष्यते । इति ।

पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः ।

श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् ॥

इति वाक्यमपि तद्देशीयविषयमिति स्मार्त्ताः ।

यत्र पित्रादिमरणं श्रुतं वर्षान्तर्भावबहिर्भावादि न ज्ञातं तत्र श्रवणमारभ्य सम्पूर्णाशौचप्रतिपादकं तद्वाक्यमित्यन्ये ।

यत्तु—

मैथिलाः ।

अशौचाहेष्वतीतेषु बन्धुश्चेच्छ्रूयते मृतः ।

तत्र त्रिरात्रमाशुच्यं भवेत्संवत्सरान्तरे ॥

ऊर्द्ध्वं सम्वत्सरार्धात्तु श्रूयते चेन्मृतः स्वकैः ॥

भवेदेकाहमेवात्र तच्च संन्यासिनां न तु ॥

इति देवलवचने पाठः । अत्र संवत्सरान्तरे संवत्सरपूर्वार्द्धे । अत एवा-होर्द्ध्वं संवत्सरार्द्धादिति । अत्रापि श्रुत्वा चोर्द्ध्वदशम्याः पक्षिणीमिति गौतमसूत्रात् , उत्तरार्द्धस्य पूर्वार्द्धे पक्षिणी, दिने श्रवणे दिनद्वयसहिता रात्रिः । रात्रिश्रवणेऽपि पूर्वमेव दिनं ग्राह्यमिति वचनात् । उत्तरार्द्धे एके-काहः । तथा च षण्मासपर्यन्तं सपिण्डमरणे त्रिरात्रं, सप्तमादित्रिके पक्षिणी, नवमादित्रिके एकाहः, वर्षोत्तरं स्नानमात्रम् । मातुः पितुः सपत्नमातुश्च पितरौ चेन्न मृतौ स्यातां पितुपत्न्यामतीतायामित्यादिना व्यवस्थेत्याहुः । तच्चिन्त्यम् । गौतमाद्युक्तपक्षिण्यादेः सगुणादिविषय-त्वेनोपपत्तौ प्रागुक्तमनुकूर्मशङ्खवचनस्वारस्यत्यागानौचित्यात् । तथा हि । पक्षिण्यशौचं चतुःपञ्चाहाशौचिनाम् । एकाहाशौचं त्र्यहाशौचि-नामिति मन्मते व्यवस्थोपपद्यते । त्वन्मते पक्षिण्यशौचस्य संवत्सरोत्त-रार्द्धे सन्निवेशस्तत्प्रथमार्ध एव वेत्यत्र विनिगमकाभावादयुक्ता व्यव-स्थेति गौडाः । दाक्षिणात्यास्तु दशाहाद्युत्तरं मासत्रयमध्ये जातशुक्राशौचनि-मित्तमरणश्रवणे त्रिरात्रम् , चतुर्थादिमासत्रिके पक्षिणी, सप्तमादित्रिके अहः, नवमादूर्ध्वमुदकदानसहितं स्नानमात्रं कालनिरपेक्षम् । तथा च

वृद्धवशिष्ठः ।

मासत्रये त्रिरात्रं स्यात् षण्मासे पक्षिणी तथा ।

अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यति ॥
स्नानेनोदकदानमप्युपलक्ष्यत इत्याहुः ।

अत्र मैथिलाः ।

इदमतिक्रान्तत्रिरात्राद्याशौचं वक्ष्यमाणपारिभाषिकविदेशादन्यस्मिन् देशे स्थितस्य मरणश्रवणे । पारिभाषिकविदेशस्थस्य तु दशाहाद्यूर्ध्वमरणश्रवणे सद्यः शौचम् । तथा पैठीनसिः । देशान्तरमृतस्य सद्यः शौचं वैवस्वत आह । तथा च ।

स्मृत्यन्तरे ।

देशान्तरमृतं श्रुत्वा क्लीबे वैखानसे यतौ ।
मृते स्नानेन शुद्ध्यन्ति सद्यः शौचं तु गोत्रिणः ॥

याज्ञवल्क्यः ।

प्रोषिते कालशेषः स्यात्पूर्णे दत्त्वोदकं शुचिः ।

पराशरः ।

भृग्वग्निमरणे चैव देशान्तरमृते तथा ।
बाले प्रेते च संन्यस्ते सद्यः शौचं विधीयते ॥

तत्र विदेशपरिभाषायाम् ।

बृहन्मनुः ।

वाचो यत्र विभिद्यन्ते गिरिर्वा व्यवधायकः ।
महानद्यन्तरं यच्च तद्देशान्तरमुच्यते ॥
देशनामनदीभेदान्निकटोऽपि भवेद्यदि ।
तत्तु देशान्तरं प्रोक्तं स्वयमेव स्वयंभुवा ॥
दशरात्रेण या वार्ता यत्र न श्रूयतेऽथवा ।

बृहस्पतिः ।

देशान्तरं वदन्त्येके षष्टियोजनमायतम् ।
चत्वारिंशद्वदन्त्येके त्रिंशदेके तथैव च ॥

गिरिर्वेति वाकारो न विकल्पे वाक्यभेदापत्तेः । किन्तु समुच्चये "वा स्याद्विकल्पोपमयोरिवार्थे च समुच्चये" इति कोशात् । तेन त्रितयविशिष्टस्य देशान्तरान्वयदेशनामेत्युपलक्षणेन त्रितयवैशिष्ट्यं विवक्षितम् । निकटोऽपि=त्रिंशद्योजनाभ्यन्तरोऽपि । वस्तुतो वाचो यत्र विभिद्यन्ते इत्यनेन द्वितयवैशिष्ट्ये एकतरवैशिष्ट्ये वा देशान्तरत्वं बोध्यते देशनामनदीभेदादित्यनेन त्रितयाविशिष्टस्य, त्रितयवैशिष्ट्याभावेऽपि षष्टियोजनान्तरितस्य तत्त्वं बोध्यते शास्त्रीयषष्टियोजनानां दशाहेनोत्सर्गतो गमनयोग्यत्वादिति युक्तम्—

तथैवाग्रेतनबृहस्पत्यादिवाक्यैकवाक्यत्वात् । योजनप्रमाणन्तु—

स्मृत्यर्थसारे प्रोक्तम्—

तिर्यग्यवोदरान्यष्टावूर्ध्वा वा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलम् ॥
वितस्तेर्द्विगुणोऽरत्निः ततः किष्कुस्ततो धनुः ।
धनुः सहस्रे द्वे क्रोशश्चतुष्क्रोशं तु योजनम् ॥

तदयमर्थः । त्रितयवैशिष्ट्ये मृतस्य त्रिंशद्योजनाभ्यन्तरे द्वे वैशिष्ट्ये त्रिंशद्योजनोपरि एकवैशिष्ट्य चत्वारिंशद्योजनोपरि वाणीगिरिमहानदीभेदाभावेऽपि षष्टियोजनान्तरान्तराले वैदेश्यमिति । तादृशविदेशमृतयोर्मातापित्रोरपीयमेव व्यवस्थेत्याहुः । दाक्षिणात्या अप्येवम् । परन्तु मातापित्रोरेतादृशविदेशमरणेऽपि यदा कदाचिदपि श्रवणे श्रवणादिनात् पूर्णमशौचम् । एवं सपत्नमातुस्त्रिरात्रमित्येषां विशेषः । निर्दशपुत्रजन्मश्रवणे पितुः स्नानमात्राच्छुद्धिः ।

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।
सवासा जलमाप्लुत्य शुद्धो भवति तत्क्षणात् ॥

इति मनुवचनात् । अत्र निर्दशज्ञातिमरणेऽङ्गास्पृश्यत्वनिवृत्तिरूपैव शुद्धिः सचैलस्नानात्, न तु सर्वाशौचनिवृत्तिः । तत्र त्रिरात्रादिसत्त्वात् । निर्दशस्वपुत्रजनने तु सर्वाशौचनिवृत्तिरेव सङ्कोचकाभावात् । स्वपुत्रजननातिरिक्तजननाशौचेऽतीते श्रुते स्नानमपि नास्ति । "नाशौचं प्रसवस्यास्ति व्यतीतेषु दिनेषु च" इति देवलोक्तात् । अनिर्गतदशाहजननश्रवणे शेषाहोभिः शुद्धिः ।

अन्यदेशमृतं ज्ञातिं श्रुत्वा पुत्रस्य जन्म च ।
अनिर्गते दशाहे तु शेषाहोभिर्विशुद्ध्यति ॥

इति बृहस्पत्युक्तेः । आत्मनः सपिण्डस्य वा पुत्रजन्म श्रुत्वेत्यर्थः । श्रुत्वा देशान्तरस्थे जननमरणेऽशौचशेषेण शुद्ध्येदिति विष्णुवचने—

देशान्तरगतं श्रुत्वा सूतकं शावमेव वा ।
तावत्स्यादशुचिर्विप्रो यावच्छेषः समाप्यते ॥

इति कौर्मे च सामान्येनोपादानादिति । हारलताप्येवम् । ननु सामान्यस्य विशेषैकवाक्यतया विशेषपरत्वस्य युक्तत्वात् विशेषस्य सामान्यपरत्वे लक्षणाप्रसङ्गात् पुत्रपदवैयर्थ्याच्च नैवं युक्तम् । न चोक्तबृहस्पतिविष्णुवाक्ययोर्मूलभूता लाघवात् सूतके शेषाहोभिर्विशुद्ध्यतीत्येकैव श्रुतिः कल्प्यते, एतयोरेकवाक्यतया विशेषश्रुतिकल्पने पुत्रजन्मनि शेषाहोभिर्विशुद्ध्यति, मरणे शेषाहोभिर्विशुद्ध्यतीति श्रुतिद्वयकल्प-

नापत्तेरिति वाच्यम् । पुत्रेति विशेषोपादानवैयर्थ्यापत्त्या पुत्रवत्या एव श्रुतेः कल्पयितुमुचितत्वात् कल्पनायाः शब्दार्थानुरोधित्वादिति चेत् । न । सर्वत्र जन्मपदस्य स्वपुत्रजन्मपरत्वे सपिण्डजन्मनि किं श्रवणमारभ्य दशाहमशौचम्, किं वाशौचाभावः । नाद्यः । स्वपुत्रजन्मश्रवणापेक्षया सपिण्डजन्मश्रवणाशौचाधिक्ये वैषम्यापत्तेः । नान्त्यः । "नाशौचं प्रसवस्यास्ति व्यतीतेषु दिनेषु च" इति देवलवचनेऽतीतग्रहणाद्दशाहाभ्यन्तरे प्रसवश्रवणेऽशौचप्रतीतेः । नचेदं स्वपुत्रजननाशौचादिनाऽत्ययेऽशौचनिषेधकम् । निर्दशं ज्ञातिमरणमित्यादिमनुवाक्यात्तत्र दशाहात्यये सद्यःशौचात् । तस्मात्पुत्रपदं सम्बन्धिमात्रोपलक्षकमिति । आनिर्दशसपिण्डजन्मश्रवणेऽपि शेषाहोभिः शुद्धिरिति सिद्धम् ।

अथ मृत्युविशेषाशौचम् ।

तत्र यमः ।

डिम्बाशनिहतानां च तथैव प्राणसत्रिणाम् ।
नद्यश्वापददंष्ट्रिभ्यः सद्यः शौचं विधीयते ॥
शस्त्रेणाभिमुखो यस्तु वध्यते क्षात्रधर्मणा ।
यज्ञः सन्तिष्ठते तस्य सद्यः शौचं विधीयते ॥
अग्निमरुप्रपतने वीराध्वन्यप्यनाशके ।
दीक्षितानां च सर्वेषां सद्यःशौचं विधीयते ॥

डिंबो=डिंबाहवः । नृपतिरहितं युद्धम् अशस्त्रकलहहासमदवदेवेति मिश्राः । अशनिः=वज्रम् । प्राणसत्रिणः=गोब्राह्मणाद्यर्थप्राणत्यागिनः । नदीति जलाशयमात्रोपलक्षणम् । श्वापदाः=व्याघ्रादयः । दंष्ट्रिणः=सर्पाद्याः । यज्ञः=श्राद्धादिरूप इति निबन्धकारः । ज्योतिष्टोमादियज्ञफलं सन्तिष्ठते उत्पद्यते अनेन प्राप्यत इति याज्ञिकादित्यन्ये । मरुः=निर्जलदेशः । मेरुपाठं स्वीकृत्य उच्चप्रदेश इत्यर्थ इत्यन्ये । वीराध्वनि-मरणं संकल्प्य महापथगमने । अनाशके अनशने । दीक्षितानां चेति दीक्षणीयेष्टिजनितसंस्काराणां यजमानानां तदुत्तरं कर्त्तव्ययज्ञकर्मार्थं सद्यःशौचमित्यर्थः । यथा च ।

याज्ञवल्क्यः—

ऋत्विजां दीक्षितानां च यज्ञकर्माणि कुर्वताम् ।
आपद्यपि हि कष्टायां सद्यःशौचं विधीयते ॥ इति ।

मनुः ।

डिंबाहवहतानां च विद्युता पार्थिवेन च ।
गोब्राह्मणस्य चैवार्थे यस्य चेच्छति पार्थिवः ॥

यस्याज्ञाकारिणोऽमात्यादेः, स्वस्त्ययनादिकारिणः पुरोहितादेर्वा

अशौचाभावं नृपतिरिच्छति तस्यापि स्वीयसूतकमृतकादौ सद्यःशौचम् । सद्यःशौचानुवृत्तौ—

शङ्खलिखितौ ।

अथ शस्त्रानाशकाग्निरज्जुभृगुजलविषप्रमापणेष्वेवमेव ।

शस्त्रेण उदरभेदादिना आत्मघाते, अनाशकेनाहारत्यागेन, अग्निप्रवेशेन, रज्जुना, आत्मन उद्बन्धनेन, उच्चादतिकठिनतरभूभागात् पतनेन, जलप्रवेशविषभक्षणाभ्यां वा मरण एवमेव सद्यःशौचमित्यर्थः ।

पराशरः ।

ब्राह्मणार्थे विपन्नानां दण्डिनां गोग्रहेषु च ।
आहवेषु विपन्नानामेकरात्रमशौचकम् ॥

दण्डिनामिति त्रिष्वभिसंबध्यते । गोब्राह्मणार्थे दण्डेन युध्यमानानां संग्रामे च दण्डेन युध्यमानानां सांमुख्ये मरणे एकरात्रमशौचम् । दण्डिनामित्यत्र वन्दिनामिति पाठः वन्दिनां चौरादिगृहीतानां वन्दिदशायामेव विपन्नानामित्यर्थ इति मिश्राः । संग्रामे क्षतेन कालान्तरमृते एकरात्रमिति दाक्षिणात्याः ।

गौडास्तु—क्षतेन सप्ताहाद् मृते त्रिरात्रं तदूर्ध्वं जात्युक्तम् । यथा व्याघ्रः ।

क्षतेन म्रियते यस्तु तस्याशौचं भवेद् द्विधा ।
आसप्ताहात् त्रिरात्रं स्याद् दशरात्रमतः परम् ॥

दशरात्रमिति जात्युक्ताशौचपरम् । शस्त्रहतस्य तु त्र्यहाभ्यन्तरं मृते त्रिरात्रं, तदूर्ध्वं संपूर्णाशौचम् । तदाह स एव ।

शस्त्रघाते त्र्यहादूर्ध्वं यदि कश्चित्प्रमीयते ।
अशौचं प्राकृतं तस्य सर्ववर्णेषु नित्यशः ।

अत्र घातपदं क्षततरशस्त्रघातपरम् । पारिभाषिकशस्त्रघातपरमपि । यथा । देवीपुराणे—

पक्षिमत्स्यमृगैर्यस्तु शृङ्गिदंष्ट्रिनखैर्हताः ॥
पतनानशनप्रायैर्वज्राग्निविषबन्धनैः ।
मृता जलप्रवेशेन ते वै शस्त्रहताः स्मृताः ॥ इति ।

न च शस्त्रघातपदस्य प्रागुक्तोभयपरत्वे किं मानं विना क्षतं शस्त्रघातेन प्रपतनादिना च विलम्बमृते अशौचे भेदाकाङ्क्षानिवृत्त्यर्थमुभयपरत्वस्वीकाराद् । अन्यथा तत्राशौचानध्यवसायापत्तेरित्याहुः ।

बृहस्पतिः ।

डिम्बाहवे विद्युता च राज्ञा गोविप्रपालने ।

सद्यःशौचं हतस्याहुस्त्र्यहं चान्ये महर्षयः ॥

डिम्बाहवे शस्त्रैरभिमुखहतस्य सद्यःशौचम्, लगुडादिना शस्त्रेण वा पराङ्मुखहतस्य त्रिरात्रम्। वज्राभिघातेन मरणं मे भवत्विति शास्त्रविहितबुद्धिपूर्वं हतस्य मरणे सद्यःशौचम्। शास्त्राविहितबुद्धिपूर्वं प्रमादतो वा वज्रहतस्य मरणे त्रिरात्रम्। राज्ञावधार्हापराधेन हतस्य सद्यःशौचम्। अन्यापराधेन हतस्य सद्यःशौचम्। अल्पापराधेन हतस्य त्रिरात्रम्। गोविप्ररक्षार्थं शस्त्रेण युद्ध्यमानस्याभिमुखहतस्य सद्यःशौचम्, पराङ्मुखहतस्य त्रिरात्रमिति।

कौर्म्मे।

सद्यःशौचं समाख्यातं दुर्भिक्षे चाप्युपद्रवे।
डिम्बाहवहतानां च विद्युता पार्थिवैर्द्विजैः ॥
सद्यःशौचं समाख्यातं शापादिमरणे तथा।

उपद्रवे=राजविप्लवे, औपसर्गिकात्यन्तमरकपीडने च। तथा च—

पराशरः।

उपसर्गमृते चैव सद्यः शौचं विधीयते।

अत एव—

आपद्यपि च कष्टायां सद्यःशौचं विधीयते ॥

इति याज्ञवल्कीये। अनिरुद्धशूलपाणिमहोपाध्यायप्रभृतिभिरौपसर्गिकात्यन्तमरकपीडायां सद्यःशौचमित्युक्तम्। उपसर्गमृत इति यद्यपि "उपसर्गः स्मृतो रोगभेदोपप्लवयोरपि" इति विश्वकोषादुपसर्गपदस्य रोगविशेषादिवाचकता, तथापि मुनिप्रयुक्तत्वादत्र त्रिविधोत्पातात्मकोऽप्युपसर्गोऽभिमतः। यथा—

गर्गसंहितावार्हस्पत्ययोः।

अतिलोभादसत्याद्वा नास्तिक्याद्वाप्यधर्मतः।
नरापचारान्नियतमुपसर्गः प्रवर्त्तते।
ततोपचारान्नियतमपरज्यन्ति देवताः ॥
ताः सृजन्त्यद्भुतांस्तांस्तु दिव्यनाभसभूमिजान्।
त एव त्रिविधा लोके उत्पाता देवनिर्मिताः।
विचरन्ति विनाशाय रूपैः सम्भावयन्ति च ॥

एतेनोपसृजन्तीति व्युत्पत्त्या देहाभ्यन्तर एव यावत्तापादि वर्त्तेतावत्कालं मरणे सद्यः। बहिर्भावेन व्रणत्वे सति मरणे स्वजात्युक्तमेवेति मिश्रोक्तं चिन्त्यम्। द्विजैः=ब्राह्मणैः। अत्र बुद्धिपूर्वं ब्राह्मणहतस्यैवाशौचाभावो बोध्यः। प्रमादाद् ब्राह्मणहते स्वाशौचादिकमस्त्येव।

अन्यथा—

विषशस्त्रश्वापदाहितिर्यग्ब्राह्मणघातिनाम् ।
चतुर्दश्यां क्रिया कार्या अन्येषां तु विगर्हिता ॥

इति मरीचिवाक्यं निर्विषयं स्यात् । अत्र हि विषादिसाहचर्या-द् ब्राह्मणकृतो घातोऽस्यास्तीत्यर्थः । स च ब्राह्मणहतस्याशौचाद्यभावे नोपपद्यते । शापादिमरणे इति । आदिनाभिचारादिसंग्रहः ।

आवालिः ।

दुर्भिक्षे राष्ट्रसम्पाते शस्त्रगोब्रह्मघातिते ।
पतितेऽनशनप्रेते विदेशस्थे शिशौ न च ॥

नाशौचमित्यर्थः । मिताक्षरायां—

गौतमः ।

प्रायोनाशकशस्त्राग्निविषोदकबन्धनप्रपतनैश्चेच्छतामिति ।

प्रपतनं=गिरिशिखरादितः पातः । अत्रेच्छतामिति विशेषणात् प्रमाद-कृते दोषाभावः प्रतीयते । तस्यां—

स्मृत्यन्तरे ।

चाण्डालादुदकात्सर्पाद् ब्राह्मणाद्वैद्युतादपि ।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥
उदकं पिण्डदानं तु प्रेतेभ्यो यत्प्रदीयते ।
नोपतिष्ठति तत्सर्वं अन्तरिक्षे विनश्यति ॥

एतदपीच्छापूर्वमात्महननविषयम् । गौतमेनेच्छापूर्वमुदकेनात्मह-ननेऽशौचनिषेधात् । अत्रापि चाण्डालादुदकात्सर्पादित्युदकसाह-चर्याद् बुद्धिपूर्वविषयत्वनिश्चयात् । पापकर्मणामिति विशेषणादपि तथा । ततो हि चाण्डालादिहेतुकमरणेऽस्य पापहेतुत्वं प्रतीयते । पापं च निषेधातिक्रमहेतुकं तन्निषेधश्च पुरुषव्यापारगोचरो न च प्रमादमृते मरणानुकूलः पुरुषव्यापारः, तस्माद्यः क्रोधात् शोकाद्वा विना शास्त्रा-भ्यनुज्ञां चाण्डालादिना स्वात्मव्यापादिना विवादं कुर्यात् । पाक्षिक-स्वानिष्टानादरेण चाण्डालदुष्टदंष्ट्र्यादिग्रहणमारणादीच्छयागतस्तैर्मा-रितो, यश्च कान्तारदुर्दिनसंशीर्णनौकादिगमनं पूर्ववत् कृतं तेषां सर्वत आत्मानं गोपायीतेति विधेर्न संशयं प्रपद्येतेत्यादिनिषेधस्य चातिक्रम-निमित्तपापघनामयमाशौचोर्ध्वदैहिकप्रतिषेध इति सिद्धं । प्रमादम-रणेऽशौचं नान्यथेति । एतदेवाह—

ब्रह्मपुराणम् ।

प्रमादादपि निःशङ्कस्त्वकस्माद्विधिदेशितः ।
शृङ्गिदंष्ट्रिनखिव्यालविषवह्निजलादिभिः ॥

चाण्डालैरथवा चौरैर्निहतो वापि कुत्रचित् ।
तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः ॥
शृङ्गिदंष्ट्रिनखिव्यालविषवह्निस्त्रिया जलैः ।
आदरात्परिहर्त्तव्यः कुर्वन् क्रीडां मृतस्तु यः ॥
नागानां विप्रियं कुर्वन् दग्धश्चाप्यथ विद्युता ॥
निगृहीतः स्वयं राज्ञा चौर्यदोषेण कुत्रचित् ।
परदारान् रमन्तश्च द्वेषात् तत्पतिभिर्हताः ॥
असमानैश्च संकीर्णैश्चाण्डालाद्यैश्च विग्रहम् ।
कृत्वा तैर्निहतास्तांस्तु चाण्डालादीन् समाश्रिताः ॥
गवाग्निविषदाश्चैव पाषण्डाः क्रूरबुद्धयः ।
क्रोधात्पापं विषं वह्निं शस्त्रमुद्बन्धनं जलम् ॥
गिरिवृक्षप्रपातं च ये कुर्वन्ति नराधमाः ।
कुशिल्पजीवनाश्चैव सूनालङ्कारकारिणः ।
मुखेभगाश्च ये केचित् क्लीबप्राया नपुंसकाः ॥
ब्रह्मदण्डहता ये च ये चान्ये ब्राह्मणैर्हताः ।
महापातकिनो ये च पतितास्ते प्रकीर्तिताः ॥
पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसंचयः ।
न चाश्रुपातः पिण्डो वा कार्यं श्राद्धादिकं क्वचित् ॥
एतानि पतितानां च यः करोति विमोहितः ।
तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्न चान्यथा ॥

प्रमादात्=अनवधानात् । निःशङ्कः=शृङ्गिदंष्ट्र्यादिहिंस्रजन्तुसान्निध्याशङ्कारहितः । विधिदेशितः=मरणकर्मणा प्रेरितः सन् पलायनासमर्थः अकस्मात् शृङ्ग्यादिभिर्हतो भवति तदा सर्वमेव दाहादि कार्य्यम् । व्यालो-दुष्टगजः । वह्निस्त्रियेति वह्निना स्त्रिया चेत्यर्थ इति गौडाः । वह्निक्रियेति दाक्षिणात्यानां पाठस्तु युक्तः । कुर्वन् क्रीडामित्यनेन विनापि मरणाभिसन्धिमेतैः समं क्रीडतो मरणे नाशौचमिति लभ्यते । अत एवाग्रे क्रोधात्पापं विषं वह्निमित्यनेन पौनरुक्त्यं न भवतीत्येके । क्रीडामित्यत्रांशिकप्रतिसन्धावपि दर्पादिगणनेन तत्करणं, क्रोधादित्यनेन मरणार्थमेव तत्करणमतो न पौनरुक्त्यमित्यन्ये । नागानामिति । क्रीडादिवशात्सर्पाणां विप्रियकारी यः सर्पादिना हत इत्यर्थः । दग्धश्चेतिशास्त्रविहितः । बुद्धिपूर्वं विद्युद्धत इत्यर्थः । चौर्येति=वधार्होऽपराधमात्रोपलक्षणम् । रमन्तः=रमयन्तः । चाण्डालाद्यैश्च विग्रहमिति । इदं दर्पादिवशा-

द्विग्रहे बोध्यम् । अन्यत्र तु—

अग्निपुराणम्—

दंष्ट्रिभिः शृङ्गिभिर्वापि हता म्लेच्छैश्च तस्करैः ।
ये स्वाम्यर्थे हता यान्ति राजन् स्वर्गं न संशयः ॥
सर्वेषामेव वर्णानां क्षत्रियस्य विशेषतः ।

विष्णुधर्मोत्तरे—

स्वाम्यर्थे ब्राह्मणार्थे वा मित्रकार्ये च ये हताः ।
गोग्रहे निहता ये च ते नराः स्वर्गगामिनः ॥ इति ।

गदेति । गदं व्याधिजनकमौषधम् । तथा च—

परस्य गदादिदातार इत्यर्थः । शस्त्राग्निगददाश्चैवेति दाक्षिणात्याः पठन्ति । पाषण्डा इति । वेदबाह्यरक्तपट्टमौण्ड्यादिव्रतचर्या पाषण्डम् तदेषामस्तीत्यर्थः । अर्श आदित्वादच् तथा च पाषण्डशालिन इत्यर्थः । तथा च पाषण्डमाश्रिताः स्तेना इति याज्ञवल्क्यः । क्रूरबुद्धयो=नित्यं परापकारमतयः । कुशिल्पजीविनः=सजातीया एव चर्ममांसस्थ्यादिमद्यपात्रनिर्मातारः । शूनालङ्कारधारिणः=प्राणिवधस्थानोपकरणधारिणः । मुखेभगाः=कण्ठदेशोत्पन्नभगरोगाः, मुखमैथुना वोत्कलदेशप्रसिद्धाः । क्लीबप्राया=इति पुरुषकर्मसमर्था अपि सन्तानाहेतवः । क्लीबानां पतितत्वोक्तिर्भूम्ना, ब्रह्मदण्डहता ब्राह्मणविषयापराधकरणान्निहता इत्यनिरुद्धभट्टाः । "ये च वै ब्राह्मणैर्हता" इत्युत्पादितमन्युना ब्राह्मणेनाभिचारात् शापात् शस्त्राद्वा हता इत्यर्थः । प्रायश्चित्तविवेकोऽप्येवम् । ब्रह्मदण्डो=ब्रह्मशापाभिचारादिः, ब्राह्मणैरुत्पादितमन्युभिः साक्षाद्धता इत्यर्थ इत्यन्ये । महापातकिन इति अतिपातकयनुपातकयादेरप्युपलक्षणम् । तथा च स्मृत्यन्तरे ।

आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया । इति ।

मनुः ।

वृथासङ्करजातानां प्रव्रज्यासु च तिष्ठताम् ।
आत्मनस्त्यागिनां चैव निवर्त्ततोदकक्रिया ॥
पाषण्डमाश्रितानां च चरन्तीनां च कामतः ।
गर्भभर्तृद्रुहां चैव सुरापीनां च योषिताम् ॥ इति ।

वृथाजाता=अनाश्रमिणः । दम्पतिसाध्यकर्मानधिकारात् । सङ्करजाताः=प्रातिलोम्येन भिन्नवर्णस्त्रीपुरुषजाताः । प्रव्रज्यास्विति हंसपरमहंसैकदण्डत्रिदण्डादिप्रव्रज्याभेदाद्बहुत्वम् । अत्र सर्वत्र दाहादिनिषेधेनाशौचनिषेधोऽप्युपलक्ष्यते ।

नाशौचं नोदकं नाश्रु न दाहाद्यन्त्यकर्म च ।

ब्रह्मदण्डहतानां च न कुर्य्यात्कटधारणम् ॥

इति यमस्मरणात् । कटः=प्रेतधारणखट्वादि । स्नेहादिनैषां दाहादिकरणे तु तन्निमित्तमशौचं प्रायश्चित्तं च कर्त्तव्यम् । तत्र प्रायश्चित्तं प्रायश्चित्तप्रकाशे द्रष्टव्यम् । यस्त्वारब्धप्रायश्चित्तोऽन्तरा म्रियते तस्य विनैव प्रायश्चित्तं दाहादि कार्यम् ।

प्रायश्चित्ते व्यवसिते कर्त्ता यदि विपद्यते ।
पूतस्तदहरेवासाविहलोके परत्र च ॥

इति हारीतवाक्यात् ।

शास्त्राविहितबुद्धिपूर्वमरणे सद्यः शौचं न प्रमादमरण इति ।

व्यक्तमाहाङ्गिराः ।

व्यापादयेत्तथात्मानं स्वयं योऽग्न्युदकादिभिः ।
विहितं तस्य नाशौचं नाग्निर्नाप्युदकक्रिया ॥
अथ कश्चित्प्रमादेन म्रियेताऽग्न्युदकादिभिः ।
आशौचं तस्य कर्तव्यं कर्तव्या चोदकक्रिया ॥

कूर्म्मपुराणे ।

पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः ।
न चाश्रुपातः पिण्डो वा कार्यं श्राद्धादिकं क्वचित् ॥
व्यापादयेत्तथात्मानं स्वयं योऽग्निविषादिभिः ।
विहितं तस्य नाशौचं नाग्निर्नाप्युदकादिकम् ॥
अथ कश्चित् प्रमादेन म्रियतेऽग्निविषादिभिः ।
तस्याशौचं विधातव्यं कार्य्यं चाप्युदकादिकम् ।

अत्राङ्गिरोवाक्ये कूर्म्मवाक्ये च तस्याशौचमित्यत्राशौचं त्रिरात्रं कश्यपोक्तं बोध्यम् । तथा च ।

कश्यपः ।

अनशनमृतानामशनिहतानामग्निजलप्रविष्टानां भृगुसङ्ग्रामदेशान्तरमृतानां गर्भाणां जातदन्तमृतानां त्रिरात्रेण शुद्धिरिति । शास्त्रानुमत्या प्रमादाद्वा अनशनाशनिवह्निजलप्रवेशेन मृतानां त्रिरात्रम् ।

देशान्तरस्थस्य दशाहोत्तरं मरणश्रवणे गर्भाणां सप्तमाष्टममासीयानां मरणे सर्वाशिसर्वविक्रयिसपिण्डानां त्रिरात्रमित्यर्थः । शास्त्राविहितबुद्धिपूर्वमरणे त्रिरात्रं स्पष्टमाह ।

वृद्धगार्ग्यः ।

वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥

तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः।
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमिष्यते ॥

शौचाल्लुप्तः शौचकरणासमर्थः। स्मृतेर्लुप्तः=तत्कालानुभूतस्याप्य स्मर्त्ता। तथा च—

ब्रह्मपुराणम्।

दुश्चिकित्स्यैर्महारोगैः पीडितस्तु पुमान् यदि।
प्रविशेज्ज्वलनं दीप्तं करोत्यनशनं तथा।
अगाधं तोयराशिं वा भृगोः पतनमेव च।
गच्छेन्महापथं वापि तुषारगिरिमादरात्।
प्रयागवटशाखाग्राद्देहत्यागं करोति वा।
स्वयं देहविनाशस्य काले प्राप्ते महामतिः।
उत्तमान् प्राप्नुयात् लोकान्नात्मघाती भवेत्क्वचित्।
वाराणस्यां मृतो यस्तु प्रत्याख्यातभिषक्क्रियः।
काष्ठपाषाणमध्यस्थो जाह्नवीजलमध्यगः।
अविमुक्तमुखस्तस्य कर्णमूलगतो हरः।
प्रणवं तारकं ब्रूते नान्यथा कुत्रचित्क्वचित्।
महापापक्रियः स्वर्गे दिव्यान् भोगान् समश्नुते।
एतेषामधिकारस्तु तपसां सर्वजन्तुषु।
नराणामथ नारीणां सर्ववर्णेषु सर्वदा।
तादृशं सूतकं येषां जीवितं कुत्रजिद्भवेत्।
अशौचं स्यादहस्तेषां वज्रानलहते तथा।

महामतिः=आवश्यकं मरणं निश्चित्य स्वयमेव देहं त्यक्त्वा परलोकं साधयामीति दृढीकृतबुद्धिः। महापापक्रिय इति। महापातक्यपि स्वर्गं प्राप्नोति किमुतान्य इति सातिशयत्वदर्शनमात्रम्। जीवितं तु क्वचिदिति। एवंविधक्रियाप्रवृत्तानां तत्काले कदाचिज्जीवने कालान्तरेण मरणेऽपि त्रिरात्रमित्यर्थः। तदेवं विहितात्मघातप्रायश्चित्तरूपे आत्मघाते काम्ये च प्रयागमरणे जलभृग्वनशनादिमरणे त्रिरात्रमेव, प्रागुक्तकाश्यपवचनस्य प्रमादमरणशास्त्राविहितबुद्धिपूर्वमरणविषयत्वात्। तत्र कामनया जलप्रवेशादिना मरणफलान्याह दानरत्नाकरे—

नृसिंहपुराणे।

जलप्रवेशी चानन्दं प्रमोदं वह्निसाहसी।
भृगुप्रपाती सौख्यं तु रणे स्वर्याति निर्मलम्।
अनशनमृतो यः स्यात् स गच्छेत्तु त्रिविष्टपम्।

एवं कामनया अग्निविशुद्धिसिद्धयाग्न्यादिना मरणेऽपि तीर्थकाण्ड-कल्पतरौ फलप्रदर्शनात्तत्रापि काम्यत्वाविशेषादेवं बोध्यम् ।

अत्र मैथिला दाक्षिणात्याश्च । "वृद्धः शौचस्मृतेर्लुप्त" इत्यादि वृद्ध-गार्ग्यैकवाक्यतया भृग्वग्न्यनशनादिमृते त्रिरात्रादिबोधकानि काश्यपादिवाक्यानि वृद्धादिविषयाण्येव । तथा च प्रमादमृतानां कूर्माङ्गिरोवाक्ये यदशौचमुक्तं तत्स्वजात्युक्तं संपूर्णमेवेत्याहुः । तच्चिन्त्यम् । डिम्बाहवेत्यादिना शास्त्रविहितात्मघाते प्रवृत्तानामेवाशौचाभावोक्तेः । विहितात्मघातेऽशौचाभावहेतोरभावात्पूर्णे शौचे प्राप्ते "वृद्धः शौचस्मृतेर्लुप्त" इत्यादिना यत्त्रिरात्रविधानं तत्रापमृत्युरेव निदानं वाच्यम् । तच्च विहितात्मघात इव प्रमादादात्मघातेऽप्यविशिष्टम् । अत एव "दुश्चिकित्स्यै" रित्यादिवचने प्रविशेज्ज्वलनं दीप्तमित्युक्त्वा पुनर्वज्राऽनलहते तथेत्यनेन प्रमादाद् वज्रानलहते त्रिरात्रविधानम् । तथाच विहितात्मघाते त्रिरात्रमित्युत्सर्गः । स च युद्धादिहते सद्यः शौचविधायकेन क्वचिदेवापोद्यते । अत एव च काश्यपवाक्ये अशन्यादिहतानामविशेषेणैव त्रिरात्रमुक्तं प्रमादमृतानां स्वजात्युक्तमिति क्वापि न श्रुतम् । किं च "व्यापादयेत्तथात्मान"मित्याद्यङ्गिरोवचने स्वयमित्यनेन पर्युदासाद् बुद्धिपूर्वकात्मघातेतरत्राशौचमिति प्राप्तम् । तावतैव प्रमादादग्न्यादिमृतेऽपि सामान्यतोऽशौचप्राप्तौ "अथ कश्चित्प्रमादेन" इत्यादिवचनस्य वैयर्थ्यापत्त्याऽशौचविशेषविधायकत्वमवश्यं वाच्यम्, स च विशेषः काश्यपवचनैकवाक्यतया त्रिरात्रव्यापित्वमेवेति प्रमादाद्विषादिहतानां त्रिरात्रमेवेति सर्वे गौडाः ।

अत्र दक्षिणात्याः ।

येऽप्राप्तमरणकाला अपि फलकामनया प्रयागादौ विहितोपायेन म्रियन्ते । स्त्रियश्च भर्तृमरणे ? तेषां सम्पूर्णमेवाशौचम् , और्ध्वदेहिकं च, विहितमरणत्वेन निषेधाप्रवृत्तेः । त्रिरात्रस्य च "वृद्धः शौचस्मृतेः" इति वचनात् प्राप्तमृत्युप्राप्तकालविषयत्वात् । अत एव मरणान्तिकप्रायश्चित्तमृतानामप्येवम् । यस्य तु प्राणान्तिकं प्रायश्चित्तं स मृतः शुद्ध्येत् । सर्वाण्येव तस्मिन्नुदकादीनि प्रेतकार्याणि कुर्युरिति गौतमवचनाच्चेत्याहुः । यत्तु प्राप्तमृत्युकालानां मरणान्तिककाम्यकर्माणि सद्यः शौचं तादृशानामेव प्रायश्चित्तरूपेऽग्न्यादिना मरणेऽहोरात्रम् । तादृशानामेव प्रायश्चित्तरूपे वज्रादिभिर्मरणे सद्यःशौचम् । साहसेन त्वेभिर्मरणेऽशौचाद्यभाव इति वाचस्पतिमिश्राद्युक्तम् । तच्चिन्त्यम् । मानाभावात् । प्रागुक्तवचनानामेतदर्थस्वारस्याभावात् । न च साहसेनाग्न्यादिहते

विहितं तस्य नाशौचमित्यादिनाऽशौचनिषेधादग्न्यादिहते सद्यः शौचोक्तिरुक्तविषयैवेति वाच्यम्। सद्यः शौचपदस्य न राज्ञां राजकर्मणीत्यादावप्रकृते शौचाभावपरत्वेनैव निर्वाहात्। अत एवावैधात्मघातिनि मृते न स्नानं न वा बन्धनस्थलीत्यागः। एकरात्रं त्वाहवे पराङ्मुखत्वादिना हतस्यैवेत्युक्तम्।

दाक्षिणात्यास्तु—

डिम्बाहवहतानां च विद्युता पार्थिवेन च।

हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनाम्॥

इत्यत्र गोब्राह्मणहतानामन्वक्षमित्यादिवाक्यैरन्वक्षं यावच्छवो दृश्यते तावदशौचं स्नानमात्रापनेयमशौचं प्रतिपादितमतो "विहितं तस्य नाशौचम्" इति त्रिरात्राद्यशौचनिषेधपरम्। तथाचाग्निजलगोब्राह्मणादिभिरात्मघाते स्मृतिष्वाशौचाभावः सद्यःशौचं त्रिरात्रैकरात्ररूपा ये पक्षा विहितास्तेषां सद्यःशौचाशौचाभावपक्षयोरवैधात्मघातविषयत्वम्। त्रिरात्रस्य वैधवृद्धात्मघातविषयत्वम्। एकरात्रस्य गवादिजनितक्षतवशेन गुरुजनितक्षतवशेन च कालान्तरमृतविषयत्वमित्याहुः।

अयमेषामौर्ध्वदेहिकाशौचादिनिषेधः सम्वत्सरात्पूर्वम्, तदूर्ध्वं तु सर्वेषामौर्ध्वदेहिकादि कार्यमेव। तच्च नारायणबलिपूर्वकं कार्यमित्युदकानर्हप्रकरणे वक्ष्यामः। एतेषां मरणानन्तरकार्यमुक्तं मिताक्षरायां स्मृत्यन्तरे।

आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया।

तेषामपि तथा गङ्गातोये संस्थापनं हितम्॥ इति।

गङ्गेति संभवाभिप्रायेण।

अथ शवानुगमनाशौचम्।

तत्र—

मनुः—

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा।

स्नात्वा सचैलः स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति।

प्रेतं ब्राह्मणजातीयम्। अत्र मृतज्ञात्यनुगमनेऽग्निस्पर्शपूर्वकघृतप्राशनविधाने तात्पर्यं नत्वशौचाभावे' तत्रानुगमने न तु गमनेपि वा दशरात्रादिसत्वात्। दाक्षिणात्यास्तु अत्र ज्ञातिमात्रं सपिण्डः, सपिण्डानुगमने विहितं सपिण्डस्य प्रेतनिर्हरणादिकं दोषः स्यादसपिण्डस्य तत्रानाथक्रियां विनेति हारीतवाक्याद् दोषाभावात्। न च दोषाभावेऽपि नैमित्तिकमिदं विशुध्यतीत्यस्यानन्वयादित्याहुः।

वशिष्ठः ।

मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमशौचम् । अस्निग्धे त्वहोरात्रम् । शवानुगमने चैवम् ।

एवमिति त्रिरात्रैकरात्रयोरतिदेशः । तत्र ब्राह्मणस्य शूद्रशवानुगमन बुद्धिपूर्वके त्रिरात्रम् । क्षत्रियशवानुगमने एकरात्रम् । वैश्यशवानुगमने तु त्र्यहम् । तथा—

कूर्मपुराणे ।

प्रेतीभूतं द्विजं विप्रो योऽनुगच्छति कामतः ।
स्नात्वा सचैलं स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुध्यति ।
एकाहात् क्षत्रिये शुद्धिर्वैश्येऽपि स्यात् त्र्यहेन तु ।
शूद्रे दिनत्रयं प्रोक्तं प्राणायामशतं पुनः ।

एवं च तुल्यन्यायात् क्षत्रियवैश्यशूद्राणामपि, असपिण्डसजातीयानुगमने आशौचाभावः, अन्तरवर्णानुगमने त्वेकाहम् । एकान्तरानुगमने द्व्यहमिति सिद्ध्यति । एतेन "सर्वेषां स्यादहोरात्रं शवानुगमनादपि" इत्यादिपुराणीये सर्वपदस्य ब्राह्मणेतरपरतया ब्राह्मणभिन्नानां शूद्रशवानुगमनेऽहोरात्रमशौचम् । ब्राह्मणस्य तु त्रिरात्रमिति मिश्रादिमतं चिन्त्यम् । क्षत्रियस्य शूद्रानुगमने एकाहाशौचस्योक्तयुक्त्या सिद्धेः, आदिपुराणीयं तु देशभेदव्यवस्थितमिति हारलता । सर्वेषामनन्तरवर्णशवानुगमने आपदि वाऽहोरात्रमित्यर्थकमिति युक्तम् । यत्तु एकान्तरवर्णानुगमने पक्षिणीति, तच्चिन्त्यम् । उक्तकौर्म्यविरोधात् । ब्राह्मणस्य वैश्यानुगमने त्र्यहेन शुद्धिः । कण्ठोक्तत्वात् ।

शवं च वैश्यमज्ञानाद् ब्राह्मणो योऽनुगच्छति ।
कृत्वाशौचं द्विरात्रं स प्राणायामान् षडाचरेत् ॥

इति माधवधृतपाराशरीयाच्च । अत्राज्ञानादिति शास्त्रीयज्ञानराहित्यं विवक्षितम् । अत एव माधवेन मौर्ख्यादिति व्याख्यातम् । शूद्रस्य द्विजानुगमने सज्योतिरेवाशौचम् । यथा—

पारस्करः ।

स्पर्शं विनानुगमने शूद्रो नक्तेन शुध्यति ।

इदमनुगमनादिसंसर्गाशौचं संसर्गिण एव न तत्पुत्रादीनाम् ।

तदाहाङ्गिराः ।

आशौचं यस्य संसर्गादापतेद् गृहमेधिनः ।
क्रियास्तस्य न लुप्यन्ते गृह्याणां च न तद्भवेत् ॥

अथ निर्हाराद्यशौचम् ।

असपिण्डब्राह्मणस्यासपिण्डब्राह्मणेन स्नेहादिना दहनवहनेऽशौचिगृहवासे त्रिरात्रम् । दहनवहनाद्यभावेऽप्यशौच्यन्नभक्षणमात्रेण तज्जात्युक्ताशौचम् । अशौचिगृहवासे तदन्नाभोजनेऽपि निर्हारादिकरणे त्वेकरात्रम् । मातुराप्तबान्धवस्य तु तद्गृहवासाभावेऽपि त्रिरात्रम् । तथा च—

मनुः ।

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥
यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यति ।
अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत् ॥

निर्हृत्य=दहनं वहनं च कृत्वेत्यर्थः । "दाहित्वा च वाहित्वा चे"ति तयोस्तुल्याशौचाभिधानात् । असपिण्डं द्विजं ब्राह्मणम् । बन्धुवदित्यनेन स्नेहाद्यनुबन्धमात्रान्निर्हारादौ कृते त्रिरात्रम् । अदृष्टबुद्ध्यालोभादिना वा तत्करणे तु नैवमिति सूच्यते । विशुध्यति त्रिरात्रेणेति इदं अशौचिगृहवासे, तदभावे एकरात्रस्य वक्तव्यत्वात् । मातुराप्तानिति=मातुः सोदरभ्रातृभगिनीप्रभृतीनित्यर्थः । एषां च दहनवहनकरणे अशौचिगृहवासाद्यभावेऽपि त्रिरात्रं ज्ञेयम्, मातुलादौ वहनाद्यभावेऽपि पक्षिण्याद्यशौचात् "सबन्धे त्रिरात्रम्" इति पैठीनसिवाक्यस्याप्येष विषयः । यदन्नमत्तीति । इदं त्वशौच्यन्नभक्षणे यत् दशरात्रादिकं तदेव वहनपूर्वकान्नभक्षणेऽपि न त्वधिकमिति ज्ञापनार्थम् । अथ दाहादिपूर्वकान्नभक्षण एव संपूर्णाशौचमित्येव किं न स्यादशौच्यन्नभोजनमात्र एव विष्णवादिवाक्यात्तत्सिद्धेः । तथा च—

विष्णुः ।

ब्राह्मणानामशौचे यः सकृदेवान्नमश्नाति, तस्य तावदेवाशौचं यावत्तेषां अशौचव्यपगमे प्रायश्चित्तं कुर्यात् ।

कौर्मे ।

यस्तेषामन्नमश्नाति सकृदेवापि कामतः ।
तदाशौचे निवृत्ते तु स्नानं कृत्वा विशुध्यति ॥

तथा च कामतः सकृदाशौच्यन्नभक्षणेऽसपिण्डानामवशिष्टदिनं यावदशौचं सिद्धम् । एवं च

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
अशित्वा च सहोषित्वा दशरात्रेण शुध्यति ॥

यद्यन्नमत्ति तेषां तु त्रिरात्रेण ततः शुचिः ।
अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत् ॥

इति कौर्म्ये सहोषित्वेति यदुक्तं तत् सहवासेऽपि अशौच्यन्नभक्षणनिमित्तमेव प्रायश्चित्तं नाधिकमिति ज्ञापनाय । यद्यत्तीति चापाद्विषयमिति केचित् । उक्तमनुवचने यद्यन्नमत्ति तेषां तु त्रिरात्रेणैव शुद्ध्यतीति पाठः । प्रागुक्तत्रिरात्रस्यैव च विवरणमिदम् । तथा च स्नेहेन दाहादि कृत्वा यो मृतसम्बन्धिगृहे न वसति तदन्नं भुङ्क्ते, यो वा तदन्नं न भुङ्क्ते तद्गृहे वसति तस्य त्रिरात्रम् । यस्तु तदन्नं न भुङ्क्ते न वा तद्गृहे वसति तस्यैकरात्रम् । यस्तु तद्गृहे वसति तदन्नं च भुङ्क्ते तस्य तज्जात्युक्तमेवाशौचमिति मैथिलाः । मृतपुत्रादिस्वामिकान्नभोजिनस्तद्गृहवासिनस्तद्ग्रामवासिनश्चैकरात्रम् । यस्तु निर्हृत्य तदन्नं भुङ्क्ते तद्गृहे च वसति तस्य निर्हरणीयजातिप्रयुक्तमशौचम् । यस्तु निर्हृत्य तद्गृह एव वसति तस्य त्रिरात्रम्, मनुवचनानुरोधात् , यस्तु ग्रामान्तरवासी तस्य सज्योतिः । प्रेतस्पृशो ग्रामान्न विशेयुरानक्षत्रदर्शनाद्रात्रौ चेदादित्यस्येति हारीतस्मरणादित्याधुनिकदाक्षिणात्याः । आपद्यकामतोऽसपिण्डान्नभोजने भोजनदिनपर्यन्तमेवाशौचम् । तथा चाङ्गिराः ।

प्रेतान्नमसपिण्डस्य यावदश्नात्यकामतः ।
तावन्त्यहान्यशौचं स्यादपिण्डानां कथञ्चन ॥

अपिण्डानाम्=असपिण्डानाम् । कथंचनेति अश्नातीत्यनेन सम्बध्यते । तेनापदीति लभ्यते । आपदि कामतो भोजने प्रायश्चित्तरूपं विशेषमाह । कौर्म्ये ।

यावत्तदन्नमश्नाति दुर्भिक्षोपहतो नरः ।
तावन्त्यहान्यशौचं स्यात् प्रायश्चित्तं ततश्चरेत् ॥

बृहस्पतिः ।

यस्तैः सहासपिण्डोऽपि प्रकुर्याच्छयनाशनम् ।
बान्धवो वा परो वापि स दशाहेन शुध्यति ॥

प्रकुर्यादितिशब्देन कामकृत्वलाभात् प्रमादकृते न दोषः । दशाहेनेति=ब्राह्मणस्य । क्षत्रियादेर्द्वादशाहादिकं बोध्यम् ।

यस्तैः सहासनं कुर्याच्छयनादीनि चैव हि ।
बान्धवो वा परो वापि स दशाहेन शुध्यति ॥

आदिपदादालिङ्गनाङ्गसंवाहनादिग्रहणम् । बान्धवः=सपिण्डः । अनाथस्य ब्राह्मणस्यादृष्टबुद्ध्या दहनवहनादौ विशेषमाह ।

कूर्मपुराणे—

अनाथं चैव निर्हृत्य ब्राह्मणं धनवर्जितम् ।
स्नात्वा संप्राश्य तु घृतं शुध्यन्ति ब्राह्मणादयः ॥

पराशरः ।

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।
पदे पदे फलं तेषां यज्ञतुल्यं न संशयः ॥
न तेषामशुभं किञ्चिद्विप्राणां शुभकारिणाम् ।
जलावगाहनात्तेषां सद्यःशौचं विधीयते ॥
असगोत्रमसम्बन्धं प्रेतीभूतं तु ब्राह्मणम् ।
दहित्वा च वहित्वा च सद्यःशौचं विधीयते ॥

मूल्येन दाहे—

कूर्मपुराणम् ।

दशाहेन शवस्पर्शी सपिण्डश्चैव शुध्यति ।
यदि निर्दहति प्रेतं प्रलोभाक्रान्तमानसः ॥
दशाहेन द्विजः शुध्येद् द्वादशाहेन भूमिपः ।
अर्धमासेन वैश्यस्तु शूद्रो मासेन शुध्यति ॥
षड्रात्रेणाथवा सर्वे त्रिरात्रेणाथवा पुनः ।

आपदि मूल्येन दाहे कृते षड्रात्रम् , त्रिरात्रमन्यतापदि । शुद्धिविवेके स्मृत्यन्तरम् ।

ब्राह्मणो न दहेच्छूद्रं मित्रं वाप्यन्यमेव वा ।
मोहाद्दग्ध्वा ततः स्नातः स्पृष्ट्वाग्निं प्राशयेद् घृतम् ॥
उदवासमतः पश्चात् त्रिरात्रेण विशुध्यति ।

अत्र ब्राह्मणस्य शूद्रदाहे यत्त्रिरात्रादिकमुक्तम्, तत्पुत्रभ्रात्रादिरूपस्य शूद्रस्य दाहे बोध्यम्। असम्बन्धिशूद्रदाहे तज्जात्युक्ताशौचविधानादिति रुद्रधरः। वेतनाग्रहणे त्रिरात्रं, तद्ग्रहणे तज्जात्युक्ताशौचमिति तु मिश्राः । दाक्षिणात्यास्तु वेतनग्रहणेनासवर्णनिर्हारे द्विगुणमशौचम् ।

अवरश्चेद्वरं वर्णं वरो वाप्यवरं यदि ।
वहेच्छवं तदाशौचं दृष्टार्थं द्विगुणं भवेत् ॥

इति व्याघ्रपादवचनादित्याहुः ।

यत्तु कूर्मपुराणम् ।

अवरश्चेद्वरं वर्णमवरं वा वरो यदि ।
अशौचे संस्पृशेत् स्नेहात्तदशौचेन शुध्यति ॥

तदापद्विषयम् । अत्र स्पृशेदिति दहनाद्यर्थं स्पृशेदित्यर्थः । तदशौ-

चेन शवजात्युक्ताशौचविगमेन स्नेहान्न दृष्टोपाधेः । तथा—

आदिपुराणे—

योऽसवर्णं तु मूल्येन नीत्वा चैव दहेन्नरः ।
अशौचं तु भवेत्तस्य प्रेतजातिसमं तदा ॥ इति ।
सर्वे वर्णाः सजातीयं दग्ध्वा त्र्यहमशौचिनः ।
भवन्ति परजातीयं निर्हृत्य परजातिवत् ॥
सजातिमसपिण्डं तु दग्ध्वा तद्गृहभोजिनः ।
स्वजात्युक्तमशौचं तु चरन्ति जडबुद्धयः ॥
अन्यजातिं मृतं दग्ध्वा दत्तान्नं भुञ्जते तु ये ।
ते कुत्सितनराः प्रोक्तास्तस्याशौचस्य भागिनः ॥
दाहयित्वा तु मूल्येन गुरुं प्रेतं भवेत्ततः ।
अशौचं दशरात्रं तु शिष्यस्येति विनिश्चयः ॥
आचार्यं वाप्युपाध्यायं गुरुं वा पितरं च वा ।
मातरं वा स्वयं दग्ध्वा व्रतस्थस्तत्र भोजनम् ॥
कृत्वा पतति नो तस्मात्प्रेतान्नं तस्य भक्षयेत् ।
अन्यत्र भोजनं कुर्यात् न च तैः सह संवसेत् ॥
एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुद्ध्यति ।

सर्वे वर्णा इति स्वजातिमसपिण्डं दग्ध्वाशौचिगृहवासे अशौच्यन्नभक्षणे त्र्यहाशौचभागिन इत्यर्थः । भवन्तीति परजातीयं स्नेहाद्दग्ध्वा परजातीयाशौचिनो भवन्तीत्यर्थः । अन्यजातिमिति । अन्यजातीयदाहं कृत्वा तत्पुत्रपत्न्याद्यन्नभोजने तज्जात्युक्ताशौचिनो भवन्त्येव परन्तु ते कुत्सिताः तदन्नभोजनकृतप्रायश्चित्तभागिनोऽपि भवन्तीत्यर्थः । आचार्यमिति । मूल्यग्रहणपूर्वकं यदि शिष्यो गुरुं दहति तदापि दशाहमेवाशौचं न तु गुरुशिष्यभावे तस्य ह्रास इत्यत्र तात्पर्यम् । उपनीय कृत्स्नशाखाध्यापयिता आचार्यः । वेदैकदेशस्य वेदाङ्गानां वाऽध्यापयिता उपाध्यायः, वेदस्य वेदाङ्गानां च व्याख्याता गुरुरिति हारलता । उपनीय साङ्गवेदाध्यापक आचार्यः । अनुपनीय कृत्स्नवेदाध्यापकश्च गुरुः । यत्किञ्चिदध्यापक उपाध्याय इति रुद्रधरः । व्रतस्थस्य ब्रह्मचारिण आचार्यादिपञ्चकानां कर्त्रन्तराभावे वहनदहनपूरकपिण्डदानादिकर्मकरणे व्रतलोपो न भवति यद्येषां गृहे न भुङ्क्ते, यदि त्वेषां गृहे भोजनं कुरुते, तदा व्रतलोप एव ।

वशिष्ठः—

ब्रह्मचारिणः शवकर्मणाऽऽव्रतान्निवृत्तिरन्यत्र मातापित्रोर्गुरोर्वा ।

शवकर्मणा=दहनवहनोदकदानादिकर्मणा । गुरुशब्देनाचार्योपाध्यायोर्ग्रहणम् । तथा चैतदन्येषां निर्हरणे कृते विनापि तदन्नभोजनादिकं व्रतलोपो भवति । तथा च भ्रष्टब्रह्मचर्यसन्धानार्थं पुनरुपनयनं प्रायश्चित्तं च कुर्यात् । तथा च ।

देवलः ।

ब्रह्मचारी न कुर्वीत शवदाहादिकाः क्रियाः ।
यदि कुर्याच्चरेत्कृच्छ्रं पुनः संस्कारमेव च ॥

इदमाचार्याद्यतिरिक्तस्य दाहे बोध्यम् ।

मनुः—

आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् ।
समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत् ॥

आदिष्टं=आदेशनं दिवा मा वा स्वाप्सीः, समिधमाधेहीत्यादि, तदस्यास्तीत्यादिष्टी ब्रह्मचारी उदकम्=प्रेतोदकम् । आव्रतस्य समापनात् समावर्त्तनपर्यन्तं न कुर्यात् । समाप्ते पुनर्ब्रह्मचर्ये समावर्त्तनोत्तरं प्रेतोदकं कृत्वा त्रिरात्राशौचेन शुद्ध्यति ।

यदा त्वसमाप्ते व्रतेऽधिकार्यन्तराभावे पित्रादेर्दाहादिकं करोति तदा एकाहोरात्रमशौचम् ।

एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुद्ध्यति ।

इति प्रागुक्तादिपुराणात् । तत्राप्यशौचे न कर्मलोपः ।

न त्यजेत् सूतके कर्म ब्रह्मचारी स्वयं क्वचित् ।
न दीक्षणात्परं यज्ञे न कृच्छ्रादितपश्चरन् ॥
पितर्यपि मृते नैषां दोषो भवति कर्हिचित् ।
अशौचं कर्मणोऽन्ते स्यात्त्र्यहं वा ब्रह्मचारिणाम् ॥

इति छन्दोगपरिशिष्टकात्यायनवचनात् । अस्यार्थः । एषां ब्रह्मचारिदीक्षिततपस्विनां कर्मणोऽन्ते ब्रह्मचर्ययज्ञकृच्छ्राद्यवसाने अशौचं भवति तदपि दीक्षिततपस्विनोः स्वजात्युक्तम् । त्र्यहं वेति वा शब्दः स्वजात्युक्ताशौचप्रथमपक्षनिवृत्तौ, तेन पित्रोरपि ब्रह्मचारिणस्त्र्यहमेव तदपि समावर्त्तनान्त एवेति गौडमैथिलौ ।

अत्र दाक्षिणात्याः ।

आचार्यादीनां दाहमात्रे कृते एकरात्रम्, प्रागुक्तवचनात् । और्ध्वदेहिकानुष्ठाने तु तदन्नभोजनाभावेऽपि ब्रह्मचारिणस्तज्जात्युक्तमेवाशौचम् ।

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् ।

प्रेताहारैः समं तत्र दशरात्रेण शुध्यति ॥

इत्यादिवाक्यैः;

निरन्वये सपिण्डे तु मृते सति दयान्वितः ।

तदशौचं पुरा चीर्त्वा कुर्यात्तु पितृवत् क्रियाम् ॥

इत्यादिभिश्चौर्ध्वदैहिककर्त्तुः सम्पूर्णाशौचविधानात् । अत एवौर्ध्वदैहिकादिकर्त्तुर्दौहित्रादेरपि तथात्वम् । यो यस्यौर्ध्वदैहिकं करोति स तज्जातिप्रयुक्ताशौचं कुर्यादित्युत्सर्गात् ।

यत्तु स्मृतिचन्द्रिकायां संवर्त्तवचनं—

पित्रोर्गुरोर्विपत्तौ तु ब्रह्मचार्य्यपि यः सुतः ॥

सव्रतश्चापि कुर्वीत अग्निपिण्डोदकक्रियाम् ।

तेनाशौचं न कर्त्तव्यं सन्ध्या चैव न लुप्यते ॥

अग्निकार्यं च कर्त्तव्यं सायं प्रातश्च नित्यशः ॥ इति ।

तदाशौचं न कर्त्तव्यं=अशौचनिमित्तकर्मानधिकारो नास्तीत्यर्थकम् । अशौचस्यौर्ध्वदैहिकानुष्ठाननिमित्तकस्पर्शलग्नस्य निषेद्धुमशक्यत्वात् । यदपि प्रजापतिवचनम् ।

ब्रह्मचारी यदा कुर्यात्पिण्डनिर्वपणं पितुः ।

तावत्कालमशौचं स्यात्पुनः स्नात्वा विशुध्यति ॥ इति ।

तदपि तावत्कालम्=दशादिनादिरूपपिण्डदानकालपर्यन्तमशौचं स्यात् । तत्तत्कर्मणि पुनः स्नात्वा विशुध्यति, तत्तत्कर्माधिकारी भवत्यग्निहोत्रहोमादावविवाहिताग्निरिति व्याख्येयमित्याहुः ।

दिवोदासादयस्तु ।

एकरात्राशौचविधायकब्रह्मवाक्ये दग्ध्वेत्यस्य सकलौर्ध्वदैहिकोपलक्षणत्वात् पित्राद्यौर्ध्वदैहिककर्तुर्ब्रह्मचारिणः प्रथमदिनेऽशौचमस्त्येव । तन्निमित्तः सन्ध्यादिलोपश्च, यस्मिन् द्वितीयादिदिनेषु काले पिण्डदानादि करोति तदैवाशौचं, न तु तत्पूर्वोत्तरभागयोरिति यथाश्रुतसंवर्त्तप्रजापतिवचनानुसारिणोऽपि वदन्ति । तत्प्रतिदिनं नानाशौचकल्पनागौरवादुपेक्ष्यम्, तस्मादस्पृश्यत्वेतरकर्मानधिकारसम्पादकेऽशौचेऽनुवर्त्तमान एव वचनात् सन्ध्यावन्दनाद्यधिकार इतराशौचवदस्पृश्यता चेत्येव युक्तमिति ।

यत्तु गौडाः । नौर्ध्वदैहिकानुरोधेनाशौचवृद्धिः । एकदापि दशपिण्डदानादिसम्भवात् । अत एव—

सद्यःशौचेऽपि दातव्याः सर्वे च युगपत्तथा ।

त्र्यहाशौचे प्रदातव्याः प्रथमं त्वेक एव हि ॥

द्वितीयेऽहनि चत्वारस्तृतीये पञ्च चैव हि ।

इत्यादिवचनादित्याहुः । तदत्र सद्यः शौचादिविधिस्तत्रैव पिण्ड-दानप्रकारविधानार्थत्वेनोक्तवचनोपपत्तेरुपेक्षणीयम् ।

मातुलादिषु दाहादिनिमित्तमाशौचाधिक्यमाह ।

पैठीनसिः ।

असम्बन्धिनो द्विजान् वाहित्वा दग्ध्वा च सद्यःशौचं सम्बन्धे त्रिरात्रम् ।

सम्बन्धे मातुलादौ त्रिरात्रं "मातुराप्तांश्च बान्धवान्" इति मनूक्तेन समानविषयत्वलाभात् । मातुलादयश्च मातुल मातृष्वस्रेय मातुलपुत्र-मातुलानी-मातृष्वसृ पितृस्वसृ भगिनी-भागिनेय-मातामह-मातामही दौ-हित्र-भगिनीपति-जामातृ-श्वसुर-श्वश्रू-श्यालक-शिष्याचार्याचार्यपुत्रा-चार्यपत्नी-गुरु गुरुपत्नी-गुरुपुत्र याज्य-ऋत्विक्-मातुर्मातुल-मातुर्मातृष्व-स्रेय-मातुःपितृस्वस्रेय-मातुर्मातृष्वसृ-मातुःपितृष्वसृ मातुर्मातुलपुत्रान्ता इति रुद्रधरः ।

मनुः ।

दिवाकीर्तिमुदक्यां च पतितं सूतिकां तथा ।
शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति ॥

मनुः ।

नारं स्पृष्ट्वाऽस्थि सस्नेहं सचैलो जलमाविशेत् ।
आचम्यैव तु निस्नेहं गामालभ्यार्कमीक्ष्य वा ॥

अज्ञानत इदम् ।

वशिष्ठः ।

मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमशौचम्, अस्निग्धे त्वहोरात्रमिति तज्ज्ञानतोऽत्यन्तमभ्यास इति शूलपाणिः । मिताक्षरादयस्तु द्विजात्यस्थि-स्पर्शविषयं मनुवचनम् । द्विजातिजातिभिन्नास्थिस्पर्शविषयं वशिष्ठवा-क्यमित्याहुः ।

महापुराणे—

मृतस्य यावदस्थीनि ब्राह्मणस्याहृतान्यपि ।
तावद्यो बान्धवस्तत्र रौति तद्बान्धवैः सह ।
तस्य स्नानाद् भवेच्छुद्धिस्ततस्त्वाचमनं स्मृतम् ।
अनस्थिसञ्चयाद्विप्रो रौति चेत्क्षत्रवैश्ययोः ॥
ततः स्नातः सचैलस्तु द्वितीयेऽहनि शुध्यति ।
अनस्थिसंचिते शूद्रे ब्राह्मणो रौति चेज्जडः ॥

ततः स्नातः सचैलस्तु शुद्धयेत्तु दिवसैस्त्रिभिः ॥
अस्थिसंचयनादूर्ध्वमहोरात्रेण शुद्धयति ।
सचैलस्नानमन्येषामकृतेऽप्यस्ति संचये ॥
कृते तु केवलं स्नानं क्षत्रविट्शूद्रजन्मनाम् ॥

मृतस्येति—मृतस्य ब्राह्मणस्य यावता कालेनास्थीन्याह्रियन्ते संचीयन्ते तावत्कालमध्ये तद्बान्धवैः सह योऽबान्धवो रोदिति तस्य स्नानाच्छुद्धिः । अबान्धवोऽत्र ब्राह्मणः, अग्रे सचैलस्नानमन्येषामित्यादिना क्षत्रियादेर्वाच्यत्वात् । ततस्त्वाचमनमिति । अस्थिसंचयनकालोत्तरं रोदने कृत आचमनाच्छुद्धिरित्यर्थः । अनस्थीति । क्षत्रवैश्ययोर्निर्गुणयोरस्थिसंचयनात् प्राक् रुदन् ब्राह्मणः सचैलः स्नात्वा द्व्यहेन शुद्धयेत् । अस्थिसंचयोत्तरकालं सचैलं स्नानम् । अन्येषामिति । अन्येषां क्षत्रियविट्शूद्रजन्मनाम् । वर्णचतुष्टयस्यापि मरणेऽस्थिसंचनात् पूर्वं रोदने सचैलस्नानं, परतः स्नानमात्रम् ।

कूर्मपुराणे ।

अनस्थिसंचिते शूद्रे रौति चेद् ब्राह्मणः स्वकैः ।
त्रिरात्रं स्यात्तथाशौचमेकाहं त्वन्यथा स्मृतम् ॥
अस्थिसंचयनादर्वागेकाहं क्षत्रवैश्ययोः ।
अन्यथा चैव सज्योतिर्ब्राह्मणे स्नानमेव तु ॥
अनस्थिसंचिते विप्रे ब्राह्मणो रौति चेत्तदा ।
स्नानेनैव भवेच्छुद्धिः सचैलेन न संशयः ॥

स्वकैरिति मृतशूद्रसापिण्डैः सहेत्यर्थः । एकाहं त्वन्यथेति । अस्थिसंचयनात्परे शूद्रविषये रोदने ब्राह्मणस्यैकाहमित्यर्थः । अस्थीति क्षत्रवैश्ययोरुत्कृष्टगुणयोरस्थिसंचयात्पूर्वं रोदन एकाहः । निर्गुणविषये द्व्यहस्योक्तत्वात् । अन्यथास्थिसंचयनोत्तरं सज्योतिः, दिने रोदने दिनान्तम्, रात्रिरोदने रात्र्यन्तमित्यर्थः । ब्राह्म इति ब्राह्मणब्राह्मणविषये ब्राह्मणास्थिसंचयनादूर्ध्वं रोदने स्नानं तत्पूर्वं रोदने सचैलं स्नानम् । शुद्धयतीत्यनुवृत्तौ—

विष्णुः ।

सर्वस्यैव तु प्रेतस्य बान्धवैः सहाश्रुपातेन कृत्वा स्नानेनाकृतेऽस्थिसंचयेन सचैलस्नानेन । एतच्च मृतस्य क्षत्रियादेर्गृहमगत्वा दैवात् स्नानान्तरमेलके, ब्राह्मणस्य तु गृहं गत्वैव बोध्यम् । अन्यथा प्रागुक्तब्राह्मणविरोधापत्तेः ।

पारस्करः—

अस्थिसंचयनादर्वाग् यदि विप्रोऽश्रु पातयेत् ।
मृते शूद्रे गृहं गत्वा त्रिरात्रेण विशुध्यति ॥
अस्थिसंचयानादूर्ध्वं मासं यावद् द्विजातयः ।
दिवसेनैव शुध्यन्ति वाससां क्षालनेन च ॥

स्वजातेर्दिवसेनैव द्व्यहात्क्षत्रियवैश्ययोः ।
स्पर्शं विनानुगमने शूद्रो नक्तेन शुध्यति ॥
मृतस्य बान्धवैः सार्द्धं कृत्वा तु परिदेवनम् ।
वर्जयेत्तदहोरात्रं दानं स्वाध्यायकर्म च ॥

गृहं गत्वेति=सचैलं स्नाने सति द्रष्टव्यम, प्रागुक्तब्रह्मपुराणैकवाक्यत्वात्, अस्थिसंचयनादूर्ध्वमिति । इदमपि मृते शूद्रे गृहे गत्वाऽश्रुपातने बोध्यम् । हारलताकृतस्तु गृहं गत्वेत्यनेनैतल्लब्धं यन्मृतस्य शूद्रस्य पुत्रभ्रात्रादिभिः समं तद्गृहं गत्वा रोदने त्रिरात्रम् । तद्गृहमगत्वा दैववशान्मेलके रोदन एकरात्रमिति । तच्चिन्त्यम् । प्रागुक्तविष्णुवाक्यविरोधात् । एतच्च मृतस्य शूद्रादेर्गृहमगत्वा स्नानान्तरे प्रसङ्गाद्दर्शनेन रोदनविषयकं विष्णुवाक्यमिति हारलताव्याख्यानविरोधाच्च । तस्माद् गृहमगत्वा रोदने विष्णूक्तैव व्यवस्था । वाससामिति । यावन्ति वासांसि देहे वर्त्तन्ते तावन्ति क्षालनीयानीति बहुवचनेन लभ्यते । एवं यत्र सचैलस्नानं विहितं तत्र सचैलं प्रच्छदपटलादिकं यदस्ति तदा तत्क्षालनीयम् । न तु तत्सहितेन स्नातव्यमिति । स्वजातेरिति । प्राकृतो विप्रः स्वजातेर्ब्राह्मणजातीयस्यात्यन्तहीनगुणस्य मृतस्य पुत्रादिभिः सहास्थिसंचयनात्पूर्वं गृहं गत्वा रोदने एकाहेन शुध्यति । क्षत्रवैश्ययोरपि तथैव रोदने न द्व्यहेन शुध्यतीत्यर्थः । मृतस्येति । मृतस्य शूद्रस्य परिदेवनं रोदनरहितं विलापमात्रं कृत्वा एकाहोरात्रेण शुध्यति । तदियमत्र व्यवस्था । ब्राह्मणस्य मृतासपिण्डब्राह्मणविषये अस्थिसञ्चनात्प्राग् गृहं गत्वा रोदने सचैलस्नानमात्रम् अस्थिसंचयनादूर्ध्वं गृहं गत्वा रोदने स्नानम् । अगत्वा आचमनमात्रम् । ब्राह्मणस्य मृतक्षत्रियवैश्योभयविषये अस्थिसंचयात्प्राग् गृहं गत्वा रोदने सचैलं स्नात्वा द्व्यहेन, अस्थिसञ्चयनादूर्ध्वन्तु दिवारोदने दिनान्तेन रात्रिरोदने रात्र्यन्तेन शुद्धिः । ब्राह्मणस्य मृतशूद्रविषये अस्थिसञ्चयनात् प्राग् गृहं गत्वा रोदने सचैलस्नानं त्रिरात्रं, स्थानान्तरे सचैलस्नानम् । अस्थिसञ्चयादूर्ध्वं तु मासं यावद्रोदने एकाहाशौचम् । गृहागमने स्थानान्तरे

स्नानमात्रम् । क्षत्रियवैश्यशूद्राणां चातुर्वर्णिकविषय एवास्थिसंचयात् प्राक् रोदने सचैलस्नानम् । परतः स्नानमात्रमिति गौडाः । मैथिलास्तु—"ततस्त्वाचमनं स्मृत"मिति ब्रह्मपुराणवाक्यस्य ततः स्नानानन्तरमाचमनमित्यर्थः कर्त्तव्यः । तथा च ब्राह्मणे मृते ब्राह्मणस्य तद्गेहं गत्वा तद्बन्धुभिः सह रोदनेऽस्थिसंचयनात् प्राक् सचैलस्नानमाचमनं च, परतः स्नानमात्रमिति । "स्वजातेर्दिवसेनैव त्र्यहात् क्षत्रियवैश्ययोः" इति पारस्करीयस्य चायमर्थः।स्वजातेरिति स्वपदं शूद्रपरम्, शूद्रे मृत इत्युपक्रमात् । तथा च शूद्रस्य सपिण्डे शूद्रे मृतेऽश्रुपातन एकाहः । क्षत्रियवैश्ययोः शूद्रे मृतेऽस्थिसंचयात्प्रागश्रुपातने त्र्यह इत्यर्थः। अत्र त्रयाणां सचैलं स्नानमपि । "सचैलस्नानमन्येषामकृतेऽस्त्वास्थिसंचये" इति ब्रह्मपुराणादिति मिश्राः। ब्रह्मपुराणवाक्यं गृहगमनाभावपक्ष इति रुद्रधरः । तथा च शूद्रे मृते क्षत्रियवैश्ययोस्तद्गृहं गत्वा रोदनेऽस्थिसंचयात्प्राक् त्र्यहेन, परतः सज्योतिषा शूद्रे मृते तद्गृहे गत्वा शूद्रस्य रोदने अस्थिसंचयात्प्रागेकाहेन, परतः सचैलं स्नानेनेति विशेषमाहुः ।

अथाशौचसङ्करः ।

तत्र मनुः ।

अन्तर्दशाहे स्यातां चेत्पुनर्मरणजन्मनि ।
तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम् ॥

पुनर्मरणं च जन्म च पुनर्मरणजन्मनी । अत्र सर्वत्र मरणजन्मपदं मरणाशौचजननाशौचपरम् । अन्यथाऽशौचसांकर्य्यस्य व्यवस्थाप्यत्वात् । तथा च समानस्य गुरोर्वाऽशौचस्य काले यद्यपरं समानं लघु वाशौचमुत्पद्यते तदा पूर्वाशौचव्यपगमेनैव शुद्धिरित्येतन्मनुवाक्यार्थः पर्यवस्यति । गौरवं लाघवं च दीर्घादीर्घत्वाभ्यां सर्वत्र; क्वचिज्जननापेक्षया समानकालीनस्यापि मरणस्य गुरुत्वम्, अस्पृश्यत्वादिधर्माधिक्यात् । इत्थं चाशौचयोः सङ्करे यद्गुर्वशौचं तत्पूर्वेणैव शुध्यतीत्येतद्वाक्यमूलाश्रुतिर्लाघवात् कल्प्यते । दशाह इति सम्पूर्णासम्पूर्णाशौचमात्रकालोपलक्षणम्, तेन समानासम्पूर्णत्रिरात्राद्यशौचसाङ्कर्य्येऽप्यस्य विषय इति सिध्यति ।

याज्ञवल्क्यः ।

अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यति ।

वर्णापेक्षया वयोवस्थापेक्षया वा यस्य यावानशौचकालस्तदन्तरा तत्समानस्य ततो न्यूनस्य वाऽशौचस्य निमित्तभूते जनने मरणे वा

जाते पूर्वाशौचावशिष्टैरेवाहोभिर्विशुध्यति न पुनः पश्चादुत्पन्नजननादि-निमित्तं पृथक्पृथगशौचमिति मिताक्षराद्ययमुमर्थं संवदति। तेनोक्तमनुवचनं सम्पूर्णाशौचमात्रपरम्। तेन समकालव्यापकासम्पूर्णाशौचयोः सङ्करे परेण शुद्धिः। "अघवृद्धावशौचं तु पश्चिमेन समापयेत्" इति यमवचनादिति मैथिलमतं चिन्त्यम्। याज्ञवल्क्यवाक्ये—

यदि स्यात् सूतके सूतिर्मृतके वा मृतिर्भवेत्।
शेषेणैव भवेच्छुद्धिरहःशेषे द्विरात्रकम्॥
मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्॥ इति।

कौर्म्ये च सामान्यत एव जन्ममरणोपादानात् विशेषपरत्वे मानाभावात्। न च मनुवाक्यस्थमन्तर्दशाहग्रहणमेव मानमिति वाच्यम्। तस्य द्वादशाहाद्यशौचसंग्रहार्थमावश्यके उपलक्षकत्वे लाघवेनाशौचमात्रोपलक्षणत्वात्। यमवचनं तु लघ्वशौचोत्तरं गुर्वशौचसाङ्कर्य-विषयम्। अत एव।

मिताक्षरायाम्—

स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि।
न तु पूर्वेण शुद्धिः स्यात् स्वकालेनैव शुध्यति॥

इत्युशनोवचःसमानार्थकं यमवचनमित्युक्तम्। एतेन दीर्घादीर्घत्वाभ्यां गुरुलघुभावः सजातीययोरेव, जननमरणयोस्तु मरणत्वेनैव गुरुत्वम्। अत एव त्र्यहादिमरणदशाहादिजननयोः सङ्करेऽपि पूर्वभाविना परभाविना वा मरणेनैव शुद्धिः। तथा च—

देवलः।

अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा।
मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्॥

अत्रोत्तरार्द्धस्य पूर्वार्द्धापवादत्वाद्दीर्घोत्पत्तितोऽल्पकालमरणस्यापि गुरुत्वं प्राप्यते। स्पष्टं चाह—

लघुहारीतः।

सूतके सूतकं चेत्स्यान्मृतके त्वथ सूतकम्।
मृतेन सूतकं गच्छेत् नेतरत्सूतकेन तु॥

इत्यपि मैथिलमतं चिन्त्यम्। उशनोवाक्यविरोधेन देवलवाक्यस्य तुल्यकालीनमरणोत्पत्त्योर्मरणगुरुत्वबोधकेनापवादत्वाभावात्। अबाधेनोपपत्तौ बाधकल्पनाया अन्याय्यत्वात्। अपि च गौतममते तुल्यकालमरणजननयोर्मध्येऽस्पृश्यत्वाक्षारलवणाद्यशित्वादिनिमित्ततया न्यायप्राप्ततया च यन्मरणस्य गुरुत्वं तदेव देवलवाक्येनानूद्यते लाघवादिति

देवलवाक्यस्य तुल्यकालमरणोत्पत्तियोगपरत्वमप्रस्तुतं वाच्यम् । वचनन्यायमूलकत्वे सम्भवति श्रुतिमूलत्वकल्पनाया अन्याय्यत्वादिति । तस्मात् मैथिलमतं न किञ्चिदेतत् । अत्र यद्यप्यगुर्वशौचं पूर्वेण शुद्ध्यतीति सामान्यतः क्लृप्तगुरुलघुभावश्च सजातीयविजातीयसाधारण्येन दीर्घादीर्घयोरुशनोवाक्यादितः सिद्ध इति दीर्घकालसूतकान्तःपातिनः स्वल्पकालशावस्य सूतकेन शुद्धिः प्राप्ता, तथापि वचनबलान्नैवम् । तथा च—

हारीतः । नेतरत् सूतकेन त्विति ।

अङ्गिराश्च ।

सूतके मृतकं चेत्स्यात् मृतके त्वथ सूतकम् ।
तत्राधिकृत्य मृतकं शौचं कुर्यान्न सूतकम् ॥

षट्त्रिंशन्मतेऽपि ।

शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् ।
शावेन शुद्ध्यते सूतिर्न सूतिः शावशोधनी ॥

इति मिताक्षराकारादयः । तथाचैतन्मते अशौचयोः संकरे मृत्युत्तरशावभिन्नमगुर्वशौचं पूर्वेण शुद्ध्यतीति पर्यवसितम् । गौडास्तु भिन्नान्तविशेषणं न निवेश्यम्, उक्तशावस्य सूतकेन शुद्धिस्त्विष्टैव, लघुहारीतादिवाक्यं तूक्तमनुदेवलादिवाक्यैकवाक्यतया तुल्यकालीनसूतकमृतकविषयम्, युक्तश्चैतत् । "मृतेन सूतकं गच्छे"दित्यत्र "मृतके त्वथ सूतक"मित्यत्र शावेन शुद्ध्यते सूति"रित्यत्र च तुल्यकालीनसूतकमृतकपरत्वस्यावश्यकत्वेनेतरत्सूतकेन त्वित्यादिष्वपि तथात्वस्यौचित्यादित्याहुः ।

सम्पूर्णाशौचकालमध्ये सम्पूर्णाशौचान्तरपाते विशेषमाह ।

विष्णुः ।

जननाशौचमध्ये यद्यपरं जननं स्यात्तदा पूर्वाशौचव्यपगमेन शुद्धिः । रात्रिशेषे दिनद्वयेन, प्रभाते दिनत्रयेण । मरणाशौचमध्ये ज्ञातिमरणेऽप्येवमेवेति ।

रात्रिशेषे इति=एका रात्रिः शेषावशिष्टा यत्रेति व्युत्पत्त्याऽशौचान्तिमाहोरात्रपरम् । तथा च—

बौधायनः ।

अथ यदि दशरात्राः सन्निपतेयुराद्यं दशरात्रमाशौचमानवमाद्दिवसादिति । अत्राऽऽनवमादित्यनेन दिनपूर्त्तिपर्यन्तं पूर्वाशौचं वदता तदुत्तरमन्याशौचं सूच्यते । स्पष्टमाह— कौर्म्मे । "अहःशेषे द्विरात्रकम्" इति ।

प्रभाते=शौचाग्निमरणग्रहणोदयोत्तरं सूर्योदयप्राक्काले । अत्रैव प्रभातपदशक्तिरिति गौडमैथिलौ । रात्रिशेषे रात्रिमात्रावशिष्टे पूर्वाशौचे । प्रभाते तस्या रात्रेश्चतुर्थयामे "रात्रिशेषे सति द्वाभ्यां यामशेषे शुचिस्त्र्यहात्" इति शातातपवचनादिति मिताक्षराकारः । अत्र दिनद्वयं दिनत्रयं च पूर्वाशौचादिनाधिकं ग्राह्यम् । अन्यथा विध्यनुवादवैषम्यापत्तेः । दिनद्वयेनेत्यनेन पूर्वार्द्धेनापि पूर्वाशौचकालप्राप्तेरिति सर्वं । इयं दिनद्वयत्रयशुद्धिः सम्पूर्णयोः सजातीययोरेव सङ्करे, न तु विजातीययोः । बौधायनीये सम्पूर्णशौचोपलक्षकदशरात्रा इत्युपादानात् । "जननाशौचमध्ये यद्यपरं जननं स्यात्" इत्यादिविष्णुवाक्ये च सजातीययोरेवोपादानाच्च । अत्र इतराशौचमध्ये पितृमरणे पितृमरणाशौचेनैव शुद्धिः । पितृव्यतिरिक्तसपिण्डाशौचमध्ये मातृमरणेऽपि मातृमरणाशौचेनैव शुद्धिः । तथा च—

षडशीत्याम् ।

पूर्वाशौचेन या शुद्धिः सूतके मृतके च सा ।
सूतिकामग्निदं हित्वा प्रेतस्य च सुतानपि ।

प्रेतस्य मातापित्रोः, सुतसमभिव्याहारात् । अग्निदो दाहकर्त्ता पुत्रादन्योऽपि तथा मात्राशौचमध्ये पितृमरणेऽपि उत्तरेणैव शुद्धिः । पितृमरणमध्ये मातृमरणे तु पितृमरणादिनाधिकपक्षिण्या शुद्धिः । तथा च—

शङ्खः ।

मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता ।
पितुःशेषेण शुद्धिः स्यात् मातुः कुर्यात्तु पक्षिणीम् ॥

मातरि मृतायां तन्मृतिनिमित्ताशुद्धौ सत्यां पितरि मृतेऽपि पितृमरणाशौचकालापगमेनैव शुद्धिः । पितृमरणाशौचमध्ये मातृमरणे तु पितृमरणाशौचकालाधिकां पक्षिणीं कुर्यात् ।

अर्वाक्त्तु—

परतः परतोऽशुद्धिरघवृद्धौ विधीयते ।
स्याच्चेत् पञ्चमादह्नः पूर्वेणैवात्र शिष्यते ॥

अदीर्घाशौचप्रवृत्तेः परतो वृद्धिमति दीर्घेऽघे पतिते ऽशुद्धिस्तं दीर्घमघं परतः स्वनिमित्तमारभ्य पूर्णं विधीयते, न तु पूर्वेण निवृत्तिः । यदि च पूर्वपूर्वप्रवृत्तमदीर्घाशौचं पञ्चमादह्नो मध्यपतितदीर्घाघकालार्द्धात्परतोऽप्यनुवर्त्तते । तदा पूर्वेणैवादीर्घेणापि साऽशुद्धिः शिष्यते निवर्त्यते । अत्र पञ्चादिनाधिकाशौचमध्ये दशाहाशौचपाते

पूर्वाशौचेन शुद्धिः । यथा षष्ठमासगर्भपातनिमित्तषडहाशौचमध्ये प्राप्तस्य दशाहाशौचस्य पूर्वेण निवृत्तिरित्याहुः ।

वस्तुतो मिताक्षरादिष्वदर्शनात् तथानाचरणाच्च निर्मूलान्येतानि ।

मैथिलास्तु "अन्तर्दशाहे स्याताम्" इत्यादिमनुवचनबौधायनवचनयोरेकवाक्यतायामयमर्थः । यदि प्रथमप्रवृत्ताशौचस्योपान्त्यदिनसमाप्त्यभ्यन्तरे तज्जातीयसम्पूर्णाशौचान्तरपातस्तदा द्वाभ्यामप्येकमेव दशरात्रमशौचम् । इयांस्तु विशेषो यत्पूर्वप्रवृत्ताशौचपूर्वार्द्धे तत्पाते आद्यमेव दशरात्रं तदुत्तरार्द्धे पाते द्वितीयम् । यथा—

ब्रह्मपुराणे ।

आद्यं भागद्वयं यावत्सूतकस्य तु सूतके ।
द्वितीये पतिते त्वाद्यात् सूतकाच्छुद्धिरिष्यते ॥
अत ऊर्द्धं द्वितीयात्तु सूतकान्ताच्छुचिः स्मृतः ।
एवमेव विचार्यं स्यान्मृतके मृतकान्तरे ।

चतुर्धा विभक्तस्याशौचकालस्याद्यभागद्वयं पूर्वार्द्धं अत ऊर्ध्वमाद्यभागद्वयादूर्द्धमुत्तरार्द्धमित्यर्थः ।

कूर्मपुराणे—

अघवृद्धिमदाशौचमूर्ध्वं चेत्तेन शुद्ध्यति ।
अथ चेत् पञ्चमीं रात्रिमतीत्य परतो भवेत् ॥

पूर्वप्रवृत्ताशौचापेक्षया चेदूर्ध्वं तदन्तासमाप्यमप्यशौचं पतेत्, तदा तेन प्रथमाशौचेन गतेन शुद्ध्यति । अथ चेत्पञ्चमीं रात्रिमतीत्य पतेत्तर्हि परतो भवेत् । द्वितीयापगमेन शुद्धिर्भवेदित्यर्थः ।

देवलः—

परतः परतः शुद्धिरघवृद्धौ विधीयते ।
स्याच्चेत्पञ्चतमादह्नः पूर्वेणाप्यनुशिष्यते ॥

पञ्चतमादह्नः परतोऽघवृद्धौ शेषाहं समाप्याशौचान्तरपाते परतो द्वितीयापगमाच्छुद्धिः पञ्चतमादह्नः पूर्वेण चाघवृद्धौ पूर्वेणैव गतेन शुद्धिः ।

यत्तु प्रकाशमतम् । उपान्त्यदिनपर्यन्तं पूर्वाशौचबोधकबौधायनवचनेनोत्तरार्द्धे उत्तराशौचबोधकब्रह्मपुराणादिवचनविरोधे बौधायनवचनं बहुवचनश्रवणाद्बह्वाशौचपातविषयम्, ब्रह्मकूर्मदेवलवचनानि तु द्वितीयैकाशौचमात्रपातपराणीति कल्प्यत इत्यविरोध इति तन्न । "यस्योभयं हविरार्त्तिमार्च्छेत् स ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्" इत्यत्रोभयत्वस्येव बहुत्वस्याविवक्षितत्वात् । "यस्योभावग्नी अभिनिम्लोचेयातां तस्य

पुनराधानं प्रायश्चित्तम्" इत्यत्र चानन्यगत्योभयत्वविवक्षा। प्रकृते विरोधस्तूक्त एवेत्याहुः।

गौडास्तु—

विषमकालयोर्दीर्घत्वेन समकालयोरस्पृश्यत्वाक्षारलवणाशित्वादिधर्मबाहुल्येन गुरुत्वमित्यत्र किं मानमिति चेन्न्यायमूलं देवलवचनं तदृष्टस्यान्यत्रापि कल्पनात्। अघवृद्धिमदाशौचमित्यादावघवृद्ध्यादिपदस्वारस्यादपि तथा प्रतीयते। तथा च स्वकन्याजननात् स्वपुत्रजननं गुरु, पुत्रजनने स्नानात्पूर्वं पितुरस्पृश्यत्वात्। निर्दशपुत्रजन्मश्रवणे पितुः सचैलस्नानाच्च। सपिण्डापत्यजननात् स्वापत्यजननं गुरु। स्त्रीणां सपत्न्यपत्यजननं च गुरु। सूतिकास्पर्शे पितुः सपत्नीनां च सूतिकासमकालमस्पृश्यत्वानिमित्तत्वात्। सपिण्डमरणात् महागुरुमरणं गुरु, सपिण्डमरणे त्रिरात्रं महागुरुमरणे द्वादशरात्रमक्षारलवणाशित्वात्। महागुरवस्त्रयः पिता माता स्त्रीणां पतिश्च। एकस्मिन्दिने सपिण्डद्वयमरणं च गुरु, यावदशौचमङ्गास्पृश्यत्वात्। इत्थं च प्रागुक्त एवार्थो मन्वादिवचनस्य, विष्णुबौधायनादिवचनस्य तु सम्पूर्णाशौचोत्तरमगुरुसजातीयसम्पूर्णाशौचस्य प्राक्प्रवृत्तसम्पूर्णाशौचोपान्त्यदिनमध्ये पतिते पूर्वेण, अन्त्यदिने पाते दिनद्वयेन, अन्त्यदिनप्रभाते पाते दिनत्रयेण शुद्धिरित्यर्थः। विष्णुबौधायनवाक्ययोः सजातीयसम्पूर्णाशौचयोरेवोपादानात्। तथा च सपिण्डजननमरणयोः सपिण्डादिमरणोत्तरं सपिण्डमरणे स्वपुत्रजननोत्तरं स्वकन्याजनने स्वपुत्रस्य स्वकन्यायाः स्त्रीणां सपत्न्यपत्यस्य वा जननोत्तरं सपिण्डापत्यजनने नेयं व्यवस्था। यत्तु लघ्वशौचोत्तरं गुर्वशौच इव गुर्वशौचोत्तरं लघ्वशौचेऽपि नेयं व्यवस्था। अस्याः समानसम्पूर्णाशौचयोः सङ्कर एव प्रवृत्तेः, तेन मातापित्रोः स्वपुत्रयोः स्वकन्ययोर्वा तथाजनन एवेयं व्यवस्था न तु पित्रादिमरणोत्तरं सपिण्डानामपि मरणे, न वा स्वपुत्रादिजननोत्तरं स्वकन्यादिजनने। अत एवेदं सपिण्डजननद्वये सपिण्डमरणद्वये चावतिष्ठते इति हारलतेति स्मार्त्तोदयस्तच्चिन्त्यम्। अघवृद्धिमदाशौचमित्यादेः परत्र गुर्वशौचविषयत्वादस्याः समानाशौचविषयत्वेऽपि गुरुतरलघुविषयत्वेऽपि बाधकाभावात्।

सम्पूर्णाशौचोत्तरं गुरुसजातीयसम्पूर्णाशौचान्तरपाते त्वाह—

कूर्मपुराणम्—

अघवृद्धिमदाशौचमूर्ध्वं चेत्तेन शुध्यति।
अथ चेत्पञ्चमीं रात्रिमतीत्य परतो भवेत्॥

अघवृद्धिमदाशौचं गुरु, सम्पूर्णाशौचान्तरात् । परतो यदि भवेदिति तदा परेणैव शुद्धिः पराशौचकालापगमेनैव शुद्धिः । एवं सर्वत्र । अस्यापवादमाह अथ चेदिति । परतः पूर्वाशौचात्पञ्चदिनात्प्रातिलोम्येव पञ्चम्येन पञ्चमीं रात्रिमतीत्य यदि भवति पूर्ववृत्ताशौचपञ्चतमदिनमध्ये यदि भवतीति यावत्, तदा पूर्वेणैव शुध्यतीत्यर्थः । तथा च—

देवलः ।

परतः परतः शुद्धिः रघवृद्धौ विधीयते ।
स्याच्चेत्पञ्चतमादह्नः पूर्वेणाप्यनुशिष्यते ॥

परतोऽघवृद्धौ उत्तरतः सजातीयसम्पूर्णगुर्वशौचान्तरपाते परेण शुद्धिः । पञ्चतमपदमशौचपूर्वार्द्धपरम् । यथा—

ब्राह्मे ।

आद्यभागद्वयं यावत्सूतकस्य तु सूतके ।
द्वितीये पतिते चाद्यात्सूतकाच्छुद्धिरिष्यते ॥
अत ऊर्द्ध्वं द्वितीयात्तु सूतकान्ताच्छुचिः स्मृतः ।
एवमेव विचार्यं स्यान्मृतके मृतकान्तरे ॥

अत्र सूतकमृतपदेऽघवृद्धिमत्सूतकमृतकपरे । अघवृद्धिमदाशौचमित्याद्येकवाक्यत्वात् । सूतकस्य सूतके मृतकान्तरे इत्युक्त्या सम्पूर्णजननोत्तरसम्पूर्णमरणपाते नेयं व्यवस्थेति गम्यते । किन्तु तत्र पूर्वार्द्धे उत्तरार्द्धे वा पतितेन मरणेनैव शुद्धिः ।

अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा ।
मरणोत्पत्तियोगे तु गरीयो मरणं भवेत् ।

इति देवलीयात् । तथा च—

शङ्खः ।

समानाशौचसम्पाते प्रथमे न समापयेत् ।
असमानं द्वितीयेन धर्मराजवचो यथा ।

समानाशौचं सजातीयगुर्वशौचम् । प्रथमे=प्रथमार्धे । असमानम्=पूर्वजातं जननाशौचम् । द्वितीयेन=मरणाशौचकालेनेत्यर्थः । असम्पूर्णाशौचमात्रस्य परत्रागुर्वाशौचपाते पूर्वेण शुद्धिः । "अन्तर्दशाह" इति मनुवचनात् । परत्रगुर्वाशौचपाते तु परेणैव शुद्धिः । "अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा" इति देवलीयात् ।

"अघवृद्धावशौचं तु पश्चिमेन समापयेत्" इति यमवाक्याच्च । अत्र च विदेशमरणत्रिरात्रात्समानोदकमरणात्रिरात्रमनुपनीतमरणे

त्रिरात्रं गुरु । विदेशमरणे स्नानात् प्रागेवास्पृश्यत्वात् । समानो-दकानुपनीतयोर्मरणे एकरात्रमङ्गास्पृश्यत्वात् । तथा देशलघुगुरुस-ङ्करे प्राक्वर्तिना पश्चाद्वर्तिना वा गुरुणैव शुद्धिः । तथा विदेश-मृतज्ञातित्रिरात्रात्समानोदकादिमरणत्रिरात्रश्च विदेशमृतस्य शस्त्रह-तस्य वा महागुरोर्मरणे त्रिरात्रं गुरुभूतं सपिण्डमरणसम्पूर्णाशौचे त्रिरात्रमेवाक्षारलवणाशित्वस्य विहितत्वेन तत्त्रिरात्रे औचित्येन ए-करात्रमेवाक्षारलवणाशित्वं प्राप्नोति, अतश्च तथात्वेनास्य लघुत्वात् महागुरुमरणसम्पूर्णाशौचे यावदशौचमक्षारलवणाशित्वेन तत्त्रिरा-त्राशौचेऽपि तथात्वे तस्य गुरुत्वात् । तथैकसपिण्डमरणादेकस्मिन्दिने सपिण्डद्वयमरणं गुरु, यावदशौचं मङ्गास्पृश्यत्वात् । एवं तुल्यकालयो-र्जननमरणयोर्मरणस्य गुरुत्वम् । अतुल्यकालयोस्तु दीर्घस्य तेन, दीर्घादीर्घयोः सङ्करे दीर्घेणैव प्राक्पश्चाद्वा जातेन शुद्धिः । तथा-दीर्घजननादीर्घमरणयोः सङ्करे दीर्घेण जननेनैव शुद्धिः । एवं मृतजा-तनिमित्तके हारीतोक्ते दशाहे पतितस्याजातदन्तमरणस्य स्वल्पाशौ-चनिमित्तत्वाद्दीर्घजननेनैव शुद्धिः । तथैकसपिण्डजन्मोत्तरं दशमदि-नादौ परसपिण्डजननेन वर्द्धितदिनद्वयादौ पित्रादिमरणे जननाशौचे-नैव द्वादशाहादिव्यापिना पित्रादिमरणाशौचस्याल्पकालव्यापिनः शु-द्धिः । एवमेकसपिण्डमरणाशौचदशमदिनादौ सपिण्डान्तरमरणेन वर्द्धितदिनद्वयादौ पित्रादिप्रथमसपिण्डमरणाशौचेनैव द्वादशाहादि-व्यापिना पित्रादिमरणाशौचस्याल्पकालव्यापिनः शुद्धिः । एवं चात्र प्रथममृतपितृकवर्धितदिनद्वयाद्यन्तःपातद्वितीयमृतपितृकयोः प्रथममृ-ताद्यधिद्वादशरात्रमशौचम् । तत्परदिने शय्यादानवृषोत्सर्गादि बो-ध्यमिति गौडाः ।

मैथिलास्तु-यद्यपरं जननं स्यादित्यादिनापरजननं प्रस्तुत्यैव दिन-द्वयाद्यशौचाभिधानात्, अपरजननादेरेव दिनद्वयाद्यशौचजनकत्व-प्रतीतेः प्रथमस्य न वृद्धिः; तथाच वर्द्धितदिनद्वयादौ प्रथमजनि-ताशौचस्यासत्त्वात् द्वितीयजनिताशौचस्य सत्त्वेऽपि न्यूनकाल-त्वान्न तेन पित्रादिमरणाशौचं शुध्यति किन्तु स्वकालेनैव । एवं च प्रथममृतपितृकस्य स्वपितृमरणमध्ये एकादशाहस्याशौचान्तद्वितीय-दिनत्वात् तत्राशौचान्तरसत्त्वात् तद्दिनकृत्यं शय्यादानवृषोत्सर्गादि निवर्त्तते । एकादशाहश्राद्धं त्वशौचव्यपगमे कार्यमित्याहुः ।

आधुनिकदाक्षिणात्या आचार्यचूडामणिरप्येवम् ।

स्मार्तास्तु-अत्र सर्वैर्निबन्धृभिर्दशमदिनादधिकेन दिनद्वयेनेति

ततस्तेषां मन्त्राशिषो गृहीत्वा तांस्तान्सानुनयं विसर्ज्य ब्राह्मणान्भोजयित्वा दीनानाथांश्चान्नादिना सन्तोष्य स्वयं सुहृन्मित्रादियुतः सोत्साहः सन्तुष्टो हविष्यं भुञ्जीतेति । प्रतिकूलग्रहपूजा तत्तद्वासरे कर्तव्या राहुकेत्वोः पृथग्वासराभावान्मन्दवारो ग्राह्यः ।

शन्यादीन्मन्दवारे तु पूजयेत्प्रयतो नरः ॥ इति ।

एवं कुर्वतः फलं मात्स्ये—

अनेन विधिना यस्तु ग्रहपूजां समाचरेत् ।
सर्वान्कामानवाप्नोति प्रेत्य स्वर्गे महीयते ॥
अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तु ऋत्विजः ।
यजमानमदक्षिण्यो नास्ति यज्ञसमो रिपुः ॥

इति श्री प्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ ग्रहमखः समाप्तः ।

---

अत्र क्रमप्राप्तसर्वसाधारणमधुपर्कविधिमाह ।

## तृतीयाकण्डिका

षडर्घ्या भवन्त्याचार्य ऋत्विग्वैवाह्यो राजा प्रियः स्नातक इति प्रतिसंवत्सरानर्हयेयुर्यक्ष्यमाणास्त्वृत्विज आसनमाहार्याह साधु भवानास्तामर्चयिष्यामो भवन्तमित्याहरन्ति विष्टरं पद्यं पादार्थमुदकमर्घमाचमनीयं मधुपर्कं दधिमधुघृतमपिहितं काꣳस्ये काꣳस्येनान्यस्त्रिस्त्रिः प्राह विष्टरादीनि विष्टरं प्रतिगृह्णाति वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः । इमन्तमभितिष्ठामि यो मा कश्चाभिदासतीत्येनमभ्युपविशति पादयोरन्यं विष्टर आसीनाय सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति ब्राह्मणश्चेद्दक्षिणं प्रथमं विराजो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोह इत्यर्घं

प्रतिगृह्णात्यापः स्थ युष्माभिः सर्वान्कामानवाप्नवानीति निनयन्नभिमन्त्रयते समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत । अरिष्टा अस्माकं वीरा मा परासेचि मत्पय इत्याचामत्यामागन्यशसा सᳪं सृज वर्चसा । तम्मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिन्तनूनामिति मित्रस्यत्वेति मधुपर्कं प्रतीक्षते देवस्य त्वेति प्रतिगृह्णाति सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति नमः श्यावास्यायान्नशने यत्त आविद्धन्तत्ते निष्कृन्तामीत्यनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति तस्य त्रिः प्राश्नाति यन्मधुनो मधव्यं परमᳪं रूपमन्नाद्यम् । तेनाहम्मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानीति मधुमतीभिर्वा प्रत्यृचं पुत्रायान्तेवासिने वोत्तरत आसीनायोच्छिष्टं दद्यात्सर्वं वा प्राश्नीयात्प्राग्वाऽसञ्चरे निनयेदाचम्य प्राणान्त्संमृशति वाङ्म आस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्वोरोजोऽरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सहेत्याचान्तोदकाय शासमादाय गौरिति त्रिः प्राह प्रत्याह माता रुद्राणां दुहिता वसूनाᳪं स्वसाऽदित्यानाममृतस्य नाभिः । प्रनुवोचञ्चिकितुषे जनाय मा गामनागामदितिं वधिष्ट । मम चामुष्य च पाप्मानᳪं हनोमीति यद्यालभेताथ यद्युत्सिसृक्षेन्मम चामुष्य च पाप्मा हत ॐ मुत्सृजत तृणान्यत्त्विति ब्रूयान्न त्वेवामाᳪंसोऽर्घः स्यादधियज्ञमधिविवाहं कुरुतेत्येव ब्रूयाद्यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इति श्रुतेः ॥ ३॥

"षडर्घ्या भवन्ति" इति सूत्रम् । अर्ह पूजायामिति धातोर्भावे घञ् प्रत्ययः। न्यङ्क्वादित्वात्कुत्वम् । दण्डादिभ्यो यदिति यत्प्रत्ययः। अर्घमर्हन्तीत्यर्घ्याः षट्

पुरुषा अर्घार्हा भवन्तीत्यर्थः। तानाह "आचार्य ऋत्विक् वैवाह्यो राजा प्रियः स्नातक" इति सूत्रम्। उपनयनपूर्वककृत्स्नवेदाध्यापयिता आचार्यः। ऋत्विक् यो दक्षिणया परिक्रीतः कर्माणि करोति। वैवाह्यो जामाता। राजा दण्डपूर्वकं परिपालनकर्ता। प्रियो य इष्ट उत्कृष्टजातिः समानजातिर्वा। स्नातको ब्रह्मचर्यात्समावृत्तः। तस्य चार्हणमाचार्यकर्तृकं स्मृतम्। उक्तं च मनुना—

तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः।
स्रग्विणं तल्पमासीनमर्हयेत्प्रथमं गवा॥ इति॥

सूत्रे षड्ग्रहणं प्रियस्नातकयोः पृथक्करणार्थम्। "प्रतिसंवत्सरानर्हयेयुः" इति सूत्रम्। प्रतिसंवत्सरं गृहे आगतानाचार्यादीन् अर्घेणार्चयेयुः। न संवत्सरादर्वाक्। प्रतिसंवत्सरानर्हयेयुरित्यविशेषेणोक्तत्वादृत्विजोऽपि संवत्सरान्तेऽर्हयितव्या इति प्राप्ते आह—"यक्ष्यमाणास्त्वृत्विजः" इति सूत्रम्। 'ऋत्विजस्तु यक्ष्यमाणा यागकाल एव पूजनीयाः न ततोऽन्यत्र' एवं गदाधरेण व्याख्यातम्। इदमेव सूत्रं हरिहरमिश्रेणान्यथा व्याख्यातम्—'यज्ञं करिष्यन्तो यजमानाः ऋत्विजो याजकानि'ति। पूजनीया उक्ताः कालश्च। आश्वलायनोऽपि "ऋत्विजो वृत्वा मधुपर्कमाहरेत्स्नातकायोपस्थिताय राज्ञे चाऽऽचार्याय श्वशुरपितृव्यमातुलानां चेति"। इदानीमर्हणप्रकारमाह—"आसनमाहार्याह साधु भवानास्तामर्चयिष्यामो भवन्तम्" इति सूत्रम्। अर्घ्यायासनं पीठादि आसनमाहरेति प्रैषपूर्वकं अनुचरद्वाराऽऽनाय्य साधुभवानित्यर्घयिता अर्घ्यं प्रतिवदति। अर्घ्यं प्रत्यर्घ्येषणमेतत्। "आहरन्ति विष्टरं पद्यं पादार्थमुदकमर्घमाचमनीयं मधुपर्कं दधि मधु घृतमपिहितं कांस्ये कांस्येने"ति सूत्रम्। बहुवचनादर्घयितुः पुरुषा विष्टरादीनि आहरन्ति। तत्र विष्टरलक्षणं वीरमित्रोदये—

कतिभिस्तु भवेद्ब्रह्मा कतिभिर्विष्टरो मतः।

परिशिष्टे—

पञ्चाशता भवेद्ब्रह्मा तदर्धेन तु विष्टरः॥

ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ।
दक्षिणावर्त्तको ब्रह्मा वामावर्तस्तु विष्टरः ॥

ऊर्ध्वकेशः ऊर्ध्वाग्रः । लम्बकेशः तिर्यगग्रः । दक्षिणावर्तको ग्रन्थिरिति विशेषः । परिशिष्टान्तरेऽपि—

पञ्चविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषितम् ।
विष्टरं सर्वयज्ञेषु लक्षणं परिकीर्त्तितम् ॥ इति ।

विष्टरस्त्रिवृदरत्निमात्र इति गदाधरः । कौशो रज्जुविशेष इति भर्तृयज्ञः ।

प्रादेशमात्रं त्रिवृतं कौशं वा काशनिर्मितम् ।
विष्टरं सूरयः प्राहुरलाभे बल्बजादिकम् ॥

इति रेणुः । पञ्चविंशतिदर्भतरुणमयं कूर्चमिति हरिहरः ।

गृह्यकारिकायाम्—

यज्ञवास्तुनि मुष्टौ च स्तम्भे दर्भवटौ तथा ।
दर्भसंख्या न विहिता विस्तरास्तरणेषु च ॥ इति ।

पादयोरन्यमिति वचनादत्र द्वयोराहरणमिति भर्तृयज्ञः । पद्यं पादयोरधस्तान्निधानार्थं विष्टरमिति गदाधरः । भर्तृयज्ञमते तु पादप्रक्षालनार्थमुदकं पद्यशब्देन । पादार्थमुदकं पादप्रक्षालनार्थं जलं सुखोष्णम् । अर्घम् । अर्घशब्देनोदपात्रमेवोच्यते । अर्घं हस्तप्रक्षालनार्थजलमिति वीरमित्रोदयकारः । उदकगन्धपुष्पाण्यक्षतबदराणीति भर्तृयज्ञः । गन्धपुष्पाक्षतकुशतिलशुक्लसर्षपदधिदूर्वान्वितं सुवर्णादिपात्रस्थमुदकमिति हरिहरः । आचमनीयम्—आचमनार्थमुदकमेव । दधिमधुघृतमेकस्मिन्कांस्यपात्रे कृतमपरेण कांस्यपात्रेणापिहितं मधुपर्कशब्देनोच्यते । मधुपर्के दध्यलाभे पयो जलं वा प्रतिनिधिरिति गदाधरः । मध्वलाभे घृतं गुडो वेत्याश्वलायनः । त्रितयमपि समुच्चितमिति हिरण्यकेशिनः । तथा च तत्सूत्रम्—“अथास्मा आवसथं कल्पयित्वाऽर्घ इति प्राह कुरुतेति प्रत्याह कुर्वन्त्यस्मै त्रिवृतं पाङ्क्तं वा दधि मधु घृतमिति त्रिवृद्दधि मधु घृतमापः सक्तव

इति पाङ्कः" । अथैषां तौल्यमाह—

आज्यमेकं पलं ग्राह्यं दध्नस्त्रिपलमेव च ।
मधुनः पलमेकन्तु मधुपर्कः स उच्यते ॥

वासोयुगलं चन्दनपुष्पाणि यज्ञोपवीतमलङ्काराणि एतान्युपकल्प्य । मनुः—

द्विराचम्य समासीनः कर्ता प्रत्यङ्मुखो वरम् ।
प्राङ्मुखन्तु समासीनं मधुपर्केण पूजयेत् ॥

"अन्यस्त्रिस्त्रिः प्राह विष्टरादीनि" इति सूत्रम् । अर्चयितुर्व्यतिरिक्तोऽन्यो विष्टरादीनि द्रव्याणि त्रिस्त्रिर्वारत्रयं वदति । "विष्टरो विष्टरो विष्टरः प्रतिगृह्यतामि"ति सकृत् । ततो वरः अर्घयितुः सकाशात् विष्टरं प्रतिगृह्णाति । "वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः । इमन्तमभितिष्ठामि यो मा कश्चाभिदासती"त्येनमभ्युपविशति । ततोऽर्चयितुः सकाशाद्विष्टरं तूष्णीमेव प्रतिगृह्य तं विष्टरमासने निधाय "वर्ष्मोऽस्मि"इति मन्त्रेणोपविशति । ग्रहणोपवेशनयोर्मध्ये पठितोऽपि मन्त्र इमन्तमभितिष्ठामीति लिङ्गादुपवेशने विनियुज्यते । उक्तं च गृह्यकारिकायाम्—

अर्घ्यायार्घयिता तस्मै विष्टरं तं प्रयच्छति ।
तूष्णीं स प्रतिगृह्णीयादुदगग्रं तमासने ॥
निधायोपविशेत्तस्मिन्वर्ष्मोऽस्मीत्यादिमन्त्रतः ।
अन्तरा पठितो मन्त्र उपादानोपवेशने ॥
अपि चेन्मन्त्रलिङ्गात्स नियोज्य उपवेशने ॥

'पाणिभ्यां विष्टरप्रतिग्रहः' इति हरिहरमिश्रः । तत्र प्रमाणमन्वेषणीयम् । मन्त्रार्थः—अर्घ्य आत्मानं स्तौति अर्घत्वाय कुलाचारवपुर्वयोगुणैरहं समानानां सजातीयानां मध्ये वर्ष्मः श्रेष्ठः अस्मि भवामि । उद्यतां उदयं प्रकाशं कुर्वतां ग्रहनक्षत्रादीनां मध्ये सूर्य इव । किं च इमं विष्टरं पुरुषमुद्दिश्य विष्टराद्बाह्यमभिलक्ष्यीकृत्य तिष्ठाम्यधः कृत्वा पर्युपविशामि । यः कश्चन मा मां अभिदासति उपक्षीणं कर्तुमिच्छति । तमु उपक्षये । "पादयोरन्यं विष्टर आसीनाय" इति सूत्रम् । विष्टरे आसीनायोप-

विष्टरायार्घ्याय पादयोरधस्तान्निधानार्थमन्यं विष्टरं ददाति । एतच्च पाद-प्रक्षालनोत्तरं द्रष्टव्यम् । तथा सति दृष्टार्थः स्यात् । प्रक्षाल्य हि पादौ विष्टरे क्रियेत इति । तेनार्थेन पाठो बाधितः । पाठक्रमादर्थक्रमो बलीयानिति न्यायात् । "सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति ब्राह्मणश्चेद्दक्षिणं प्रथमं विराजो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोहः" इति सूत्रम् । ततः पाद्यं प्रतिगृह्य विराजो दोहोऽसीति मन्त्रेण सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति क्षत्रियादिरर्घ्यऽर्थेद्ब्राह्मणो-ऽर्घ्यः स्यात्तदा दक्षिणं पादं प्रथमं प्रक्षाल्य ततः सव्यं प्रक्षालयति । तेन च पादौ प्रक्षालयेद्वरस्य कन्यादाता । स्वयं प्रक्षालयेदिति रेणुः । तदुक्तं गृह्यकारिकायाम्—

> एवं पादार्थमुदकं त्रिः सकृत्प्रतिगृह्यताम् ।
> विराज इति मन्त्रेण तद्गृहीत्वोदकं वरः ॥
> पादौ प्रक्षालयेत्तूष्णीं स तेन स्वयमात्मनः ।

मन्त्रार्थः—प्राणधारणादिगुणैः सकलसाहित्येन विविधतया राजत इति विराट् अन्नं तस्या विराजो दोहः परिणामः सारो रसः स त्वं असि भवसि । हे उदक तत्त्वं विराजो दोहं अशीय अश्नुवै व्याप्नुयाः । किं च मयि विषये या पाद्या पादयोः साध्वी सपर्या तस्यै तदर्थं विराजो दोहः मन्त्रसंस्कृतं जलं भवेति शेषः । "अर्घं प्रतिगृह्णात्यापः स्थ युष्माभिः सर्वान्कामानवाप्नवानीति" सूत्रम् । अर्घ्यः समर्पितं अर्घं प्रतिगृह्णाति "आपः स्थ युष्माभि"रिति मन्त्रेण । उक्तं च गृह्यकारिकायाम्—

> अम्भूमयाऽर्घपात्रस्थमर्घं तस्मै प्रयच्छति ।
> तं गृह्णाति स पश्चादापः स्थ युष्माभिमन्त्रतः ॥

हे आपः? आपःस्थ आसिहेतवो भवथ । युष्माभिः कृत्वा सर्वान् कामान् अभीष्टार्थान् आप्नवानि लभेयम् । "निनयन्नभिमन्त्रयते समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत। अरिष्टा अस्माकं वीरा मा परासेचि मत्पय"इति सूत्रम् । तमर्घं भूमौ निनयन् प्रापयन्नभिमन्त्रयते

समुद्रं व इति मन्त्रेण। ननु मन्त्रान्ते अर्घं शिरसाऽभिवन्द्य प्रागुदग्वा निनयनमिति वासुदेवः। तथा च रेणुः—

मूर्द्ध्ना तमभिवन्द्यार्घं निनयन्नभिमन्त्रयेत्।
प्रागुदग्वा समुद्रं वः प्रहिणोमीति मन्त्रतः॥
जलं तदर्घशब्देन लिङ्गादेवावगम्यते।

मन्त्रार्थः—हे आपः! वो युष्मान् समुद्रं प्रहिणोमि गमयामि। अतः स्वां योनिं स्वकारणभूतं समुद्रं अभिलक्षीकृत्य गच्छत। किञ्च युष्मत्प्रसादाच्चास्माकं वीराः पुत्राः भ्रातरः अरिष्टाः अहताः सन्तु। मत्तः पयः अर्घादिमङ्गलजलं मा परासेचि अपगतं माऽस्तु। सदैवाहमर्घ्यो भवानीत्यर्थः। "आचामस्यामागन्यशसासं सृज वर्चसा। तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनामि"ति सूत्रम्। ततो दत्तमाचमनीयं प्रतिगृह्य "आमागन्नि"ति आचामति सकृद्भक्षयति। ततः स्मार्ताचमनम्। मन्त्रार्थः—हे वरुण जलेश! तमेवंरूपेण त्वामाश्रितं मा मां यशसा सहभावं सामीप्यं वा आगन् आगमय। आङुपसर्गो अगन्निति क्रियापदेन सम्बध्यते। तथा वर्चसा ब्रह्मवर्चसेन संसृज संसृष्टं कुरु। किञ्च प्रजानां पुत्रपौत्रादीनां प्रियं पशूनां गोऽश्वादीनां अधिपतिं स्वामित्वेन च तथा तनूनां देहावयवानां शरीराणां चारिष्टं अहिंसकं कुरु। हिंसाऽत्र—

अनभ्यासेन वेदानामाचारस्य च लङ्घनात्।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति॥

इत्यादि दर्शिता। "मित्रस्य त्वेति मधुपर्कं प्रतीक्षते" इति सूत्रम्। ततोऽर्घ्योऽर्घयितुर्हस्तस्थितमुद्घाटितं मधुपर्कं मित्रस्य त्वेति प्राशित्रमन्त्रेण प्रतीक्षते पश्यतीत्यर्थः। "देवस्य त्वेति प्रतिगृह्णातीति" सूत्रम्। ततो देवस्य त्वेति प्राशित्रप्रतिग्रहणमन्त्रेण मधुपर्कं प्रतिगृह्णाति। "सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति नमः श्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्कृन्तामीति"सूत्रम्। अत्र सव्यहस्तस्थितस्यैव दक्षिणस्यानामिकया त्रिर्लोडनं यथा स्यादित्येतदर्थं दक्षिणग्रहणम्।

मन्त्रार्थः—हे अग्ने ? तुभ्यं नमः। किंभूताय श्यावास्याय कपिशमुखाय ते तव अन्नशने अश्यत इत्यन्नं तस्याशने अदनीये मधुपर्के ह्रस्वश्छान्दसः। यद्द्रव्यं आविद्धं संश्लिष्टं अनदनीयं तन्निष्क्रन्तामि निरस्यामि । "अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति" सूत्रम् । अनामिका च अङ्गुष्ठश्च इत्यनामिकाङ्गुष्ठं तेनानामिकाङ्गुष्ठेन वारत्रयं निरुक्षयति मधुपर्कैकदेशं पात्राद्बहिः प्रक्षिपति इति। च शब्दात्प्रतिसंयवनं निरुक्षणम् । एवं च निरुक्षणव्यवधानात्प्रतिसंयवनं मन्त्रावृत्तिः । तथा च गृह्यकारिकायाम्—

त्रिरेवानामिकाङ्गुष्ठेन तत्स्थस्य निरुक्षयति ।
निरुक्षेत्प्रत्युत्पवनं च शब्दकरणादिह ॥
मन्त्रावृत्तिर्भवेत्प्रत्युत्पावनव्यवधानतः ॥ इति ।

"तस्य त्रिः प्राश्नाति यन्मधुनो मधव्यं परमꣳरूपमन्नाद्यम् । तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानीति" इति सूत्रम । मधुपर्कपात्रं भूमौ निधाय । तस्येत्यवयवलक्षणा षष्ठी । तस्य मधुपर्कस्य त्रिः प्राश्नीयात् 'यन्मधुनोमधव्य' मित्यनेन मन्त्रेण । प्राशनत्रयेऽपि हविर्ग्रहणन्यायेन मन्त्रावृत्तिः । उच्छिष्टस्यैव मन्त्रोच्चारणम् ।

तथाचोक्तं गृह्यकारिकायाम्—

भूमौ निधाय तत्पात्रं सर्वं मधुन इत्यतः ।
आवृत्तिः प्रतिभक्षं स्यान्मन्त्रस्य द्रव्यभेदतः ॥
उच्छिष्टस्य भवेन्मन्त्रोच्चारणं मनुरब्रवीत् ।

गदाधरभाष्येप्युक्तम्—

ताम्बूलेक्षुफले चैव भुक्तस्नेहानुलेपने ।
मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत् ॥

ननु 'एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रपाठ' इति कात्यायनपरिभाषातो द्रव्यत्रयं दधिमधुघृतं तेनादोषः। मन्त्रार्थः—हे देवाः ? मधुनः मकरन्दस्य यत् मधव्यं मधुनि साधु परमं उत्कृष्टं रूपयति प्रकाशयति देहसङ्घातमिति रूपम्, अन्नाद्यं अक्षिमादिवत्प्राणधारकं च, तेन सर्वरूपोपपन्नरसेनोक्तविशेषणविशिष्टेनाहं परमः सर्वेभ्यो गुणाधिकः मधव्यः मधुपर्कार्हः

कुलीरसिंहयोः कीटचापयोर्मीनमेषयोः।
गण्डान्तमन्तरालं स्याद्घटिकार्द्धं मृतिप्रदम्॥

अथ दुर्मुहूर्त्तदोषः। वीरमित्रोदये—

भास्करादिषु वारेषु ये मुहूर्त्ताश्च निन्दिताः।
विवाहादिषु ते वर्ज्या अपि लग्नगुणैर्युताः॥

मुहूर्त्तलक्षणमाह कश्यपः—

अह्नः पञ्चदशो भागो मुहूर्त्तोऽथ तथा निशि।

तांश्चाह श्रीपतिः—

रुद्राहिमित्रपितरो वसुवारिविश्वे
वेधा विधिः शतमखः पुरुहूतवह्नी॥
नक्तञ्चरेशवरुणार्यमणो भगश्च
प्रोक्ता दिने दश च पञ्च तथा मुहूर्त्ताः।
निशामुहूर्त्ता गिरिशाजपादाहिर्बुध्न्यपूषाऽश्वियमाग्नयश्च।
विधातृचन्द्रादितिजीवविष्णुतिग्मद्युतित्वष्टृसमीरणाश्च॥
रवावर्यमा ब्रह्म रक्षश्च सोमे कुजे वह्निपित्र्यं बुधे चाभिजित्स्यात्।
गुरौ तोयरक्षौ भृगौ ब्राह्मपित्र्ये शनावीशसर्पौ मुहूर्त्ता निषिद्धाः॥

अथ वारदोषाः। नारदः—

न हिता वारदोषा ये सूर्यवारादिषु क्रमात्।
अपि सर्वगुणोपेतास्ते वर्ज्याः सर्वमङ्गले॥

मुहूर्त्तसर्वस्वे—

अर्कवारे चतुर्थश्च सोमे सप्तमितस्तथा।
द्वितीयो भौमवारे तु बुधवारे तु पञ्चमः॥
अष्टमो गुरुवारे स्यात्तृतीयः शुक्रवासरे।
शनौ षष्ठो ह्यर्धयामः शुभे त्याज्यो मनीषिभिः॥
प्रहरस्य चतुर्थांशं रविवारे चतुर्दशम्।
सोमे तु द्वादशं भौमे दशमं च बुधेऽष्टमम्॥

षष्ठाकं वेदनवममेकनेत्रं रवेर्दिनात् ।
दुर्मुहूर्त्तं दिवा रात्रावष्टमं भृगुसोमयोः ॥
भौमवारे सप्तमं च सर्वकार्ये विलोकयेत् ।

चिन्तामणावपि—

कुलिकः कालवेला च यमघण्टश्च कण्टकः ।
वाराद्द्विघ्ने क्रमान्मन्दे बुधे जीवे कुजे क्षणः ॥

( स्पष्टबोधार्थमेतेषां चक्रम् )

| वासराः सूर्यादिकाः | सू. | चं. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|---|
| कुलिकः | १४ | १२ | १० | ८ | ६ | ४ | २ |
| कालवेला | ८ | ६ | ४ | २ | १४ | १२ | १० |
| यमघण्टः | १० | ८ | ६ | ४ | २ | १४ | १२ |
| कण्टकः | ६ | ४ | २ | १४ | १२ | १० | ८ |
| अर्द्धयामघटिकाः | ४ | ७ | २ | ५ | ८ | ३ | ६ |

अस्यापवादमाह गर्गः—

विन्ध्यस्योत्तरकूले तु यावदा तु हिमालयम् ।
यमघण्टकदोषोऽस्ति नान्यदेशेषु विद्यते ॥
मत्स्याङ्गमगधान्ध्रेषु यमघण्टस्तु दोषकृत् ।
काश्मीरे कुलिकं दुष्टमर्धयामस्तु सर्वतः ॥

नारदः—

बृहस्पतिः केन्द्रगो वा शुक्रो वा यदि वा बुधः ।
एतेषां दोषभङ्गानां करोत्येव न संशयः ॥
गुरुरेकोऽपि लग्नस्थः सकलं दोषसञ्चयम् ।
विनाशयति घर्मांशुर्दिनस्तिमिरं यथा ॥ इति ।

चिन्तामणिटीकायामपि—

वारेशे सबले वापि बलाढ्ये लग्नगे शुभे।
कुलिको दिनदोषस्तु विनश्यति न संशयः॥

अथ लग्नानामन्धादिदोषाः। वशिष्ठः—

मेषो वृषो मृगेन्द्रश्च दिवसेऽन्धाः प्रकीर्त्तिताः।
नृयुक्कर्कटकन्याश्च रात्रावन्धाः प्रकीर्त्तिताः॥
तुला च वृश्चिकश्चैव दिवसे बधिरौ तथा।
धनुश्च मकरश्चैव बधिरौ निशि कीर्त्तितौ॥
कुम्भमीनौ च पङ्गू द्वौ दिवा रात्रौ यथाक्रमम्॥

अनेन तस्मिन्कालेऽन्धादिलग्नानि वर्ज्यानीत्यर्थः।

दारिद्र्यं बधिरतनौ दिवाऽन्धलग्ने
वैधव्यं शिशुमरणं निशान्धलग्ने।
पङ्ग्वङ्गे निखिलधनानि नाशमीयुः
सर्वत्राधिपगुरुदृष्टिभिर्न दोषः॥

एषामपवादमाह कश्यपः—

काणपङ्ग्वन्धबधिरमासशून्याश्च राशयः।
गौडमालवयोस्त्याज्या अन्यदेशे न गर्हिताः॥

अथोदयास्तशुद्धिः। तत्र नारदः—

लग्नलग्नांशकौ स्वस्वपतिना वीक्षितौ युतौ।
न चेद्वाऽन्योन्यपतिना शुद्धमित्रेण वा तथा॥
वरस्य मृत्युः स्यात्ताभ्यां सप्तसप्तोदयांशकौ।
एवं तौ न युतौ दृष्टौ मृत्युर्वध्वाः करग्रहे॥

अथाष्टमलग्नदोषः—

दम्पत्योरष्टमं लग्नमष्टमो राशिरेव च।
यदि लग्नगतः सोऽपि दम्पत्योर्मरणप्रदः॥
स राशिः शुभसंयुक्तो लग्नं वा शुभसंयुतम्।
लग्नं विवर्जयेद्यत्नात्तदंशांश्च तदीश्वरान्॥

दम्पत्योर्द्वादशं लग्नं राशिर्वा यदि लग्नगः ।
अर्थहानिस्तयोर्यस्मात्तदंशस्वामिनं त्यजेत् ॥
जन्मराश्युद्गमं चैव जन्मलग्नोदयं शुभम् ।
तयोरुपचयस्थानं यदि लग्नगतं शुभम् ॥

अस्यापवादमाहतुः कश्यपबृहस्पती--

जन्मेशाष्टमलग्नेशौ मिथो मित्रे व्यवस्थितौ ।
जन्मराश्यष्टमर्क्षोत्थो दोषो नश्यति भावतः ॥

कालप्रदीपे--

कर्तुः षष्ठं त्यजेल्लग्नं क्षौरोद्वाहगतीर्विना ।
मृतिं व्ययं च सर्वत्र एकमित्राधिपादतः ॥ इति ।

गुरुः--

लग्नादष्टमराशीशः केन्द्रगः शुभवीक्षितः ।
यद्यप्यष्टमलग्नोत्थं दोषमाशु व्यपोहति ॥
मीनोक्षकर्कालिमृगस्त्रियोऽष्टमं
लग्नं यदा नाष्टमदोषकृद्भवेत् ॥

अथ षड्वर्गबलम् । नारदीये--

त्रिंशद्भागात्मकं लग्नं होरा तस्यार्द्धमुच्यते ।
लग्नत्रिभागो द्रेष्काणो नवांशोऽपि नवांशकः ॥
द्वादशांशो द्वादशांशस्त्रिंशांशस्त्रिंशदंशकः ।
षड्वर्गाः कथिता ह्येते तेषामीशा इमे स्मृताः ॥
मेषवृश्चिकयोर्भौमस्तुलावृषभयोः सितः ।
कन्यामिथुनयोर्बौधः कर्कटस्य पतिः शशी ॥
चापान्त्ययोर्गुरुः स्वामी शनिर्मकरकुम्भयोः ।
रविः सिंहस्य वै तेषामंशानामाधिपा इमे ॥
शुक्रचन्द्रज्ञगुरवः शुभा ह्यन्ये शुभेतराः ।
क्षीणः शशी तथाऽन्ये च पापयुक्तो बुधोऽशुभः ॥
होरयोरोजराशौ तु रवीन्दू क्रमतः पती ।

समराशौ तु चन्द्रार्कौ होरेशौ क्रमतो वदेत् ॥
स्युर्द्रेष्काणेषु चाद्येषु नव राशीश्वराः क्रमात् ।
नवमांशा मेषसिंहचापेष्वजादयः क्रमात् ॥
क्रमाद्वृषमृगकन्यासु ज्ञेयाः स्युर्मकरादयः ।
तुलामिथुनकुम्भेषु स्युः क्रमेण तुलादयः ॥
अलिकर्कटमीनेषु क्रमात्स्युः कर्कटादयः ।
लग्नराशिं समारभ्य द्वादशांशेश्वराः क्रमात् ॥
कुजार्कीज्यज्ञशुक्राणां बाणेष्वष्टाद्रिमार्गणाः ।
भागाः स्युर्विषमे ते तु समराशौ विपर्ययात् ॥
सौम्यः स्वमित्रजः श्रेष्ठो रिपुक्रूरभवोऽशुभः ।
क्रूरमित्रभवो मध्यो मिश्रैर्मिश्रफलं च तैः ॥

षड्वर्गापवादः । चूडामणौ—

मुहूर्त्तलग्नषड्वर्गकुनवांशग्रहोद्भवाः ।
ये दोषास्तान्निहन्त्येको यत्रैकादशगः शशी ॥

अथ कर्तरीदोषः । नारदीये —

लग्नस्य पृष्ठाग्रगयोरसाध्वोः सा कर्तरी स्यादृजुवक्रयोश्च ।
तावेव शीघ्रौ यदि वक्रचारौ न कर्तरी चेति पितामहोक्तिः ॥

लग्नाद्द्विरिःफगौ क्रूरौ त्र्यमेव समांशकम् ।
तदा कर्तरिदोषोऽयं नान्यथा भावजं फलम् ॥
क्रूरग्रहमध्यगते लग्ने चन्द्रेऽथवा करग्रहणम् ।
ते यमसदनाभिमुखं गमनं वाञ्छन्ति कन्यायाः ॥

कर्तरीदोषापवादः । वशिष्ठः—

पापयोः कर्तरीकर्त्रोर्नीचशत्रुगृहस्थयोः ।
यदा चास्तगयोर्वाऽपि कर्तरी नैव दोषदा ॥
विघोर्धनायगे शुभग्रहेऽथ वाऽन्त्यगे गुरौ ।
न कर्तरी भवत्यहो जगाद बादरायणः ॥

अथ जामित्रदोषविचारः--

जामित्रं द्विविधं प्रोक्तं गर्गगालवगौतमैः ।
तस्माल्लग्नाच्च चन्द्राच्च जामित्रं परिवर्जयेत् ॥
लग्नस्थाः शुभखचराः कुर्वन्ति विवाहिताम् ।
सप्तभिरब्दैः क्रूराश्च विलग्नगा विधवाम् ॥
सप्तमगाः सकलखगाः सप्तभिरब्धैः सप्तमासैश्च ।
दम्पत्योः सह मरणं यमरक्षितमपि कुर्वन्ति ॥
शशिलग्ननवांशकात्खलो यदि खेटः शरसायकां१९शके ।
अयनमन्यगुणैर्न हन्यते निबिडैरत्युपसर्गडम्बरः ॥

अथ जामित्रापवादः--

स्वोच्चेऽथ वा स्वभवने स्फुरदंशुजालः
सौम्यालये हितगृहे शुभवर्गगो वा ।
जामित्रकारिपरिचिन्तितदोषराशिं
हत्वा ददाति बहुशः सुखमेव चन्द्रः ॥

ज्ञानमञ्जर्याम्--

लग्नाधिपः सप्तमराशिसंस्थः क्रूरोऽपि सौम्यो यदि वा विवाहे ।
तदा महादोषशतं निहन्ति पुत्रादिसौख्यं सुभगां करोति ॥

जामित्रगो यदि भवेदुशना बुधश्च
गीर्वाणवन्द्यसचिवः सितपक्षचन्द्रः ।
कन्याविवाहसमये परिहृत्य दोषा-
न्सौभाग्यदाः शुभगदाः खलु काव्यमुख्याः ॥

अथ रिःफषडष्टेन्दुदोषः । वीरमित्रोदये--

षडष्टरिःफगे चन्द्रे लग्नादोषः स्वसंज्ञकः ।
तल्लग्नं वर्जयेद्यत्नाज्जीवशुक्रसमन्वितम् ॥
उच्चगे नीचगे वाऽपि मित्रगे शत्रुराशिगे ।
अपि सर्वगुणोपेतं दम्पत्योर्निधनप्रदम् ॥

अस्यापवादमाह वशिष्ठः—

जन्मेशमृत्यू राशीशौ मिथो मित्रे यदा तदा।
जन्माष्टमर्क्षे चन्द्रश्च दोषो भङ्गमवाप्नुयात् ॥

अथ भृगुषष्ठदोषः। नारदीये—

भृगुषष्ठाख्यागो दोषो लग्नात्षष्ठगते सिते।
उच्चगेऽशुभसंयुक्ते तल्लग्नं सर्वथा त्यजेत् ॥

अस्यापवादमाह—

नीचगते तुरीये वा शत्रुक्षेत्रगतेऽपि वा।
भृगुषट्कस्थितो दोषो नास्ति तत्र न संशयः ॥

अथ कुजाष्टमदोषः। नारदीये—

कुजाष्टमो महादोषो लग्नादष्टमगे कुजे।
शुभत्रययुतं लग्नं त्यजेत्तत्तुङ्गगे यदि ॥ इति।

अस्यापवादः—

अस्तगे नीचगे भौमे शत्रुक्षेत्रगतेऽपि वा।
कुजाष्टमोद्भवो दोषो न किञ्चिदपि विद्यते ॥

अथ भावफलान्युच्यन्ते। तत्र वराहः—

मूर्तौ करोति विधवां दिनकृत्कुजश्च
राहुर्विपन्नतनयां रविजो दरिद्राम्।
शुक्रः शशाङ्कतनयश्च गुरुश्च साध्वी-
मायुःक्षयं च कुरुतेऽथ विभावरीशः ॥
कुर्वन्ति भास्करशनैश्चरराहुभौमा
दारिद्र्यदुःखमतुलं नियतं द्वितीये।
वित्तेश्वरीमविधवां गुरुशुक्रसौम्या
नारीं प्रभूततनयां कुरुते शशाङ्कः ॥
सूर्येन्दुभौमगुरुशुक्रबुधास्तृतीये
कुर्युः सदा बहुसुतां धनभागिनीं च।

व्यक्तं दिवाकरसुतः सुभगां करोति
मृत्युर्ददाति नियतं खलु सैंहिकेयः ॥
स्वल्पं पयः स्रवति सर्वसुते चतुर्थे
दौर्भाग्यमुष्णकिरणः कुरुते शशी च ।
राहुः सपत्नमपि च क्षितिजोऽल्पवित्तां
दद्याद्भृगुः सुरगुरुश्च बुधश्च सौख्यम् ॥
नष्टात्मजां रविकुजौ खलु पञ्चमस्थौ
चन्द्रात्मजो बहुसुतां गुरुभार्गवौ च ।
राहुर्ददाति मरणं शनिरुग्ररोगान्
कन्याविनाशमचिरात्कुरुते शशाङ्कः ॥
षष्ठाश्रिताः शनिदिवाकरराहुजीवाः
कुर्युः कुजश्च सुभगां श्वशुरेषु भक्ताम् ।
चन्द्रः करोति विधवामुशना दरिद्रा-
मस्थां शशाङ्कतनयः कलहप्रियां च ॥
सौर्यारजीवबुधराहुरवीन्दुशुक्रा
दद्युः प्रसह्य खलु सप्तमराशिसंस्थाः ।
वैधव्यबन्धनकुलक्षयवित्तनाशं
व्याधिप्रवासमरणानि यथाक्रमेण ॥
स्थानेऽष्टमे गुरुबुधौ नियतं वियोगं
मृत्युं शशी भृगुसुतश्च तथैव राहुः ।
सूर्यः करोत्यविधवां सुरुजां महीजः
सूर्यात्मजो धनवतीं पतिवल्लभां च ॥
धर्मे स्थितां भृगुदिवाकरभूमिपुत्रा
जीवश्च धर्मनिरतां शशिजः सरोगाम् ।
राहुश्च सूर्यतनयश्च करोति वन्ध्यां
कन्याप्रसूतिजठरां कुरुते शशाङ्कः ॥

व्याख्यानाद् दिनद्वयेन पूर्वाशौचस्यैव समापनम् । अन्यथा दिनद्वयादेः पराशौचमात्रकालत्वविधाने दशमदिनस्य पराशौचकालत्वस्याप्राप्तत्वेन वैषम्यविरहात् दशमदिनमादायापि तत्सम्भवात् । न च पूर्वाशौचव्यपगमे दिनद्वयेनेत्यनुषङ्गाभिप्रायिका व्याख्या, तर्हि दशमदिने पराशौचाप्राप्तेस्तद्दिने परमृतस्योदकदानादिकं न स्याद्यावदशौचं तद्दानात् । अनुषङ्गे गौरवाच्चेत्याहुः ।

एवं यत्रैकं सपिण्डमरणं तद्द्वितीयादिदिने चापरं, ततः प्रथमसपिण्डमरणप्रथमार्द्धे गते द्वितीयसपिण्डमरणप्रथमार्द्धे गुरुपित्रादिमरणं तत्र सपिण्डानां सर्वेषां, प्रथमद्वितीयमरणप्रतियोगिपुत्रादीनां च प्रथमाशौचकालेनैव शुद्धिः । तृतीयमरणप्रतियोगिपुत्रादीनां तु तृतीयाशौचकालेन पूर्णेनैव शुद्धिः, उत्तरार्द्धगतत्वात् प्रथमेनास्याबाधात् । प्रथमाशौचबाधिततया न्यूनकालत्वाद् द्वितीयेनाप्यस्याबाधात् । तथा यत्रैकसपिण्डजननमध्ये सपिण्डान्तरजननं तत्र पूर्वजातस्यान्तरामरणे "बालस्त्वन्तर्दशाहे तु" इतिवचनात् गौडमतेन पूर्वाशौचस्य सद्यो निवृत्त्या पराशौचस्यापि सद्योनिवृत्तिः सपिण्डानां, पूर्वजातमातापित्रोस्तु पूर्वजातपुत्रमरणे जात्युक्ताशौचम्, जातमात्रस्येत्यादि कौर्म्यात् । पूर्वजातकन्यामरणे तु तयोः सद्यःशौचम् "आजन्मनस्तु चूडान्तम्" इत्यादिवचनात् । परजातपितुस्तु पूर्वजातपूर्वार्द्धे चेत् परजन्म, तदा पूर्वाशौचनिवृत्त्यैव, तत्परार्द्धे चेत्तदा पूर्णजाताशौचनिवृत्त्यैव शुद्धिः । परजातमातुस्तु सर्वथा स्वजाताद्यधि विंशतिरात्रादिनैव शुद्धिः । परजातस्य तन्मध्ये मरणे तु न सपिण्डानां सद्यः पूर्वाशौचस्य निवृत्तिः; किन्तु तस्य स्वाधीनस्थितिकतया स्वकालेनैव । पूर्वार्द्धजातस्य परस्य मरणे जातमातापित्रोरप्येवम् । उत्तरार्द्धजातपुत्रमरणे तयोः स्वजाताद्यधि जात्युक्ताशौचम् । उत्तरार्द्धजातकन्यामरणे तयोः सद्यः शौचम् । यत्र तु दशमादिनादौ परजननं वृत्तं, तदा तन्मध्ये परजातस्य मरणे सपिण्डानां वर्द्धितदिनद्वयादिसहितपूर्वाशौचकालाच्छुद्धिः । तादृग्जातपुत्रमरणे मातापित्रोर्जात्युक्ताशौचम् । तादृशपरजातकन्यामरणे तयोः सद्यः शौचम् । तादृशकन्यामरणे पितुर्दिनद्वयादिसहिताशौचोक्तिः स्मात्तस्य सापिण्डजननात्स्वकन्याजननस्य गुरुत्वास्वीकारादुपपद्यते । वस्तुतः कन्याजननं ततो गुर्वित्युक्तम् । एवं कन्यापुत्रयुग्मोत्पत्तौ मातुः कन्योत्पत्तिनिमित्तमासेन शुद्धिः । तयोरेकतरस्याशौचमध्ये मरणे मातुः कन्यामरणाच्छुद्धिर्न पुत्रमरणात् । "उदक्यां सूतिकां विना" इति पर्युदासादयुक्तमिदमित्याभाति । सपिण्डानां तु तयोः पूर्वजातस्य मरणा-

च्छुद्धिः । तथा सपिण्डजननमरणाशौचगर्भस्रावाशौचसङ्करे प्राक् पश्चाद्वा जातेन गर्भस्रावाशौचेनैव शुद्धिः । यथा-

वृद्धमनुः ।

शावस्योपरि शावे तु सूतकोपरि सूतके ।
शेषाहोभिर्विशुद्ध्येत्तु उदक्यां सूतिकां विना ॥

उदक्यापदं गर्भस्रावाशौचपरम् ।

इदन्तु बोध्यम् । अशौचयोः सङ्करेऽगुर्वशौचं पूर्वेण शुध्यतीत्यादावशौचयोः पूर्वनिमित्तजन्याशौचस्वरूपयोग्यकालावच्छेदेन तयोरेकाधिकरणवृत्तित्वं साङ्कर्यम्, एतल्लाभाय मनुवचने दशाहग्रहणम् । तेन यत्र परनिमित्तं पूर्वनिमित्तजन्याशौचस्वरूपयोग्यदशाहादिकाले न श्रुतं किन्तु तदुत्तरं स्नानादिविलम्बात् विद्यमानपूर्णाशौचकाले श्रुतं ततस्तज्जन्याशौचकाले पूर्वाशौचसत्त्वेऽपि न साङ्कर्यम् । एवं यत्राज्ञातपूर्वनिमित्तस्य दशाहाभ्यन्तरे द्वितीयं निमित्तं ज्ञातं ततः पूर्वनिमित्तदशाहोत्तरं द्वितीयनिमित्तश्रवणजन्यातिक्रान्तत्रिरात्राशौचसाङ्कर्यमतो द्वितीयनिमित्तदशाहाभ्यन्तरे पूर्वनिमित्तश्रवणेऽपि न द्वितीयनिमित्तजन्याशौचेन प्रथमनिमित्तजन्याशौचसाङ्कर्यं, किंतु प्रथमनिमित्तश्रवणजन्यातिक्रान्तत्रिरात्राशौचसाङ्कर्यम्, अतो द्वितीयनिमित्तजन्यसम्पूर्णाशौचे शेषेणैव शुद्धिरिति बोध्यम् । अशौचयोः पौर्वापर्यं च स्वनिमित्तयोः पौर्वापर्यकृतम् । एतल्लाभायैवाशौचलाक्षणिकं मन्वादिवचने जन्ममरणादिपदम् । तेन यत्र पूर्वजातं निमित्तं पश्चाच्छ्रुतं, पश्चाज्जातं च पूर्वं श्रुतम्, तत्र पश्चाज्जाताशौचस्य न पूर्वत्वम् । एवं पूर्वोत्तरार्द्धदशमदिनादिपतितत्वमपि निमित्तस्य तत्पतितत्वेनैव बोध्यम् ।

एतेन जननमरणतच्छ्रवणादि निमित्तम्, अशौचं नैमित्तिकं तत्र निमित्तयोरेव साङ्कर्यं ग्राह्यम् । सर्वप्रवरमनुस्मृतौ दशाहजन्ममरणशब्दश्रवणात् । तच्च तयोर्दशाहाद्येककालवर्त्तित्वं तथा च निमित्तयोः सङ्करेऽगुरु निमित्तं पूर्वेण बाध्यते इति फलितम् । बाध्यत्वं च पूर्वनिमित्तजन्याशौचातिरिक्ताजनकत्वम् । इत्थं च पूर्वनिमित्ते ज्ञातेऽज्ञाते वा तत्कालमध्यपाति परनिमित्तं स्वावधिदशाहाभ्यन्तरे श्रुतमपि नाशौचं जनयति । तस्य पूर्वनिमित्तबाधितत्वादित्यपास्तम् ।

एवं सङ्कराज्ञानेन पराशौचोत्तरं कृतस्य पिण्डदानादेर्वैफल्याज्ज्ञाने पुनस्तत्करणापत्तेः, तस्याकालकृतत्वात् । तदशौचकाले सन्ध्याद्यकरणजन्यप्रत्यवायानिवृत्तये सङ्करज्ञाने पुनः प्रायश्चित्तप्रसङ्गाच्च । किंचैवं देशान्तरीयाज्ञातपूर्वनिमित्तशङ्कया बहुवित्तव्यया-

वासनाध्यत्रपोत्सर्गाद्यनुष्ठानं न स्यात् । तस्मात् "अविज्ञाते न दोषः स्यात्" इत्यादि सङ्करेऽपि प्रसरति। अत एव वाचस्पतिमिश्रेण प्रथमजाताद्यसत्वे परनिमित्तं जातमपि येन तदा न ज्ञातं तस्य न सङ्करः। द्वितीयस्य तं प्रति पण्डत्वादित्युक्तम् । मनुवचने दशाहादिशब्दप्रयोजनं तूक्तम् । एवं पूर्वाशौचेन तुल्यकालस्य पराशौचस्य सङ्कोचं विना शुद्धेरसम्भवात् । सङ्कोचवन्न्यूनकालस्य वृद्धिरपि कल्प्यते "समानं लघु चाशौचं पूर्वेण शुद्ध्यति" इति वाक्यात् । पूर्वेण शुद्ध्यतीत्यस्य पूर्वाशौचकालपूर्त्या निवर्त्तते। "तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम्" इति मन्वादिवाक्यादपि तथैव प्रतीतेश्च । अत एव पूर्वापराशौचान्तदिनकृत्यमेकदैवेति संक्षेपः ।

अथाशौचे विधिनिषेधौ ।

जाबालिः ।

सन्ध्यापञ्चमहायज्ञान्नैत्यकं स्मृतिकर्म च ।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया ॥

नैत्यकं=नित्यकृत्यं वैधस्नानजपादि । स्मृतिकर्म=अन्यत् स्मार्तं श्राद्धादि । हापयेत्=त्यजेदित्यर्थः ।

छन्दोगपरिशिष्टम् ।

सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते ।
होमः श्रौते तु कर्त्तव्यः शुष्कान्नेनापि वा फलैः ॥
अकृतं हावयेत् स्मार्ते तदभावे कृताकृतम् ।
हावयेदिति किं तत्स्यादनारभ्य विधानतः ॥
कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम् ।
व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः ॥
सूतके च प्रवासे च अशक्तौ श्राद्धभोजने ।
एवमादिनिमित्तेषु हावयेदिति योजयेत् ॥

सूतक इति=सूतकशब्देन जननवाचिना निरूढलक्षणयात्र जननमरणाशौचं बोध्यते । सन्ध्यादीनामित्यादिपदेन जाबालोक्ताः पञ्चमहायज्ञादयो गृह्यन्ते । होम इति श्रौतेऽग्नौ स्वयमेव होमः कार्यः, स्मार्ते त्वन्यगोत्रजद्वारा हावयेदित्यर्थः । तथा च—

पारस्करः ।

न स्वाध्यायमधीयीरन् । नित्यानि निवर्त्तेरन् वैतानवर्जम् । शालाग्नौ चैके । अन्ये एतानि कुर्युः ।

न स्वाध्यायमिति दशाहमध्येऽध्ययनप्रतिषेधः । नित्यानि=जाबालोक्तानि ।

वैतानवर्जमिति। वैतानं=त्रेताग्निस्तद्भवं वैतानम्=अग्निहोत्रदर्शपौर्णमासाद्यं होमकर्म न तु विक? निवर्त्तते इत्यर्थः। शालाग्नौ चैक इति। शालाग्नौ स्मार्त्ताग्नौ। सायं प्रातर्होमकर्म न निवर्त्तते इति एके मन्यन्ते इत्यर्थः। एके ग्रहणं पूजार्थं न तु विकल्पार्थम्। तत्किमिदमपि स्वयं कार्यमित्यत्राहान्य इति। अन्यगोत्रजा, एतानि होमकर्माणि कुर्युः कारयितव्या इत्यर्थः।

जाबालिः।

जन्महानौ वितानस्य कर्मत्यागो न विद्यते।
शालाग्नौ केवले होमः कार्य एवान्यगोत्रजैः॥

जन्महानौ=जननमरणयोर्वितानस्येति स्वयमेव वितानकर्म कार्यमित्यर्थः। शालाग्नौ स्मार्त्ताग्नौ पुनः केवलो होमोऽन्यगोत्रजैरेव कार्यः। अन्यगोत्रजद्वारैव कारयितव्य इत्यर्थः।

अत्र हारलताकृतः।

वैतानकर्मणि स्वकर्तृकत्वं त्र्यहादुत्तरमेव। त्र्यहादिमध्ये तु अन्यगोत्रजद्वारैव तत्कार्यं, स्मार्त्ताग्निहोमस्तु चतुरहादिमध्येऽन्यगोत्रजद्वारैव कार्यः। चतुरहादूर्ध्वमुत्तरमपि दशाहमध्येऽन्यगोत्रजलाभे तद्द्वारैव कार्यो नो चेत्स्वयमित्याहुरिति पूर्वमेवोक्तम्।

मिताक्षराकृतोऽपि "वैतानौपासनाः कार्याः क्रियाश्च श्रुतिचोदनात्" इति याज्ञवल्क्यवाक्ये वितानोऽग्नित्रयं तद्भवास्त्रेताग्निसाध्या अग्निहोत्रदर्शपौर्णमासाद्याः क्रियाः। प्रतिदिनमुपास्यत इत्युपासनो गृह्याग्निस्तत्र भवा औपासनाः सायम्प्रातर्होमक्रियाः। तत्कार्यत्वे हेतुमाह श्रुतीति। "यावज्जीवमग्निहोत्रं जुहुयात्" इत्यादि श्रुतिभिरग्निहोत्रादीनां "अहरहः स्वाहा कुर्यात् अन्नाभावे केन चिदाकाष्ठात्" इत्यादिभिरौपासनानां चोदना बोध्या। एवं च—

स्मार्त्तकर्मपरित्यागो राहोरन्यत्र सूतके।
श्रौते कर्माणि तत्कालं स्नातः शुद्धिमवाप्नुयात्॥

इति व्याघ्रपादवाक्ये श्रौतपदेनौपासनमपि गृह्यते। तस्यापि याज्ञवल्क्ये श्रुतिचोदितत्वाभिधानात्। श्रौतोपासनानामपि नित्यनैमित्तिकानामेव कर्त्तव्यता, न तु काम्यानां, तत्रापि त्यागात्मके प्रधान एव साक्षात् स्वकर्तृकत्वं त्यागातिरिक्ते त्वनाशौचिद्वारा। तथा च—

पैठीनसिः।

नित्यानि निवर्त्तेरन् वैतानवर्जं शालाग्नौ चैके अन्य एतानि कुर्युः। नित्यानि निवर्त्तेरन्नित्यविशेषेणावश्यकानां नित्यनैमित्तिकानां निवृत्तौ प्रसक्तायां वैतानवर्जमित्यग्नित्रयसाध्यावश्यकानां पर्युदासः। शाला-

ग्नौ चैक इति गृह्याग्नौ नवानामप्यावश्यकानां पाक्षिकः पर्य्युदास उक्तः । अतस्तेषां नाशौचम्, कार्य्येषु त्वस्त्येव । अन्ये एतानीति । एतानीति वैतानस्मार्त्ताग्निकर्माणि । अनशौचिनः कुर्युरित्यर्थः । एवं च ।

सूतके तु समुत्पन्ने स्मार्त्तं कर्म्म कथं भवेत् ।
पिण्डयज्ञं चरुं होममसवर्णेन कारयेत् ॥

इति जातूकर्णवचने स्मार्त्तग्रहणमुपलक्षणमित्याहुः ।

अन्ये तु कल्पसूत्रभाष्यकारादयो निबन्धकाराः सार्वजनीनश्रौतस्मार्त्तविभागवशाद्यथाश्रुतसमस्तवचनानुसारेण

कर्म्म वैतानिकं कार्य्यं स्नानोपस्पर्शनात्स्वयम् ।
जन्महानौ वितानस्य—

इत्यादिप्रागुक्तवचनेभ्यश्च वैतानिके सर्वत्रापि स्वकर्तृकत्वं वदन्ति ।

आचार्य चूडामण्यादयोऽपि वितानकर्म त्र्यहादिमध्येऽपि स्वयं कार्यं स्मार्त्ताग्निहोमस्तु चतुरहोत्तरमेव स्वयं कार्यः। तन्मध्ये त्वन्यगोत्रजद्वारेत्येव छन्दोगपरिशिष्टादिस्वरससिद्धमित्याहुः । वाचस्पतिमिश्रा अप्येवम् ।

शुष्कान्नेनेति । शुष्कान्नं तण्डुलेतरत् सक्तुलाजादि, तण्डुलस्य कृताकृततया स्मार्त्ताग्नौ विनियोगात् । अकृतमिति । स्मार्त्ते त्वावसथ्याग्नौ विनाधदानामप्यनशौचिनं हावयेदित्यर्थः । हावयेदिति किमिति यद्गृह्येऽनास्य विहितं कर्म तत्किं कुत्र स्यादितिपृष्टे उत्तरमाह सूतके चेत्यादि । अशक्तौ=रोगादिना सामर्थ्याभाव इत्यर्थः । कृतादीन् व्याचष्टे कृतमोदनेति । आदिना लाजामोदकलड्डुकापिष्टकप्रभृतीनां ग्रहणम् । तण्डुलादीत्यादिना मुद्गतिलादीनां ग्रहणम् । व्रीह्यादीत्यादिना यवगोधूमशालीनां ग्रहणम् । व्रीहिः शरत्पक्वधान्यं षष्टिकादिः । शालिः=हैमन्तिकम् ।

मनुः—

न वर्द्धयेदघाहानि प्रत्यूहेन्नाग्निषु क्रियाः ।
न च तत्कर्म कुर्वाणः सनाभ्योऽप्यशुचिर्भवेत् ॥

त्र्यहाद्यशौचोपयोगि गुणवान् निष्कर्मा सुखमासिष्य इति प्रतिसन्धाय दशाहाशौचं नाश्रयेत्। सङ्कुचितेष्वशौचदिनेष्वग्निक्रियाहोमकर्माणि न प्रत्यूहेन्न विघातयेत् । यतस्तत् होमकर्म कुर्वाणः सनाभ्यः सपिण्डोऽपि नाशुचिर्भवति किं पुनराहिताग्निर्यजमान इति मिश्रादयः । किं पुनरन्यगोत्रज इति हारलताकारादयः ।

संवर्त्तः ।

होमं तत्र प्रकुर्वीत शुष्कान्नेन फलेन वा ।
पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः ॥ इति ।

न कुर्यादित्यनुवादः, अग्निसाध्यनित्यनैमित्तिककर्मव्यतिरिक्तकर्मस्वनधिकारस्य शौचाभावादेव सिद्धत्वात्। वैश्वदेवस्याग्निसाध्यत्वेऽपि वचनान्निवृत्तिः। "विप्रो दशाहमासीत वैश्वदेवविवर्जित" इति तेनैवोक्तत्वात्। यद्यपि "पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः" इति प्रागुक्तसंवर्तवचनादेव वैश्वदेवस्यापि निषेधः सिद्धः, तथापि येषां तैत्तिरीयादीनां पञ्चयज्ञभिन्नं वैश्वदेवं तदर्थं पृथङ्निषेधः। तथा स्मार्त्तत्वेऽपि पिण्डपितृयज्ञश्रवणकर्माश्वयुज्यादिकश्च नित्यहोमः कार्य एव।

सूतके तु समुत्पन्ने स्मार्त्तं कर्म कथं भवेत्।
पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत्॥

मनुः।

दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते।

इति तत्काम्यहोमविषयम्। सन्ध्यावन्दनं चानग्निसाध्यत्वेऽपि कार्यमेव।

आशौचे समनुप्राप्ते सन्ध्याकर्म समाचरेत्।
मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः।

इति वचनात्। प्राणायामव्यतिरिक्तं सर्वं समानमन्त्रैः कर्त्तव्यमिति प्रतीयते। तथाप्यर्घदाने मन्त्रोद्धारस्तदुत्तरकर्मलोपश्च द्रष्टव्यः। सूतके सावित्र्या चाञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्यायन्नमस्कुर्यादिति पैठीनसिस्मरणात् सावित्र्याः प्राप्तत्वेऽपि पुलस्त्योक्तमानसत्वनिवृत्तयेऽत्र सावित्रीग्रहणम्। स्पष्टमाह—

भरद्वाजः।

सूतके मृतके कुर्यात् प्राणायाममन्त्रकम्।
तथा मार्जनमन्त्रांस्तु मनसोच्चार्य मार्जयेत्॥
गायत्रीं सम्यगुच्चार्य सूर्यायार्घं निवेदयेत्।
मार्जनं तु न वा कुर्यादुपस्थानं न चैव हि॥ इति।

"सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते" इति तु समन्त्रोच्चारसम्पूर्णसन्ध्याभिप्रायम्।

यमः।

उभयत्र दशाहानि कुलस्यान्नं न भुज्यते।
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते॥

अशौचिसाधिततत्स्वामिकमन्नमनशौचिभिरन्यकुलजैर्न भोक्तव्यमित्यर्थः। तत्कुलजानामशौचिनां तु न तद्भोजने दोषः। तथा च—

यमः ।

सूतके तु कुलस्यान्नमदोषं मनुरब्रवीत् ।

इति स्वीयजननादिकं यदा दाता न जानाति भोक्ता जानाति तदा दातुरशौचाभावेऽपि तदन्नभोक्तुः प्रायश्चित्तादिकं वचनबलात् । यथा–

ब्राह्मे ।

अपि दातृग्रहीत्रोश्च सूतके मृतके तथा ।
अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कथंचन ॥
विज्ञाते भोक्तुरेव स्यात्प्रायश्चित्तादिकं क्रमात् ।

मिताक्षरायां स्मृत्यन्तरम् ।

उभाभ्यामपरिज्ञाते सूतकं न तु दोषकृत् ।
विज्ञाते भोक्तुरेव स्यात्प्रायश्चित्तादिकं क्रमात् ॥ इति ।

अत्र अचेतनेषु अशुचिस्वामिकेषु द्रव्येष्वशुचिस्वामिकत्वादेव कर्मानर्हत्वं न तु द्रव्यनिष्ठे शुध्यशुद्धी, तथात्वे एकतरेण भ्रात्रा स्वाशौचे ज्ञाते द्रव्याणामशुद्धत्वात्तदविभक्तभ्रात्रन्तरेण कृतं कर्म तैरेव द्रव्यैरशुद्धद्रव्यकृतत्वाद् व्यर्थं स्यात् । तस्मादशुचेरप्यादीनि शुचीन्येव, किन्त्वशुचिना विनियोजितान्यानधिकारिविनियोजितत्वात् फलानर्जकानि, शुचिना भ्रात्रन्तरेण तु व्यापार्यमाणानि फलजनकान्येवेति मिश्राः । तदयुक्तम् । तथा सति ततः क्रय इव प्रतिग्रहेऽपि दोषो न स्यात्, स्याच्च क्रीतैरिव प्रतिगृहीतैरपि कर्मसिद्धिः, प्रतिग्रहीतुरधिकारित्वेन तद्विनियोजिते फलाभावबीजासम्भवात् । न चानधिकार्यशौचिकर्तृकदानस्य फलाजनकत्वात्ततः प्रतिगृहीते स्वत्वमेव नास्तीति वाच्यम् । शास्त्रीयफलाभावेऽपि स्वत्वस्य लौकिकदानेनापि जन्यत्वेन तत्सम्भवात् । एकतरेण भ्रात्रेत्याद्यपि मन्दम् । साधारणस्वत्वास्पदस्य भ्रात्रन्तरेण दानायोगात् । असाधारणस्वे अशुचित्वायोगात् । इति दिक् ॥

मरीचिः ।

लवणे मधुमांसे च पुष्पमूलफलेषु च ।
शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च ॥
तैलौषध्यजिनं चैव पक्वापक्वे स्वयंग्रहे ।
पण्येषु चैव सर्वेषु नाशौचं मृतसूतके ॥

पक्वं=सक्तुलाजामोदकलड्डुकादि शुष्कमन्नमिति वक्ष्यमाणादिपुराणदर्शनात् । अपक्वं=तण्डुलादि तत्स्वाम्यनुमत्या स्वयं गृह्यमाणं न दोषाय । अत्र पण्येषु चेति पृथगभिधानात्तेष्वप्यदोषः । लवणादिष्वपक्वान्तेषु स्वयं ग्रह एव नाशौचम् । तथा च–

आदिपुराणे ।

लवणं मधु मांसं च पुष्पमूलफलानि च ।
काष्ठं लोष्ठं तृणं पर्णं दधि क्षीरं घृतं तथा ॥
औषधं तैलमजिनं स्वयं पण्यं च मूलजम् ।

स्वयं ग्राह्यमिति लवणादिभिः सर्वैरेव सम्बध्यते । पण्यं च मूलजमशौचिद्रव्यमपि न दोषाय । मूलजमिति द्रव्यप्राप्तिमूल्यं मूलं तस्माज्जातं क्रीतमित्यर्थः । पण्यपक्वान्नादिकमपि ग्राह्यं मूलजमाकरजमपीति मिश्राः । पूरकपिण्डदानमशौचमध्येऽपि कार्यमित्याह ।

शङ्खः ।

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म्म च ।
प्रेतपिण्डक्रियावर्जं सूतके विनिवर्तते ॥

अत्र पितृपदं=मृतपरम् । अन्यथा प्रेतपिण्डक्रियापर्युदासानुपपत्तेः ।

संवर्त्तः ।

दशाहात्तु परं सम्यक् विप्रोऽधीयीत धर्मवित् ।
दानं च विधिना देयमशुभात्तारकं महत् ॥

अशुभात्तारकमिति । अशौचकाले यत्पापमुत्पन्नं तत्क्षयायाऽऽशौचान्ते किञ्चिद्देयमिति दर्शयतीति भट्टाः । इदं दानमशौचनिवर्त्तकं देयं, तारकमित्यनुवादोपलम्भादिति पारिजातः ।

कायिकं वाचिकं यच्च मानसं वापि दुष्कृतम् ।
त्रिकालसन्ध्याचरणात्तत्सर्वं विप्र नाशयेत् ॥

इत्यादिना पापनाशकतया बोधितस्य सन्ध्यावन्दनस्य पञ्चसूनापनुत्यर्थं विहितस्य पञ्चयज्ञस्य चाशौचेऽकरणात् । तत्तत्पापक्षयार्थं किञ्चिद्देयमित्यर्थ इति केचित् ।

अथ महागुरुनिपाताशौचे विशेषः ।

तत्र—

बृहस्पतिः ।

पितर्युपरते पुत्रो मातुः श्राद्धान्निवर्त्तते ।
मातर्यपि च वृत्तायां पितृश्राद्धादृते समाम् ॥

ऋत इति मातुः श्राद्धादित्यत्राप्यन्वेति । अन्यथा पूर्वार्द्धवैयर्थ्यापत्तेरिति स्मार्त्ताः । समां=सम्वत्सरं यावन्निवर्त्तते । अन्यश्राद्धादिति शेषः । अन्यश्राद्धमपि प्राप्तपितृलोकश्राद्धपरम् ।

प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत् ।
नापि दैवं न वा पित्र्यं यावत्पूर्णो न वत्सरः ॥

इतिदेवीपुराणात् । तेन प्रेतश्राद्धान्न निवृत्तिः ।

महागुरुनिपाते तु काम्यं किञ्चिन्न चाचरेत् ।
आर्त्विज्यं ब्रह्मचर्यं च श्राद्धं देवयुतं च तत् ॥

दक्षः ।

अन्यश्राद्धं परान्नं च गन्धमाल्यं च मैथुनम् ।
वर्जयेद्गुरुपाते तु यावत्पूर्णो न वत्सरः ॥

मैथुनं=रागप्राप्तमैथुनम् ।

यमः ।

तीर्थयात्रां विवाहं च स्वाध्यायं चान्यतर्पणम् ।
सम्वत्सरं न कुर्वीत महागुरुनिपातने ॥
महागुरुनिपाते हि काम्यं किञ्चिन्न चाचरेत् ।
विशेषतः शिवपूजां प्रमीतपितृको द्विजः ॥

नापि दैवमित्यत्र दैवपदं सन्ध्यावन्दनादिभिन्नपरम् । यथा-

व्यासः ।

महागुरौ प्रेतीभूते सर्वं कर्म विवर्जयेत् ।
विवाहं प्रेतकृत्यं च सन्ध्योपासनमेव च ॥

तेन नित्यश्राद्धादीनामपि तद्वर्षे नानुष्ठानम् ।

अथाशौचकालास्पृश्यत्वादिनिर्णयः ।

पुत्रस्य कन्याया वा जनने त्रैवर्णिकमातुर्दशाहं शूद्रायास्त्रयोदशाहमस्पृश्यत्वम् ।

ब्राह्मणी क्षत्रिया वैश्या प्रसूता दशभिर्दिनैः ।
गतैः शूद्रा च संस्पृश्या त्रयोदशभिरेव च ॥

इति ब्रह्मपुराणादिति गौडाः ।

मैथिलास्तु । त्रयोदशभिरित्यसच्छूद्राविषयम् । "सूतिका सर्ववर्णानां दशरात्रेण शुद्ध्यती"ति प्रचेतोवचनं तु त्रैवर्णिकसूतिकासच्छूद्राविषयमित्याहुः ।

जननाशौचे पितुः सपत्नमातॄणां च स्नानात्पूर्वमस्पृश्यत्वम्, "स्नानात्तु स्पर्शनं पितुः"इति संवर्त्तोक्तात् । "जाते पुत्रे पितुः स्नानम्"इति संवर्त्तवाक्ये पुत्र इत्युपादानात्, नपुंसकस्य स्त्रियाश्च जनने पितुः स्नानमपि नास्तीति गौडाः । पुत्र इत्यविवक्षितं निमित्तविशेषणत्वात्, तथाचापत्यसामान्योत्पत्तावेव पितुः स्नानादस्पृश्यत्वनिवृत्तिरिति दाक्षिणात्याः । सूतिकायाः पत्युः सपत्नीनां च सूतिकास्पर्शे सूतिकासममस्पृश्यत्वम् ।

यदि पत्न्यां प्रसूतायां द्विजः संपर्कमृच्छति ।

सूतकं तु भवेत्तस्य यदि विप्रः षडङ्गवित् ॥

इति पूर्वोदाहृतपराशरवचनात् । तेन प्रथमदिने सूतिकास्पर्शे दशरात्रमेव, दिनान्तरे तु शेषदिनानि यावदस्पृश्यत्वम् । सपिण्डानां तु सूतिकास्पर्शे स्नानमात्रम् । "संस्पर्शे सूतिकायास्तु स्नानमात्रं विधीयते" इत्याङ्गिरोवाक्यात् । जननाशौचमध्ये बालमरणे मातापित्रोर्दशरात्रादिकमङ्गास्पृश्यत्वमुक्तमशौचम् ।

जातमात्रस्य बालस्य यदि स्यान्मरणं पितुः ।
मातुश्च सूतकं तत्स्यात्पिता त्वस्पृश्य एव च ॥

इति कौर्म्यादिति गौडाः ।

दाक्षिणात्यास्तु-अस्मिन्विषयेऽस्पृश्यत्वं नेच्छन्ति, वचनं व्याख्यातं प्राक् । स्वजात्युक्तपूर्णमरणाशौचे तु ब्राह्मणानां त्र्यहम्, क्षत्रियाणां चतुरहम्, वैश्यानां षडहम् , शूद्राणां दशाहं यावदङ्गास्पृश्यत्वम् ।

चतुर्थे ब्राह्मणानां तु पञ्चमेऽहनि भूभुजाम् ।
सप्तमे वैश्यजातीनां शूद्राणां दशमात्परे ॥

इति ब्राह्मात् । अत्र मरणापेक्षया चतुर्थदिनादौ स्पृश्यता , न तु श्रवणापेक्षया ।

चतुर्थेऽहनि कर्त्तव्यमस्थिसंचयनं बुधैः ।
ततः संचयनादूर्ध्वमङ्गस्पर्शो विधीयते ॥

इति संवर्त्तवचनात् ।

अङ्गिराः ।

चतुर्थेऽहनि कर्त्तव्यः संस्पर्शो ब्राह्मणस्य च ।
पञ्चमेऽहनि राज्ञस्य सप्तमेऽह्नि विशः स्मृतः ॥
दशमेऽहनि शूद्रस्य कार्य्यं संस्पर्शनं बुधैः । इति ।

दशमेऽहनि गत इत्यर्थः । दशमात्पर इति ब्राह्मे दर्शनात् । खण्डाशौचे त्वशौचकालतृतीयभागोत्तरं स्पृश्यत्वम् ।

अशौचकालाद्विज्ञेयं स्पर्शनं तत्त्रिभागतः ।
शूद्रविट्क्षत्रविप्राणां यथाशास्त्रप्रचोदितात् ॥

इतिदेवलीयादिति गौडाः ।

मैथिलास्तु-उक्तदेवलीयैकवाक्यतया सर्वत्र चतुर्थेऽहनीत्यादिकं जात्युक्ताशौचस्य त्रिधा विभक्तस्य प्रथमभागसमाप्तिपरम् । तथाच पूर्णापूर्णशावाशौचमात्र एव तृतीयभागोत्तरं स्पृश्यत्वमाहुः ।

दाक्षिणात्या अप्येवम् । पठन्ति चैते आङ्गिरोवाक्यमित्थम्—

चतुर्थेऽहनि कर्त्तव्यः संस्पर्शो ब्राह्मणस्य च ।

एकादशे स्वन्नशुद्धिर्दानमध्ययनक्रिया ।
पञ्चमेऽहनि कर्त्तव्यः संस्पर्शः क्षत्रियस्य तु ॥
षष्ठे चाहनि वैश्यस्य विज्ञेयं स्पर्शनं बुधैः ।
क्षत्रियस्यान्नशुद्धिः स्याद् द्वादशाहेन नित्यशः ।
अर्धमासेन वैश्यस्य द्वादशाहेन वा पुनः ॥
दशमेऽहनि शूद्रस्य कार्यं संस्पर्शनं बुधैः ।
मासेनैव तु शुद्धिः स्यात् सूतके मृतके तथा ॥ इति ।

अयं तु विशेषो दाक्षिणात्यानां यदि तृतीयभागेऽस्थिसञ्चयनं जातं तदैव तृतीयभागे, यदि तु सप्तमादिदिने सञ्चयनं क्रियते तदा तस्य सञ्चयनस्योपरिष्टादेव स्पृश्यत्वम् । तथा च—

देवलः ।

दशाहादित्रिभागेन कृते सञ्चयने क्रमात् ।
अङ्गस्पर्शनमिच्छन्ति वर्णानां तत्त्वदर्शिनः ॥
त्रिचतुःपञ्चदशभिः स्पृश्या वर्णाः क्रमेण तु ।
भोज्यान्नो दशभिर्विप्रः शेषा द्वित्रिषडुत्तरैः ॥ इति ।

अस्थिसञ्चयने कृते सति दशाहात्तृतीयभागेन गतेन वर्णानां क्रमादङ्गस्पर्शनमिच्छन्ति तदेव विवृणोति त्रिचतुरित्यादि । किञ्चिदधिकैस्त्रिभिर्ब्राह्मणस्तथैव चतुर्भिः क्षत्रिय इत्यादि बोध्यम् । कर्मानधिकारलक्षणमशौचमाह भोज्यान्न इत्यादि । द्व्युत्तरैर्दशभिः क्षत्रियः । त्र्युत्तरैर्द्वादशभिर्वैश्यः, त्रिषडष्टादशानुत्तरैर्द्वादशभिः शूद्र इति त्रिपदावृत्त्या व्याख्येयम् । तथाचाशौचकालाद्यतृतीयभागापगमसञ्चयनानुष्ठानयोर्मिलितयोरेवास्पृश्यत्वापहारकत्वं न त्वेकैकस्य, एवं चतुर्थेऽहनि कर्त्तव्य इत्याद्यङ्गिरोवाक्येऽपि सञ्चयोऽप्युपलक्षितो द्रष्टव्य इति । तदत्र देशभेदव्यवस्थयैवाविरोधो बोध्यः । मिताक्षरायां—

स्मृत्यन्तरम् ।

"सद्यःस्पृश्यो गर्भदासो भक्तदासस्त्र्यहाच्छुचिः ॥ इति ।

अथ सद्यःशौचम् ।

तत्र यद्यपि न सद्यः शब्दार्थः "सद्यः सपदि तत्क्षणे" इत्याभिधानिकः सूक्ष्मः कालः, येषां व्रतिप्रभृतीनां याज्ञवल्क्येन सद्यःशौचमुक्तम् । तेषामेव पराशरेण "राज्ञां च सूतकं नास्ति व्रतिनां न च सत्रिणाम्" इत्यनेनाशौचाभावस्य दर्शितत्वात् । नाप्यशौचाभावः । "सद्यःशौचं तथैकाह" इत्यादिना दक्षेण सद्यःशौचेन समं दशविधाशौचस्योक्तत्वात् । अशौचाभावपरत्वे दशविधत्वव्याघातात् । तथापि यत्र पातित्यादिनि·

मित्तं तत्तत्कर्मनिमित्तं वा सद्यःशौचाभिधानं तत्राशौचाभाव एव स-द्यःशब्दार्थः। यत्र च बालादिविषये सद्योऽभिधानं तत्र तत्क्षणमात्रं त-दर्थः। अत एव तत्र रन्धनस्थालीत्यागः स्नानं च। यत्र तु युद्धादिहते पिण्डादिदानमस्ति तत्राहोरात्रार्द्धं "सद्यः पदार्थः। समानेऽहनि सद्य" इति व्युत्पत्तेः।

द्विसन्ध्ये सद्य एव स्यात् त्रिसन्ध्यैकाहिकः स्मृतः।
द्वावह्नावेकरात्रिश्च पक्षिणीत्यभिधीयते।

इति गोभिलभाष्ये भट्टनारायणलिखितवचनाच्च। तच्चार्द्धं दिनमात्रं रात्रिमात्रं च। एतदेव क्वचित्सज्योतिःपदेनोच्यते यथा "प्रेते राजनि सज्योतिः" इति बोध्यम्। तत्र—

याज्ञवल्क्यः।

ऋत्विजां दीक्षितानां च (१)यज्ञकर्मणि तिष्ठताम्।
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा॥
दाने विवाहे यज्ञे च संग्रामे देशविप्लवे।
अपाद्यपि च कष्टायां सद्यःशौचं विधीयते॥

ज्योतिष्टोमादियज्ञेषु ऋत्विजां मधुपर्कदानोत्तरकाले यदि ऋत्विक्सपिण्डादिजननमरणे भवतस्तदा तेषां ऋत्विजां यज्ञानुष्ठानार्थमशौचं नास्ति। अत एव स्मृतिः।

गृहीतमधुपर्कस्य यजमानात्तु ऋत्विजः।
पश्चादशौचे पतिते भवतीति विनिश्चयः॥ इति।

तथा यजमानानां सोमयागे दीक्षणीयेष्टौ कृतायां दीक्षितत्वं भवति तेन दीक्षणीयेत्युत्तरं यजमानस्य यत्कर्त्तव्यं तत्र नाशौचम्। यद्यपि "वैतानोपासनाः कार्या" इत्येतावतैव दीक्षितकर्मण्यप्यधिकारसिद्धे दीक्षितग्रहणमत्र व्यर्थम्, तथापि त्यागातिरिक्तेषु याजमानपदार्थेष्वपि कर्त्तृत्वसिद्ध्यर्थं पुनर्वचनमिति मिताक्षराकारः। एवं सत्रिणां नित्यप्रवृत्तानामन्नदाने, व्रतिनां चान्द्रायणादिव्रतानुष्ठानाय प्रवृत्तानां व्रतानुष्ठाने, ब्रह्मचर्याश्रमस्थितानां तदाश्रमधर्मानुष्ठाने, नित्यं दास्यामीति कृतसङ्कल्पानां गोहिरण्यादिदाने, ब्रह्मविदामात्मसाक्षात्कारिणां क्वचिदप्यशौचं नास्ति। दाने प्रारब्धे, विवाहे च प्रक्रान्ते यज्ञसमाप्तौ ब्राह्मणभोजनेऽशौचं नास्ति संग्रामे वर्त्तमाने युद्ध्यमानानां सपिण्डमरणादावशौचं नास्ति। देशविप्लवे=राष्ट्रभङ्गे। तथा काष्ठायां प्राणसङ्क्षयरूपायां दुर्भिक्षाद्यापद्यन्नप्र-

(१) यज्ञियं कर्म कुर्वतामिति मुद्रितयाज्ञवल्क्ये पाठः।

तिग्रहादौ सूतकं नास्तीत्यर्थः । अत्र यद्यपि सद्यःशौचपदस्य तत्तत्कर्मण्यशौचाभावपरत्वादृत्विग्दीक्षितादीनां स्नानमपि नास्तीति प्रतीयते । तथा च—

जाबालिः ।

ब्रह्मचारिणि भूपे च यतौ शिल्पिनि दीक्षिते ।
यज्ञे विवाहे सत्रे च सूतकं न कदाचन ॥

दाक्षिणात्यधृतं—

स्मृत्यन्तरम् ।

नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् ।
नाशौचं सूतके प्रोक्तं शावे चापि तथैव च ॥ इति ॥

तथापि श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयादिति वचनादृत्विग्दीक्षितयोर्भवत्येव स्नानं ब्रह्मचारिणस्तदनुष्ठानं शवानुगमनादिकृतमेव, यतेर्नास्त्येव स्नानम् । आचारोऽपि तथैवेति बोध्यम् ।

आदिपुराणे—

गृहीतमधुपर्कस्य यजमानाच्च ऋत्विजः ।
पश्चादशौचे पतिते न भवेदिति निश्चयः ॥
तद्वद्गृहीतदीक्षस्य त्रैविद्यस्य महामखे ।
स्नानं त्ववभृथे यावत्तावत्तस्य न विद्यते ॥
निवृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने ।
गृहीतनियमस्यापि न स्यादन्यस्य कस्यचित् ॥
निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि ।
निमन्त्रणाद्धि विप्रस्य स्वाध्यायाद्विरतस्य च ॥
देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित् ॥
नैष्ठिकस्याथवान्यस्य भिक्षार्थं प्रस्थितस्य च ।
वानप्रस्थस्य चान्यत्र साधिकारस्य सर्वदा ॥
प्रतिग्रहाधिकाराच्च निवृत्तस्य न विद्यते ।
गोमङ्गलादौ वैश्यानां रक्षाकालात्ययादपि ॥
अपि दातृग्रहीत्रोश्च सूतके मृतके तथा ।
अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कदाचन ।
विज्ञाते भोक्तुरेव स्यात्प्रायश्चित्तादिकं क्रमात् ॥
भोजनार्द्धे तु सम्भुक्ते विप्रैर्दातुर्विपद्यते ।
यदा कश्चित्तदोच्छिष्टशेषं त्यक्त्वा समाहिताः ॥
आचम्य परकीयेन जलेन शुचयो द्विजाः ।

न भवेदित्यादिनाऽशौचमिति वक्ष्यमाणमन्वेति। गृहीतमधुपर्कस्येत्यनेन मधुपर्कग्रहणात् पूर्वं वरणे कृतेऽप्यशौचमस्तीति दर्शयति। महामखे-सोमयागे दीक्षणीयेष्ट्युत्तरकालमवभृथस्नानपर्यन्तमधीतवेदत्रयस्य यजमानस्याशौचाभावः। प्राजापत्यादिकृच्छ्रे समाप्ते नैमित्तिकेषु काम्येषु च होमयागदानजपेषु समाप्तेषु तत्सम्पूर्णार्थमवश्यं ब्राह्मणा भोजनीया इति गृहीतनियमो यस्तस्याशौचेऽन्यकुलजातानामपि भुञ्जानानां न दोषः। तथा श्राद्धार्थं ब्राह्मणवरणक्रिययैव श्राद्धकर्मारब्धं भवति। एवं च पितृभिरधिष्ठितेषु ब्राह्मणेष्वध्ययनविरहितेषु सत्सु क्वचिदपि दातुर्भोक्तुर्वा जननाशौचमिति हारलता। वस्तुतो निमन्त्रितेषु विप्रेषु सत्सु भोक्तॄणां विप्राणां नाशौचं, प्रारब्धे श्राद्धकर्मणि सति श्राद्धकर्तुर्नाशौचम्। अत्र प्रारम्भः पाकक्रिया। तथा च-

लघुविष्णुः।

व्रतयज्ञविवाहेषु श्राद्धे होमार्चने जपे।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम्॥

प्रारम्भश्च तेनैवोक्तः।

प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतजापयोः।
नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया॥ इति।

नैष्ठिकस्येति। नैष्ठिकस्य ब्रह्मचारिणोऽन्यस्य चतुर्थाश्रमिणोऽशौचिभिक्षाग्रहणे न दोषः। उपकुर्वाणकब्रह्मचारिणो गृहस्थस्य चाशौचिभिक्षाग्रहणे दोषोऽस्त्येव। तथा वानप्रस्थस्य वन्यफलमूलादिभिर्निर्वाहाभावे ग्रामादष्टग्रासभिक्षाग्रहणं विहितम्, तेन वनादन्यत्र ग्रामे भिक्षाधिकारिणो वानप्रस्थस्याशौचिभिक्षाग्रहणे दोषोऽस्त्येव। तथा सर्वथा प्रतिग्रहनिवृत्तस्य भिक्षामात्रवृत्तेरशौच्यन्नग्रहणे न दोषः। तथा वैश्यानां गोऽजाविस्वस्त्ययनक्रियायामशौचाभावः। अन्यथा त्वशौचसमाप्तिप्रतीक्षाया उपसर्गव्याध्यादिभिरत्यन्तपीडने रक्षाकालोऽतिक्रम्येत। तथा यदा दातुरशौचं भोक्तुर्वा दातृभोक्तृभ्यामुभाभ्यामपि न ज्ञायते तदा श्राद्धभोजने स्वस्त्ययनादिभोजने चोभयोरपि दोषाभावः। यदा त्वशौचं स्वीयं दाता न जानाति, भोक्ता तु जानाति तदा लोभाद् भुञ्जानस्य भोक्तुः प्रायश्चित्तमशौचं च दातृतुल्यमशौचोत्तरकालं प्रायश्चित्तमित्यर्थः। भोजनार्द्धे त्विति विप्रभोजनार्द्धे सम्भुक्ते सति दातुः कश्चिद्यदि विपद्यते म्रियते तदा भुक्तशेषं त्यक्त्वा विप्राः परकीयजलेनाचम्य शुचयो भवन्तीत्यर्थः। इदं श्राद्धातिरिक्तभोजनविषयम्। तद्वाशौचे दोषाभावस्य प्रागुक्तत्वात्।

पराशरः ।

कारवः शिल्पिनो वैद्या दासीदासास्तथैव च ।
राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तिताः ॥

कारवः=सूपकारादयः । शिल्पिनः=चित्रकाररजकादयः । वैद्याः=चिकित्साकाः चिकित्सायाम् । दासीदासाः=कर्मकराः स्वकर्माणि । राजानो भूपतयो राजकार्ये, राजभृत्याः=राजसेवकाः राजाऽऽज्ञापितार्थकरणे । सद्यःशौचाः सद्यस्तत्क्षण एव शौचं शुद्धिर्येषामेवंभूता अशौचरहिता एवेत्यर्थः । अत्र सद्यःशौचशब्देनाभाव एवोच्यते इति रत्नाकरादयः । अयं च शौचाभावस्तत्तदसाधारणकर्मण्यस्पृश्यत्वप्रतिषेधरूपो बोध्यः, न तु सर्वेषु दानश्राद्धादिधर्मकृत्येष्वशौचाभावः । तथा च—

विष्णुः ।

अशौचं न राज्ञां राजकर्माणि, न व्रतिनां व्रते, न सत्रिणां सत्रे न कारूणां स्वकर्माणि, न राज्ञामाज्ञाकारिणां, न देवप्रतिष्ठाविवाहयोः पूर्वसम्भृतयोः ।

व्रतिनामारब्धव्रतानाम् । सत्रिणामन्नदाने कृतसङ्कल्पानां पूर्वं सम्भृतयोः प्रारब्धयोः ।

आदिपुराणे ।

सूपकारेण यत्कर्म करणीयं नरेष्विह ।
तदन्यो नैव शक्नोति तस्माच्छुद्धः स सूपकृत् ॥
शिल्पिनश्चित्रकाराद्याः कर्म यत्साधयन्त्युत ।
तत्कर्म नान्यो जानाति तस्माच्छुद्धः स्वकर्मणि ॥
दास्यो दासाश्च यत्कर्म कुर्वन्त्यपि च लीलया ।
तदन्यो न क्षमः कर्तुं तेन ते शुचयः स्मृताः ॥
राजा करोति यत्कर्म स्वप्नेऽप्यन्यस्य तत्कथम् ।
एवं सति नृपः शुद्धः संस्पृश्यो मृतसूतके ॥
यत्कर्म राजभृत्यानां हस्त्यश्वगमनादिकम् ।
तन्नास्ति तस्मादन्यस्य तेन ते शुचयः स्मृताः ॥

मनुः—

राज्ञो माहात्मिके स्थाने सद्यःशौचं विधीयते । न राज्यभ्रष्टस्य ।

यतो न्यायान्यायनिरूपणेन प्रजारक्षार्थं धर्मासनेऽवस्थानमशौचाभावकारणम् । एषां तत्तत्कर्मण्येवाशौचप्रतिषेधात् सन्ध्यावन्दनाद्यारम्भकादृष्टार्थकर्माणि स्वजात्युक्तमेवाशौचमिति मन्तव्यम् ।

शुद्धिविवेके ।

विवाहयज्ञयोर्मध्ये सूतके सति चान्तरा ।
शेषमन्नं परैर्देयं दातॄन् भोक्तॄंश्च न स्पृशेत् ॥

विवाहे यज्ञे च प्रक्रान्ते मध्येऽशौचे सति शेषमन्नं परद्वारा दापयेत् । एवं सति दातॄन् भोक्तॄन् न स्पृशेत् , दोष इति शेषः ।

यमः ।

दैवे भये समुत्पन्ने प्रधानाङ्गे विनाशिते ।
पूर्वसङ्कल्पिते चार्थे तस्मिन्नाशौचमिष्यते ॥

दैवेभये=दुर्भिक्षोपसर्गमरणादौ जाते प्रधानाङ्गे=नृपतौ परचक्रेण नाशिते राष्ट्रोपप्लवे सति जात्युक्तमशौचम् । एवं पूर्वं सङ्कल्पितं यत्किञ्चित्पुष्करिण्यादिधर्मकार्यमाशौचात्पूर्वमारब्धं तत्र नाशौचमित्यर्थः ।

स्मृत्यन्तरम् ।

सद्यःस्पृश्यो गर्भदासो भक्तदासस्त्र्यहाच्छुचिः ।

स्वदास्यां जातो गर्भदासः स्वसपिण्डमरणनिमित्ताशौचे सति अनन्यसाध्यतत्तत्कर्माणि सद्यः स्नात्वैवास्पृश्यत्वनिवृत्तिमान् भवति । एवं गर्भदास्या अपि बोध्यम् । तथा च ।

प्रागुक्तादिपुराणे ।

दास्यो दासाश्च यत्कर्म कुर्वन्त्यपि च लीलया ।
तदन्यो न क्षमः कर्तुं तस्मात्ते शुचयः सदा ॥ इति ।

बृहस्पतिः ।

दासान्तेवासिभृतकाः शिष्याश्चैकत्र वासिनः ।
स्वामितुल्येन शौचेन शुद्ध्यन्ति मृतसूतके ॥

दासा=गर्भदासभक्तदासभिन्नाः ।

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
अनाकालभृतस्तद्वदाहितः स्वामिना च यः ॥
मोक्षितो महतश्चर्णाद्युद्धप्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥
भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥

इति नारदोक्ता ग्राह्याः । अन्तेवासी च तदुक्तो ग्राह्यः । यथा—

स्वशिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया ।
आचार्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितम् ॥
आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम् ।

न चान्यत्कारयेत् कर्म्म पुत्रवच्चैनमाचरेत् ॥
शिक्षयन्तमसन्तुष्टमाचार्य्यं यः परित्यजेत् ।
बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हति ॥ इति ।
शिक्षितोऽपि कृतं कालमन्तेवासी निवर्त्तते ॥ इति ।
उत्तमस्त्वायुधायोक्तो मध्यमस्तु कृषीबलः ।
अधमो भारवाही स्यादित्येवं त्रिविधो भृतः ॥

इति भृतकोऽपि तेनोक्तः । शिष्यो विद्यार्थी चात्रान्तेवासितु-ल्याचरणो ग्राह्यः, तत्साहचर्यात् ।

दास्यास्तु सूतिकाया अस्पृश्यत्वमपि मासपर्यन्तमेव । तदाह—अङ्गिराः ।

दासी दासश्च सर्वो वै यस्य वर्णस्य यो भवेत् ।
तद्वर्णस्य भवेच्छौचं दास्या मासं तु सूतकम् ॥

अत्र बृहस्पत्याङ्गिरोवचनाभ्यामपि सत्येव शूद्रत्वादिनिमित्ते स्व-सपिण्डमरणादिनिमित्तमासाद्यशौचे दासत्वादिनिमित्ता स्वामिकार्ये-स्पृश्यतैव प्रतिपाद्यते ।

मूलकर्मकराः शूद्रा दासीदासास्तथैव च ।
स्नाने शरीरसंस्कारे गृहकर्मण्यदूषिताः ॥

इतिवचनेन कार्यविशेषे शुद्धौ प्रतिपादितायामपेक्षिततत्सम्पादक-कालविशेषसमर्पणे लाघवादिति दाक्षिणात्याः ।

वाचस्पतिमिश्रास्तु—दासादासीस्वाना स्वामिसपिण्डमरणादिनिमित्त-मेवाशौचं स्वामिसमकालमत्र प्रतिपाद्यत इत्याहुः । तन्मन्दम् । पूर्वोक्त-युक्त्या तत्तत्कर्मणि स्पृश्यत्वलक्षणशुद्धिपरत्वेनैव शौचशुद्धिपदयोरुप-पत्तौ कर्माधिकारस्वरूपतत्परत्वाभावात् । तत्परत्वेऽपि अशौचानुवादेन कालविशेषमात्रविधानेन लाघवात् । प्राप्ते स्वसपिण्डमरणनिमित्ताशौच एवायं कालसङ्कोचः । न हि स्वामिसपिण्डमरणे दासादीनामशौचप्रा-पकमस्ति । शिष्यान्तेवासिनोर्गुरुमरणे त्रिरात्रादिवत् स्वामिमरणे दासादेः स्वामितुल्यमन्यमाशौचं तद्बोधकवचनान्तरसत्त्वेन न शक्यते । न चोक्तवचनयोरेव तद्बोधकत्वम्, एकत्र गुरुमरणनिमित्तत्रिरात्राद्यशौच-भागिशिष्यान्तेवासिसमभिव्याहारात्, अन्यत्र दास्या मासस्तु सूतकमित्ये-तत्समभिव्याहारात् । न च पत्नीनां दासानामानुलोम्येन स्वामितुल्यमा-शौचं, मृते स्वामिन्यात्मीयमिति विष्णुवचने पत्नीनां स्वामिसपिण्डमरणे स्वामितुल्याशौचप्रतिपादनाद् दासानामपि तत्रैव तत्प्रतिपादनमिति वा-च्यम् । पत्नीनामपि स्वसपिण्डमरण एव स्वामितुल्यास्पृश्यत्वप्रतिपा-दनात् । तस्मात्स्वामिमरणे तत्सपिण्डमरणे वा स्वामितुल्यमशौचमिति नैषां वचनानामर्थः, किं तु प्रागुक्त एवेति दाक्षिणात्याः । तच्चिन्त्यम् ।

बृहस्पत्यादिवचनस्य स्वामिनो ब्राह्मणादेर्यावन्त्याशौचदिनानि ताव-द्दिनविगमे स्पृश्या भवन्तीत्यर्थे अशौचदिनानीत्यत्राशौचशब्दार्थो य-द्यस्पृश्यत्वं, तदा भक्तदासातिरिक्तत्वविवक्षा व्यर्था, कर्मानधिकारलक्षणं चेदन्तेवास्यादीनां विरोधः। तस्माद्बृहस्पतिवचनेन दासादीनां स्वामि-गृहवासतद्गृहभोजनादिकं कुर्वतां तत्सपिण्डमरणे तत्तुल्याशौचप्रति-पादनं युक्तम्। अन्तेवासिनः स्वगृहे दत्तभोजनत्वोक्तेस्तत्सहचारितदा-सादीनामपि तत्तत्प्राप्तेः। अङ्गिरोवाक्ये च "दास्या मासस्तु सूतक"मि-त्यत्र सूतकपदार्थो नास्पृश्यत्वं "सूतिका सर्ववर्णानां दशरात्रेण शुध्यति" इत्यादिना दशरात्रेणैव सर्ववर्णसूतिकानां स्पृश्यत्वात्, किन्तु कर्मान-धिकारलक्षणमशौचं शुद्धिपदार्थोऽप्येतदभाव एवेति न स्पृश्यत्वं त-दर्थः। भर्तृजननादौ दासादेरशौचं स्पष्टमाह—

देवलः।

जनने मरणे नित्यमाशुच्यमनुधावति।
सपिण्डान्मातृबन्धुंश्च यत्र क्वचन गच्छतः॥
योनिज्ञातिद्विजेष्वेवमाशुच्यं सहवासिषु।
भर्तृगुर्वोरशौचं स्यान्मृत्युप्रसवकारणम्॥
कारणाद्गच्छति प्रेष्यं तदाशुच्यं न तान् व्रजेत्।

अत्र मातृबन्धुयोनिद्विजसहवासिगुरुषु मरणाशौचस्य सम्बन्धः, योग्यत्वात्। मृत्युप्रसवकारणमशौचं प्रेष्यं गच्छतीति सम्बन्धः। यत्र क्वचनेति देशान्तरमृतानामप्यशौचं दर्शयति। योनिज्ञातिद्विजेष्वित्यत्र द्विजशब्दः प्रत्येकमभिसम्बध्यते। योनिद्विजा योनिसम्बन्धाः पैतृष्वस्रेय-मातृष्वस्रेयभागिनेयादयः। ज्ञातिद्विजाः समानोदकाः सगोत्राश्च। भर्तृगुर्वोरिति भर्तृसम्बन्ध्यशौचं प्रेष्याणां गुरुसम्बन्धि शिष्याणाम्। भर्तृसम्बन्ध्यशौ-चे विशेषमाह। कारणादिति। कारणादेकत्र वासादितः। तदाशुच्यमिति प्रेष्य-सम्बन्ध्यशौचं भर्तृगामि न भवतीत्यर्थः। शिष्यादेस्त्रिरात्राद्यशौचं चैकत्र वासादौ "गुरोः प्रेतस्य शिष्यस्त्वि"त्यादिवाक्यात्।

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकम-लश्रीमन्महाराजाधिराजप्रतापरुद्रतनूजश्रीमन्महाराजमधुकरसाह-सूनुश्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृदयपुण्ड-रीकविकासदिनकरश्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डिता-त्मजश्रीपरशुराममिश्रसूनुसकलविद्यापारावारपारीणधु-रीणजगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातुश्री-मन्मित्रमिश्रकृते श्रीवीरमित्रोदयाभिधनिबन्धे
शुद्धिप्रकाशे अशौचनिर्णयः।

अथ भूमिशुद्धिः ।

देवलः ।

पञ्चधा वा चतुर्धा वा भूरमेध्या विशुध्यति ।
दुष्टा द्विधा त्रिधा वापि शोध्यते मलिनैकधा ॥
दहनं खननं भूमेरुपलेपनवापनम् ।
पर्जन्यवर्षणञ्चेति शौचं पञ्चविधं स्मृतम् ॥

अस्यार्थः। अपवित्रा भूमिस्तावत्त्रिधा, अमेध्या, दुष्टा, मलिना च। स-त्रामेध्या दहनादिभिः पञ्चभिरुपघातबहुत्वे, चतुर्भिस्तदल्पत्वे शुध्यति । एवममेऽपि। दुष्टा दहनादिभिस्त्रिभिः, खननलेपनाभ्यां द्वाभ्यां वा। मलिना एकधोपलेपनेन शुध्यति । वापनं मृदन्तरेण पूरणम् । तत्रामेध्यामाह ।

चाण्डालैरुषितं यत्र यत्र विन्यस्यते शवः ।
विण्मूत्रोपहतं यच्च कुणपो यत्र दृश्यते ॥
एवं कश्मलभूयिष्ठा भूरमेध्येति लक्ष्यते ।

दुष्टामाह ।

कृमिकीटपदक्षेपैर्दूषिता यत्र मेदिनी ।
द्रंसापकर्षणैः क्षिप्तैर्वान्तैर्वा दुष्टतां व्रजेत् ।

द्रंसं=घनीभूतं श्लेष्मादिमलम् ।

मलिनामाह ।

नखदन्ततनूजत्वक्तुषपांशुरजोमलैः ।
भस्मपङ्कतृणैर्वापि प्रच्छन्ना मलिना भवेत् ॥

तनूजं=लोम ।

याज्ञवल्क्यः ।

भूशुद्धिर्मार्जनाद्दाहात्कालात् गोक्रमणादपि ।
सेकादुल्लेखनाल्लेपाद् गृहं मार्जनलेपनात् ।

सम्मार्जन्या तृणपांश्वादिनिरसनं मार्जनम् । कालो यावता कालेनापावित्र्यहेतुगन्धलेपक्षयो भवति तावत् । सेको=जलेन प्रक्षालनम् । उल्लेखनम्=खनित्वा किञ्चिन्मृदपनयनम् । गृहस्य पृथगुपादानं संमार्जनलेपनयोः प्रतिदिनप्राप्त्यर्थम्। अत्र यत्र चिरकालं चाण्डालादेः स्थितिः, नरादिदाहो वा तत्र मार्जनादेः समुच्चयेनान्यत्र विकल्पेनाशुचिसंपर्कनिर्हरणसामर्थ्यापेक्षयोपादानं बोध्यम् ।

मनुः ।

संमार्जनेनाञ्जनेन सेकनोल्लेखनेन च ।
गवां च परिवासेन भूमिः शुध्यति पञ्चभिः ।

अञ्जनं=गोमयोपलेपनम् । अत्र सेकगोपरिवासयोर्निर्लेपविषयत्वम् । अन्येषाममेध्यालिप्तविषयत्वम् । तथा—

निर्णयामृते ।

गोचर्ममात्रमब्बिन्दुर्गोः शोधयति पातितः ।
समूढमसमूढं वा यत्र लेपो न दृश्यते ॥

समूढं=कृतसम्मार्जनम् । असमूढम्=अकृतसम्मार्जनम् । गोः पृथिव्याः प्रदेशं पतितोऽब्बिन्दुः=उदकबिन्दुः शोधयतीत्येकोऽर्थः । यद्वा गोरब्बिन्दुः गोपुच्छस्पृष्टोदकबिन्दुः गोपुच्छस्पृष्टोदकसेके कृते एकबिन्दुना गोचर्ममात्रं भूभागः शुद्धो भवतीत्यर्थः । यत्रैकादश गाव उपविशन्ति तावान् भूभागो गोचर्म ।

यमः ।

खननात्पूरणाद्दाहाल्लेपनादभिमर्षणात् ।
गोभिराक्रमणात् कालाद् भूमिः शुध्यति सप्तभिः ॥

बौधायनः ।

घनायाः भूमेरुपघातउपलेपनम् । शुषिरायाः कर्षणम् । क्लिन्नाया अमेध्यमाहृत्य प्रच्छादनम् । घना निविडा, असच्छिद्रेति यावत् । उपघाते इति षष्ठ्यन्तमात्रेण सम्बध्यते । शुषिरा सच्छिद्रा । क्लिन्ना अमेध्याऽऽर्द्रा अमेध्यमाहृत्य आकृष्य प्रच्छादनं शुद्धमृदन्तरेण पूरणम् ।

बृहन्मनुः ।

श्वशूद्रपतिताश्चान्त्या मृताश्चेद् द्विजमन्दिरे ।
शौचं तत्र प्रवक्ष्यामि मनुना भाषितं यथा ॥
दशरात्राच्छुनि मृते मासाच्छूद्रे भवेच्छुचिः ।
द्वाभ्यां तु पतिते गेहमृते मासचतुष्टयात् ॥
अत्यन्त्ये वर्जयेद्गेहमित्येवं मनुरब्रवीत् ।

द्वाभ्यां मासाभ्याम् । अन्त्यो=म्लेच्छः । अत्यन्त्यः श्वपाक इति वाचस्पतिमिश्राः ।

यमः ।

द्विजस्य मरणे वेश्म विशुध्यति दिनत्रयात् ।
दिनैकेन बहिर्भूमिरग्निप्रोक्षणलेखनैः ॥

यथोक्तकालोत्तरकर्त्तव्यमाह—

संवर्त्तः ।

गृहशुद्धिं प्रवक्ष्यामि अन्तस्थशवदूषिते ।
प्रोत्सृज्य मृण्मयं भाण्डं सिद्धमन्नं तथैव च ॥

गृहादपास्य तत्सर्वं गोमयेनोपलेपयेत् ।
गोमयेनोपलिप्याथ छागेनाऽऽघ्रापयेद् बुधः ॥
ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवारिभिः ।
सर्वमभ्युक्षयेद्वेश्म ततः शुध्यत्यसंशयम् ॥

अत्र मन्त्रोऽनादेशाद्गायत्री ।

यमः ।

ब्राह्मणावसथे भूमिर्देवागारे तथैव च ।
मेध्या चैव सदा मन्येत् गवां गोष्ठे तथैव च ॥

एतेषु या भूमिस्तां मेध्यां मन्येदित्यर्थः । अनुपहतविषयं चैतत् ।

ब्रह्मपुराणे ।

देवानां प्रतिमाश्चापि वेश्मान्यायतनानि च ।
बाह्यमाभ्यन्तरं शस्तं भूमेरुद्धृत्य शास्त्रवत् ।
ततस्तोयेन गोभिश्च दाहोल्लेखनमार्जनैः ॥
शोधनीयाश्च मन्त्रैश्च सरलैः पञ्चभिश्च भूः ।
उद्धृत्य मृत्तिकाप्लाव्या पवित्रेण जलेन च ॥
ग्रामाद्दण्डशतं त्यक्त्वा नगराच्च चतुर्गुणम् ।
भूमिः सर्वत्र शुद्धा स्यात् यत्र लेपो न दृश्यते ॥

मरीचिः ।

गृहेष्वजातिसंवेशे शुद्धिः स्यादुपलेपनात् ।
संवासो यदि जायेत दाहतापैर्विनिर्दिशेत् ॥

अजातिः=चाण्डालः । उत्तमजातिनार्यामधमजातिपुरुषाज्जातो जातिहीन इत्यन्ये । संवेशः=प्रवेशः । संवासोऽवस्थानम् ।

याज्ञवल्क्यः ।

रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ।
मारुतार्केण शुध्यन्ति पक्वेष्टकचितानि च ॥

अन्त्यः=चाण्डालः ।

वापीकूपतडागेषु कूपोद्यानवनेषु च ।
त्रिःसप्तमार्जनं कृत्वा परिशुद्धिर्विधीयते ॥

बौधायनः ।

अनेकोद्घाटे दारुशिले भूमिसमे इष्टकाश्च सङ्कीर्णीभूताः । परस्परसम्बद्धा इत्यर्थः ।

पराशरः ।

रथ्याकर्दमतोयानि नावः पन्थास्तृणानि च ।
स्पर्शनान्न प्रदुष्यन्ति पक्वेष्टकचितानि च ॥

अथोदकशुद्धिः ।

तत्र मनुः ।

आपः शुद्धा भूमिगता (१)वैतृष्ण्यं यासु गोर्भवेत् ।
अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः ॥

गोस्तृप्तियोग्या आपः शुद्धभूगता गन्धादिमत्यो अमेध्याव्याप्ताः शुद्धा भवन्ति, भूमिगता इति शुद्धभूसम्बन्धप्राप्तये न त्वन्तरिक्षगानां निवृत्तये इति कुल्लूकभट्टः ।

विष्णुः ।

भूमिष्ठमुदकं शुद्धं वितृष्णा यत्र गौर्भवेत् ।
अव्याप्तं चेदमेध्येन तद्वदेव शिलागतम् ॥

शङ्खः ।

भूमिष्ठमुदकं शुद्धं शुचि तोयं शिलागतम् ।
गन्धवर्णरसैर्दुष्टैर्वर्जितं यदि तद्भवेत् ॥

ब्रह्मपुराणे ।

भूमिष्ठमुदकं शुद्धं गन्धवर्णरसान्वितम् ।
केशास्थिशर्कराविण्मूत्रसंयोगैरुज्झितं यदि ॥

याज्ञवल्क्यः ।

शुचिगोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् ।

प्रकृतिस्थमविकृतरूपरसम् । महीगतं=विशुद्धभूगतम् ।

देवलः ।

अविगन्धा रसोपेता निर्मलाः पृथिवीं गताः ।
अक्षीणाश्चैव गोः पानादापः शुद्धतराः स्मृताः ॥

अविगन्धा=विगर्हितगन्धरहिताः ।

उद्धृता वा प्रशस्यन्ते शुद्धैः पात्रैर्यथाविधि ॥
एकरात्रोषितास्तास्तु त्यजेदापः समुद्धृताः ।

अत्र रात्रिगतमेकत्वमविवक्षितम् , पर्युषितत्वमात्रं विवक्षितम् । एवमग्रेऽपि ।

तथा ।

अक्षुभ्यानामपां नास्ति प्रस्रुतानां च दूषणम् ।
स्तोकानामुद्धृतानां च कश्मलैर्दूषणं भवेत् ॥

प्रस्रुतानां=पर्वतनिर्झररूपाणाम् । तथा ।

अक्षोभ्याणि तडागानि नदीवाप्यः सरांसि च ।

---

(१) वितृष्णा यत्र गौर्भवेत् । इति पाठान्तरम् ।

कश्मलाशुचियुक्तानि तीर्थतः परिवर्जयेत् ॥

कश्मलं=शवादि । अशुचिः=विण्मूत्रादि । तीर्थं=जलावतरणमार्गः । सप्तम्यन्तात्तसिः । कश्मलाशुचियुक्तावतारदेश इत्यर्थः ।

येषामभक्ष्यं मांसं च तच्छरीरैर्युतं च यत् ।
वापीकूपतडागेषु जलं सर्वं च दुष्यति ॥

शरीरैः=मृतशरीरैः । उत्तरवचने कुणपग्रहणात् ।

यथा ।

सकर्दमं सकुणपं तेभ्यस्तोयमपास्य तत् ।
प्रक्षिपेत पञ्चगव्यं च समन्त्रं सर्वशुद्धिकृत् ॥
अपास्य कुणपं तेभ्यो बहुतोयेभ्य एव वा ।
शतं षष्ट्यथवा त्रिंशत्तोयकुम्भान् समुद्धरेत् ॥
पञ्चगव्यं ततस्तेषु प्रक्षिपेन्मन्त्रपूर्वकम् ।

वापी=ससोपाना । निःसोपानः कूपः । तडागः=पद्माकरः । शतादि जलाल्पत्वाद्यपेक्षया, अत्यल्पजलस्य सर्वोद्धाराभिधानात् ।

पैठीनसिः ।

गन्धवर्णरसैर्युक्ताः शुद्धा आपो भूमिगताः

यत्र गौः वितृष्णा भवति, विपर्यस्तं महोदकमपि वर्ज्यम् । प्रकृतादन्यथाभूतं विपर्यस्तम् ।

लघुहारीतः ।

प्रपजलं नीरघटस्य चैव
द्रोणीजलं कोशविनिर्गतं च ।
पीत्वावगाहेत जलं सवासा
उपोषितः शुद्धिमवाप्नुते सः ॥

आपदि पेयम् । तथा च स एव ।

द्रोण्यामापत्सयुक्तायां ? छमे प्रावर्त्तके तथा ।
ग्रामप्रपाजलं चैव पीत्वापत्सु न दुष्यति ॥

शङ्खलिखितौ ।

आपो रूपरसगन्धवत्यः परिशुद्धाः । जीर्णचर्मकरण्डकैरभ्युद्धृता भूमिगता मेध्या, यत्र गौर्वितृष्णा भवेत् । जीर्णेति शुद्धोपलक्षकम् । तथा च निर्णयामृते ।

कश्यपः ।

दृतीनां रञ्जनं शुद्धिरिति । दृतिः=चर्मपुटकम् । तथा च शुद्धचर्म-

पुटकोद्धृतं भूमिगतं गोपानयोग्यं कृत्वापदि पेयम् । तथा च ।

यमः ।

प्रपामरण्ये घटकं च कूपे द्रोण्यां जलं कोशगतास्तथापः ।
ऋतेऽपि शूद्रात्तदपेयमाहुरापद्गतो भूमिगताः पिबेत्तु ॥

प्रपां=प्रपास्थितं जलम् । घटकं=घटस्थितं जलम् । घटकोऽत्र सर्वार्थं कूपोदकाद्धरणार्थं कलशः करकादिः । द्रोणी=काष्ठाम्बुवाहिनी । कोशः=चर्मपुट इति कल्पतरुप्रभृतयः । ऋते शूद्रात् शूद्रं त्यक्त्वा ऽन्यस्वामिकमप्यपेयम् । एवं च प्रपास्थितं जलमपेयमाहुरित्याद्यन्वयः । आपद्गतः सन् भूमिगताः कृत्वा पिबेदित्यर्थः ।

हारीतः—

भूस्थाः पुण्याश्चापो शुद्रभागवर्जितत्वाद् रात्राविता आपो वरुणं प्राविशंस्तस्मान्न रात्रौ गृह्णीयाद्, धाम्नो धाम्न इत्यग्निमुपरिष्टाद्धारयन् गृह्णीयात् ।

बृहस्पतिः ।

उच्छिष्टं मलिनं क्लिन्नं यच्च विष्ठादिलेपितम् ।
अद्भिः शुद्ध्यति तत्सर्वमपां शुद्धिः कथं भवेत् ॥
सूर्येन्दुरश्मिपातेन मारुतस्पर्शनेन च ।
गवां मूत्रपुरीषेण शुद्ध्यन्त्याप इति स्थितिः ॥

उशनाः ।

नद्यः कूपास्तडागानि सरांसि सरितस्तथा ।
असंवृतान्यदोषाणि मनुः स्वायंभुवो ब्रवीत् ॥

सरितः=सरणशीला निर्झररूपाः । असंवृतानि=अस्पृश्यस्पृष्टान्यपीत्यर्थं इति कल्पतरुः । असंवृतानि=पिधानरहितानि तथासति सूर्येन्दुकिरणादिभिः शुद्धिहेतुभिः सम्बन्धो जायत इत्यदोषता भवतीति रत्नाकरः । स्रवन्तीति व्युत्पत्या सरितो नदगर्ताद्यो विवक्षितास्तदन्या नद्य इत्यनेनेत्यपुनरुक्तिः ।

विष्णुः ।

मृतपञ्चनखात् कूपात् अत्यन्तोपहतात्तथा ।
अपः समुद्धरेत्सर्वाः शेषं शस्त्रेण शोधयेत् ॥
वह्निप्रज्वालनं कृत्वा कूपे पक्वेष्टकाचिते ।
पञ्चगव्यं न्यसेत्पश्चान्नवतोयसमुद्भवे ॥
जलाशयेष्वथाल्पेषु स्थावरेषु वसुन्धरे ।
कूपवत्कथिता शुद्धिर्महत्सु च न दूषणम् ॥

अत्यन्तोपहतादिति शारीरैर्मलैः सुरादिभिर्मद्यैर्यदुपहतं तदत्यन्तोपहतमिति तेनैव परिभाषितं ग्राह्यमिति रत्नाकरः । अत्रात्यन्तोपहतत्वं पुरीषादिनातिव्याप्तत्वं न तु विष्णूक्तं, तत्र शारीरमलमात्रग्रहणेऽश्रुपातादावप्येतच्छुद्धिप्रसङ्गात् । आपस्तम्बेन शकृन्मूत्राद्युपघाते शुद्ध्यन्तर कथनाच्च । तथा च—

आपस्तम्बः ।

उपानच्छ्लेष्मविण्मूत्रक्षीरजोमद्यमेव च ।
एभिश्च दूषिते कूपे कुम्भानां षष्टिमुद्धरेत् ॥

कुम्भानां जलपूर्णानामिति तु हलधरः ।

खनेण=कुद्दालादिना । स्थावरेषु प्रवाहरहितेषु ।

बृहस्पतिः ।

श्वभिः श्वपाकैश्चाण्डालैर्दूषितेषु विशोधनम् ।
उद्धरेदुदकं सर्वं मार्जनं परिशोधनम् ॥

श्वपाकः=चाण्डालभेदः ।

तथा ।

वापीकूपतडागेषु दूषितेषु विशोधनम् ।
घटानां शतमुद्धृत्य पञ्चगव्यं ततः क्षिपेत् ।

एवं च यत्र घटशतोद्धरणेनैव सर्वोद्धारस्तत्रैव सर्वोद्धारो, यत्र त्वधिकजलेन तथा, तत्र घटशतोद्धारं कृत्वा पञ्चगव्यप्रक्षेपः कार्यः । अतिमहत्सु तडागादिषु दोषाभाव एवेति व्यवस्था ।

यमः ।

अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका ।
दशरात्रेण शुद्ध्यन्ति भूमिष्ठं च नवोदकम् ॥

ब्रह्मपुराणे—

नवखातजलं गोऽविमाहिषच्छागयोनयः ।
शुद्ध्यन्ति दिवसैरेव दशभिर्नात्र संशयः ॥

दशरात्रमकालवृष्टिविषयम् । काले तु—

मिताक्षरायां स्मृतिः—

कालेनैवोदकं शुद्धं न पातव्यं च तत् त्र्यहम् ।
अकाले तु दशाहं स्यात् पीत्वा नाद्यादहर्निशम् ॥
स्नानमाचमनं चैव देवतापितृतर्पणम् ॥
शुद्धोदकेन कुर्वीत तथा मेघादिनिःसृतैः ॥

आचारदीपिकायाम्—

यमः ।

मेघतोयेन यः कुर्यात् तर्पणं ज्ञानदुर्बलः ।

तर्पितास्तेन पितरो रुधिरेण मलेन च ॥

इदं विहितकालातिरिक्तकालविषयम् । ऽपवादो—

हारीतः ।

अभौममम्भो विसृजन्ति मेघाः पूतं पवित्रं पवनैः सुगन्धि ।

मनुः ।

वापीकूपतडागेषु आपो ग्राह्यास्तु सर्वतः ।

पश्चात् पश्येदमेध्यं तु पञ्चगव्येन शुध्यति ॥

यमः ।

चाण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् ।

गोमूत्रयावकाहारस्त्रिरात्रेणैव शुध्यति ।

आपस्तम्बः—

अन्त्यजैः खानिताः कूपास्तडागानि तथैव च ।

एषु स्नात्वा च पीत्वा च पञ्चगव्येन शुध्यति ।

पञ्चगव्यपानमुपवासपूर्वकं व्रतत्वात् । एतदज्ञानतः, ज्ञानतो द्वैगुण्यमिति शूलपाणिः । एतद्वचनमशक्तविषयम् । अकामतो नक्तभोजनम् । कामतः उपोषणमिति ।

माधवः—

अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा ।

तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते ।

इतित्वत्यन्तापद्विषयमिति शूलपाणिः ।

अथ स्वभावशुद्धयः ।

तत्र—

मनुः ।

नित्यशुद्धः कारुहस्तः पण्यं यच्च प्रसारितम् ।

ब्रह्मचारिगतं भैक्षं नित्यं मेध्यमिति स्थितिः ।

नित्यशुद्ध इति कारोर्मालाकारादेर्हस्तो देवब्राह्मणाद्यर्थे मालाग्रथने अमेध्यानुपहतत्वे विनापि प्रक्षालनं व्यवहारोचितः, तथा जननमरणयोरपि शुद्धः "न कारूणां कारुकर्मणी"ति वाक्यादित्यर्थः । पण्यं=क्रयदेशे प्रसारितं विक्रेयं नापणीयमन्नमश्नीयादिति शङ्खवाक्यात् । सिद्धान्नभिन्नं नानाकौतुकस्पर्शेऽपि शुद्धम् । ब्रह्मचारिभैक्षं रथ्याक्रमणादौ शुद्धम् । ब्रह्मचारिपदं च भिक्षुकमात्रोपलक्षकम् । अत्र यावता रथ्याप्रसर्पणादिना विना भैक्षं न सिध्यति तेषामेवापवादो द्रष्टव्यः ।

निर्णयामृते—

बृहस्पतिः ।

द्राक्षेक्षुयन्त्राकरकारुहस्ता गोदोहनीयन्त्रविनिःसृतानि ।

बालैरथ स्त्रीभिरनुष्ठितानि प्रत्यक्षदृष्टानि शुचीनि तानि ।

यन्त्रविनिःसृतानि इक्षुरसादीनि स्त्रीभिर्बालकैश्च रथ्याप्रसर्पणादिनाऽशुचिभिः कृतानि प्रत्यक्षतो ज्ञातान्यपि पाकादीनि कर्माणि शुद्धानीत्यर्थः ।

मनुविष्णू—

नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने ।
प्रस्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ॥

स्त्रीमुखमुच्छिष्टाद्यनुपहतम् । प्रस्रवे=दोहनानुकूलस्तनपाने वत्समुखं शुद्धम् ।

वशिष्ठः ।

वत्सः प्रस्रवणे मेध्यः शकुनिः फलपातने ।
स्त्रियश्च रतिसंसर्गे श्वा मृगग्रहणे शुचिः ॥

फलपातने काकादिमुखं शुद्धम् । स्त्रियश्च स्वभार्या एव । निर्णयामृते ।

यमः ।

मुखतो गौरमेध्या तु मेध्योऽजो मुखतस्तथा ।
पृष्ठतो गौर्गजः स्कन्धे सर्वतोऽश्वः शुचिस्तथा ॥
अदूष्यं काञ्चनं गावः स्त्रीमुखं कुतपं क्षुरम् ।
न दूषयन्ति विद्वांसो यज्ञेषु चमसं तथा ॥

काञ्चनमलङ्करणीभूतं स्वेदादिना न दूष्यम् । उच्छिष्टाद्युपहतं तत्तु, दुष्यत्येव, तत्र शुद्ध्यभिधानात् ।

मनुः ।

श्वभिर्हतस्य यन्मांसं शुचि तन्मनुरब्रवीत् ।
क्रव्याद्भिश्च हतस्यान्यैः चाण्डालाद्यैश्च दस्युभिः ।

क्रव्याद्भिः=व्याघ्रश्येनादिभिः । एतच्च भक्ष्यजन्तोरेव पञ्च पञ्चनखा भक्ष्या इत्याद्येकवाक्यत्वात् ।

यमः ।

बालकैर्यत्परिक्रान्तं स्त्रीभिराचरितं च यत् ।
मशकैर्मक्षिकाभिश्च विलीनं नोपहन्यते ॥

विलीनं=क्रान्तम् ।

अदोषं तु मुखं स्त्रीणां गवां पृष्ठमजामुखम् ।
एतानि नित्यशुद्धानि यच्च वाचा प्रशस्यते ॥

अदोषमुच्छिष्टाद्यनुपहतं रतिसमये शुचि "स्त्रीमुखं रतिसुरबम"
इति पैठीनसिवचनात् ।

तथा ।

आत्मशय्यासनं वस्त्रं मेध्यं बालमदूषकम् ।
ब्रह्मचारिगतं भैक्षं नित्यमेध्यमिति स्थितिः ।

आत्मशय्यासनमिति । स्वयमुपभुक्तमपि पुनरुपभोगे मेध्यम् ।

आसनं शयनं पानं स्त्रीमुखं कुतपं क्षुरम् ।
न दूषयन्ति विद्वांसो यज्ञेषु चमसं तथा ॥

कुतपो=नेपालकम्बलः । क्षुरम्=इतरमुण्डनव्यापृतमपि शुचि ।

वशिष्ठः ।

श्वहताश्च मृगा मेध्याः पातितं च द्विजैः फलम् ।
बालैरनुपरिक्रान्तं स्त्रीभिराचरितं च यत् ॥

स्मृत्यन्तरे ।

शुचिरग्निः शुचिर्वायुः पवित्रा ये बहिश्चराः ।
आपश्च शुचयो नित्यं पन्थाः सञ्चरणः शुचिः ॥

बहिश्चरा=मृगादयः ।

तेषां ये पवित्रास्तेऽशुचिस्पृष्टा अपि शुचयो न तु शृगालादयः ।

आपः शुद्धा भूमिगताः शुचिर्नारी पतिव्रता ।
शुचिर्धर्मपरो राजा सन्तुष्टो ब्राह्मणः शुचिः ॥

विष्णुः ।

नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितम् ।
ब्राह्मणान्तरितं भैक्षमाकराः सर्व एव च ॥

मनुः ।

मक्षिका विप्लुषश्छाया गौरश्वः सूर्यरश्मयः ।
रजोभूर्वायुरग्निश्च स्पर्शे मेध्यानि नित्यशः ॥

मक्षिका=अमेध्यस्पर्शिन्योऽपि । विप्लुषो मुखजा जलकणाः । छायाश्चाण्डालाद्यन्त्यस्यास्पृश्यस्य । गवादीनि चाग्निपर्यन्तानि चाण्डालादिस्पृष्टान्यपि शुचीनि ।

देवलः ।

अजाश्वं मुखतो मेध्यं गावो मेध्याश्च पृष्ठतः ।
तरवः पुष्पिता मेध्या ब्राह्मणाश्चैव सर्वदा ।

अजाश्वमिति द्वन्द्वैकवद्भावः ।

सुमन्तुः ।

स्त्रीबालमशकमक्षिकाछायासनशय्यां विप्रुषो नित्यं मेध्याः ।

घृतघटफलागाराणामभोज्यान्नानामदोषः । अभोज्यान्नानामपि घृतघटादयो न दुष्टाः ।

गौरश्वो विप्रुषश्छाया मक्षिकाः शलभाः शुकाः ।
अजो हस्ती (१)रणे छत्रं रश्मयश्चन्द्रसूर्ययोः ॥
शुचिरग्निरजो वायुरापो दधि घृतं पयः ।
सर्वाण्येतानि शुद्धानि स्पर्शे मेध्यानि नित्यशः ।

यस्मादेतानि शुद्धानि तस्मादशुचिसंसर्गिणामप्येषां स्पर्शे नाशौचमित्यर्थः । छाया तु चाण्डालाद्यन्यस्य मेध्या तथा च ।

ब्रह्मपुराणे ।

चाण्डालपतितच्छायास्पर्शे दुष्टा तनुर्भवेत् ।

चिरं तत्राधिष्ठाने प्रायश्चित्तमाह—

अङ्गिराः ।

यस्तु छायां श्वपाकस्य ब्राह्मणो ह्यधितिष्ठति ।
सचैलो जलमाप्लुत्य घृतं प्राश्य विशुध्यति ॥

अत्राधिष्ठानं चिरावस्थानम् । पतितच्छायायामप्येवम् ।

बौधायनः ।

अदुष्टा संतता धारा वातधूताश्च रेणवः ।
आकराः शुचयः सर्वे वर्जयित्वा सुराऽऽकरम् ॥

शातातपः ।

रेणवः शुचयः सर्वे वायुना समुदीरिताः ।
अन्यत्र रासभाजाविश्वसमूहनिवालसाम् ॥

समूहनिः=सम्मार्जनी ।

तथाऽश्वगजधान्यानां गवां चैव रजः शुभम् ।

अश्वगजधान्यगोरजसां पुनः शुभत्वबोधनं जलादीनामिवाधिकशुचित्वज्ञापनार्थं, शुचित्वमात्रस्य "रेणवः शुचयः सर्वे" इत्यनेनैव प्राप्तत्वात् । अत एव "वायव्यं गोरजः स्मृत"मिति स्नानप्रकरणे दर्शितमिति रत्नाकरः ।

देवलः ।

गोशकृच्छुद्धदेशस्थं श्मशानादुद्धृतं शिवम् ।
अग्राम्या मृद्वच्छुद्धा शुक्लविण्मूत्रवर्जिता ॥

गोशकृत्=गोमयम् । शुद्धदेशस्थं शुचि । श्मशानादुद्धृतं शुचि श्मशाने स्थितं यावद्भवति तावदेवाशुचीत्यर्थः ।

---

(१) रणच्छत्रमित्यपरार्के पाठः ।

पृष्ठतो गौर्गजः स्कन्धे सर्वतोऽश्वः शुचिस्तथा ।
नृणां मूत्रपुरीषे च अमेध्यं मलमेव च ।
गोः पुरीषं च मूत्रं च नित्यं मेध्यमिति स्थितिः ।

शङ्खः ।

शुद्धं नदीगतं तोयं सर्व एव तथाकराः ।
मुखवर्ज्यं च गौः शुद्धा मार्जारः क्रमणे शुचिः ॥

निर्णयामृते ।

आकराः शुचयः सर्वे शकुनिः फलपातने ।

देवलः ।

अकश्मलैः समृद्धोऽग्निर्दुर्मनुष्यैरदूषितः ।
सर्वेषामव्ययशौचानां समर्थः शोधनाय सः ॥

अकश्मलैः=कश्मलेतरैः । समृद्धः=प्रज्वालितः । कश्मलं च देवलेन परिभाषितम् ।

मानुषास्थि शवो मज्जा रेतो विण्मूत्रमेव च ।
कुणपं पूयमेतच्च कश्मलं समुदाहृतम् ॥ इति ।

दुर्मनुष्यैः=चाण्डालादिभिः । अदूषितः=स्पर्शनग्रहणाभ्यां न दूषितः ।

अग्नेर्वृषलभुक्तस्य ग्रहणं नास्त्यनापदि ।
श्वपाकवृषलौ भोक्तुं ब्राह्मणाग्निं न चार्हतः ॥
चाण्डालाग्नेरमेध्याग्नेः सूतकाग्नेश्च कर्हिचित् ।
पतिताग्नेश्चिताग्नेश्च न शिष्टैर्ग्रहणं स्मृतम् ॥

बृहस्पतिः ।

पादौ शुची ब्राह्मणानामजाश्वानां मुखं शुचि ।
गवां पृष्ठानि मेध्यानि सर्वगात्राणि योषिताम् ॥

पादौ शुची इत्यनेनानुपहतब्राह्मणचरणस्पृष्टं वस्तु शुद्धमिति गम्यते । अत एव ब्राह्मणव्यतिरिक्तचरणस्पर्शो दोषः प्रतीयते इति निर्णयामृते । अश्वाः=वडवाः । अश्वस्तु सर्वत एव मेध्यः प्रागुक्तः ।

याज्ञवल्क्यः ।

न स्त्री दुष्यति जारेण नाग्निर्दहनकर्मणा ।
नापो मूत्रपुरीषाभ्यां न द्विजो वेदकर्मणा ॥

न स्त्री इत्यादेरर्थोऽग्रे वाच्यः । नाप इति । अत्र कूपव्यतिरिक्तजलाशयस्थिता आपो ग्राह्याः । वेदकर्मणा=प्रतिग्रहेण ।

मनुः ।

ऊर्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्वशः ।
यान्यधस्तान्यमेध्यानि देहाच्चैव मलाश्च्युताः ॥

खानि=छिद्राणि नाभेरूर्ध्वं यानि नासाकर्णादीनि तानि मेध्यानि स्पृश्यानि नाभेरधस्तात्तु यानि पादादीनि तान्यमेध्यानि=अस्पृश्यानि देहाच्च्युताः=वक्ष्यमाणा वसाद्यो द्वादश देहमला अमेध्या अस्पृश्या इत्यर्थः।

यमः ।

दिवा सूर्यांशुभिस्तप्तं रात्रौ नक्षत्रमारुतैः ।
संध्ययोरप्युभाभ्यां च पवित्रं सर्वदा जलम् ॥

व्यासः ।

अच्छिन्नाग्रं च यद्वस्त्रं मृदा प्रक्षालितं च यत् ।
अहतं धातुरक्तं च तत्पवित्रमिति स्थितिः ॥

शङ्खलिखितौ ।

आकरद्रव्याणि प्रोक्षितानि शुचीनि ।

मनुः ।

त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥

ब्राह्मणानामिति चातुर्वर्ण्योपलक्षणम् । अदृष्टम्=केनापि प्रमाणेनाज्ञातोपघातम् । उपघातशङ्कास्पदं तु अद्भिः प्रक्षालितं शुचि ।

तथा ।

हारीतः ।

यद्यन्मीमांस्यं स्यात्तदद्भिः संस्पर्शाच्छुद्धं भवति । ब्राह्मणवाक्प्रशस्तमपि शङ्कितोपघातं शुचि ।

देवलः ।

शुचि पूतं स्वयंशुद्धं पवित्रं चेति केवलम् ।
मेध्यं चतुर्विधं लोके प्रजानां मनुरब्रवीत् ॥
नवं वा निर्मलं वापि शुचीति द्रव्यमुच्यते ।
शुद्धं पवित्रं पूतं च शुद्धमित्यभिधीयते ॥
स्वयमेव हि यत् द्रव्यं केवलं घनतां गतम् ।
स्थावरं जङ्गमं वापि स्वयंशुद्धमिति स्मृतम् ॥
अन्यद्रव्यैरदुष्टं यत् स्वयमन्यानि शोधयेत् ।
हव्यकव्येषु पूज्यं यत्तत्पवित्रमिति स्मृतम् ॥
अथ सर्वाणि धान्यानि द्रव्याण्याभरणानि च ।
अवर्ज्यभक्ष्यजातानि शुचीन्येतानि केवलम् ॥
वर्जिते निर्मले द्रव्ये शुचिसंज्ञा प्रवर्तते ।
तस्माच्छुद्धं च कर्मण्यं शुचीत्याहुर्द्विजातयः ॥
निर्मलं संस्कृतं द्रव्यं क्रियार्हं पूतमुच्यते ।

मलनिःश्रमसौ यानं वाहनं साधनानि च ॥
क्षुरो नौरासनं चानि स्वयंशुद्धमिति स्मृतम् ।
शिशवश्च स्वयंशुद्धा योषितश्चानृतौ तथा ॥
ब्रह्महत्या हि नारीणामृतुकालेन संस्पृशेत् ।
आकराश्च स्वयंशुद्धा विदुषामिति निर्णयः ।
क्रीतं च व्यवहारिभ्यः पण्यं शुद्धमिति स्मृतम् ।
अदुष्टं वाक्प्रशस्तं च स्वयं शुद्धं च केवलम् ।
त्रीण्येतानि विशुद्धानि भगवान् मनुरब्रवीत् ।

यमः ।

मेध्या रहोगता नारी स्त्रीमुखेषु च वारुणी ।
स्पर्शनेन न दुष्यन्ति वातो गन्धरसाः स्त्रियः ॥
स्त्रीणां मुखरसश्चैव गन्धो निःश्वास एव च ॥

बृहस्पतिः ।

पादौ शुची ब्राह्मणानां अजाश्वानां मुखं शुचि ।
गवां पृष्ठानि मेध्यानि सर्वगात्राणि योषिताम् ॥
रोमोद्भेदे शशी भुङ्क्ते गन्धर्वः कुचदर्शने ।
अनलस्तु रजोयोगे कन्यां भुङ्क्ते च नान्यथा ॥
बलात्कारोपभुक्ता वा चौरहस्तगतापि वा ।
स्वयं विप्रतिपन्ना वा अथवा विप्रमादिना ॥
अन्यतो दूषितापि स्त्री न परित्यागमर्हति ।
सर्वेषां निष्कृतिः प्रोक्ता नारीणां तु विशेषतः ।

एतच्च मानसविषयमेव । "न स्त्री दुष्यति जारेण" इतिवाक्यं च तथा । निष्कृतिः=प्रायश्चित्तम् । प्रायश्चित्तं दर्शयति ।

स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् ।
मासि मासि रजस्तासां दुष्कृतान्यपकर्षति ॥
सोमः शौचं ददौ तासां गन्धर्वाश्च शुभां गिरम् ।
पावकः सर्वमेध्यत्वं मेध्या वै योषितो ह्यतः ॥

याज्ञवल्क्यः ।

व्यभिचाराहतौ शुद्धिर्गर्भे त्यागो विधीयते ।
भर्तृगर्भवधे तासां तथा महति पातके ॥

स्त्रीणामृतौ प्रवृत्ते सति पूर्वकृताद् व्यभिचाराच्छुद्धिः। व्यभिचारेण यदि गर्भो भवति तदा तस्यास्त्यागः । भर्तृवधे गर्भवधे महापातके च तस्यास्त्यागः ।

तथा ।

स्वच्छन्दगा हि या नारी तस्यास्त्यागो विधीयते ।

न चैव स्त्रीवधं कुर्यान्न चैवाङ्गविकर्त्तनम् ।

वशिष्ठः

चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥

जुङ्गितो=निन्दितः शूद्रादिः ।

त्रीण्याहुः पातकान्यासां स्त्रीणां धर्मविदो जनाः ।
भर्तृवधो ब्रह्महत्या स्वस्य गर्भस्य पातनम् ॥

हारीतः—

गर्भघ्नीमधोवर्णगां शिष्यसुतगामिनीं पापव्यसनासक्तां धनधान्यक्षयकरीं वर्जयेच्च व्यभिचारिणीम् ।

अधोवर्णः=अपकृष्टवर्णः शूद्रादिः ।

शङ्खलिखितौ ।

एकव्रतस्कन्नभावात् परोपहतत्वाच्च दुष्टाः कुलसङ्करकारिण्यो भवन्ति ।

एकव्रतेति=एकव्रतं पतिव्रतं, ततः स्खलितत्वादित्यर्थः ।

यमः ।

स्वच्छन्दव्यभिचारिण्या विवस्वान् त्यागमब्रवीत् ।
न वन्धनं न वैरूप्यं वधं स्त्रीणां विवर्जयेत् ॥

नारदोऽपि ।

स्त्रीधनभ्रष्टसर्वस्वां गर्भविस्रंसिनीं तथा ।
भर्तुश्च धनमिच्छन्तीं स्त्रियं निर्वासयेद् गृहात् ॥

स्त्रीधनेति=स्त्रीधनव्याजेन स्वामिसर्वस्वनाशिनीमित्यर्थः ।

अत्र "व्यभिचाराहतौ शुद्धि"रित्यादिवचनात् याज्ञवल्क्यादिवाक्याच्च स्त्रीणां मदमोहबलात्कारादिप्रमादजातव्यभिचारे आर्त्तवेण शुद्धिः । कामकृते व्यभिचारे प्रायश्चित्तेन शुद्धिः । गुरुशिष्यसुतपतितनीचगमनेऽन्यतो गर्भसंभवे गर्भपातभर्तृवधब्रह्महत्यादिमहापातके च परित्याग इति व्यवस्था ।

यत्तु बलात्काराद्व्यभिचारेऽपि त्रिरात्रादि प्रायश्चित्तं स्मर्यते । तदसञ्जातरजस्काया निवृत्तरजस्कायाश्च द्रष्टव्यमिति । मानसव्यभिचारविषयमित्यन्ये ।

अथ तैजसादिद्रव्यशुद्धिः ।

तत्र मनुः ।

तैजसानां मणीनां च सर्वस्याश्ममयस्य च ।
भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः ॥

निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति ।
अब्जमश्ममयं चैव राजतं चानुपस्कृतम् ॥
अग्नेश्चापां च संयोगात् हेमं रूप्यं च निर्बभौ ।
तस्मात्तयोः स्वयोन्यैव निर्णेको गुणवत्तरः ॥
ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च ।
शौचं यथार्हं कर्त्तव्यं क्षाराम्लोदकवारिभिः ॥

तैजसानां=सुवर्णादीनाम् । मणीनाम्=इन्द्रनीलादीनाम् । अश्ममयं=पाषाणमयम् । अत्र मृद्भस्मनोर्लेपापकर्षरूपकार्ये तुल्यफलजनकत्वाद्विकल्पः, जलेन तु समुच्चय एव व्यापारभेदात् । उच्छिष्टाज्यादिलिप्तविषयमिदम् "निर्लेपं" त्वित्यादिना निर्लेपे केवलजलेनैव शुद्धिकथनात् । तथा शूद्रोच्छिष्टोत्तरविषयमपि "चतुर्थेन तु यद् भुक्त"मित्यादिशङ्खवचनेन तत्र शुद्ध्यन्तरस्य वाच्यत्वात् । निर्लेप=उच्छिष्टादिलेपशून्यम् । अब्जं=शङ्खशुक्त्यादि । अनुपस्कृतं=उपस्कृतं विकृतं तद्भिन्नं रेखादिरूपविकारशून्यं, रेखादिसाहित्ये स्वाधिकमलसम्भवान्नेवम् । निर्बभौ=उत्पन्ने । यतो हेमरूप्ये अग्निजलयोगादुत्पन्ने अतस्तयोः स्वयोन्या स्वकारणेनाग्निजललक्षणेनैव निर्णेकः=शोधनं प्रशस्ततरमित्यर्थः । हेतुमन्निगदो विधेयस्तुत्यर्थः । अमेध्याद्युपहतविषयमेतत् । अयो=लोहमयम् । रीतिः=पित्तलम्, तद्विकारो रैत्यम् । त्रपुणः=रङ्गस्य । क्षारो=भस्म । अम्लोदकम्=जम्बीरादिरसः । वारि=जलम् । यथार्हम्=यस्य यदर्हति तेन तस्य शौचं कार्यम् । तदाह—

बृहस्पतिः ।

अम्भसा हेमरूप्यायाः(१)कांस्यं शुध्यति भस्मना ।
अम्लैस्ताम्रं च रैत्यं च पुनः पाकेन मृण्मयम् ॥ इति ।

अम्भसः सर्वत्रान्वयो मलापकर्षं आवश्यकत्वादिति कुल्लूकभट्टः । अत्र ताम्रादीनामम्लोदकादिनैव शुद्धिरिति न नियमः ।

मलसंयोगजं तज्जं यस्य येनोपहन्यते ।
तस्य तच्छोधनं प्रोक्तं सामान्यं द्रव्यशुद्धिकृत् ॥

इति मन्वादिभिः सामान्यत एव वक्तव्यत्वात् । तथा च ताम्रादेरुच्छिष्टादिलेपस्यान्येनोपगमसम्भवे नियमेनाम्लादि नोपादेयम् । अत एव "क्षाराम्लोदकवारिभि"रिति शौचस्य परां काष्ठां बोधयितुमिति मिताक्षरा ।

---

(१) अयो लोहमित्यर्थः ।

याज्ञवल्क्यः ।

त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः ।
भस्माद्भिः कांस्यलोहानां शुद्धिः प्लावो द्रवस्य तु ॥
अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धापकर्षणात् ।

त्रपिवत्यादिगतार्थं, यावच्छोध्यद्रव्यस्य तैजसपात्रवस्त्रादेः पुरीषादियुक्तस्य मृत्तोयैर्गन्धलेपाद्यपनयनेनैव शुद्धिः । मृत्तोयैरिति गन्धलेपापकर्षहेतूपलक्षणम् ।

ब्राह्मे ।

सुवर्णरूप्यशङ्खाश्मशुक्तिरत्नमयानि च ।
कांस्यायस्ताम्ररैत्यानि त्रपुसीसमयानि च ॥
निर्लेपानि विशुध्यन्ति केवलेन जलेन तु ।
शूद्रोच्छिष्टानि शुध्यन्ति त्रिधा क्षाराम्लवारिभिः ॥
सूतिकाशवविण्मूत्ररजस्वलहतानि च ।
प्रक्षेप्तव्यानि तान्यग्नौ यच्च यावत्सहेदपि ॥

रत्नमयानि=स्फटिकादिघटितानि । रैत्यानि=पित्तलघटितानि । त्रपुमयं=रङ्गघटितम् । शूद्रोच्छिष्टानि=शूद्रोच्छिष्टस्पृष्टानि । शूद्रेण यत्र भुज्यते तद्भाजनशुद्धेः शङ्खनाम्ना वक्तव्यत्वात् । सूतिकारजस्वलोपहतत्वं भाजनस्य भाजनयोगेनैव तच्छङ्खवाक्ये स्फुटीभविष्यति । प्रक्षेप्तव्यानीति । प्रक्षालनोत्तरं यद्भाजनं यावत्समयपर्यन्तमग्निं सहेत तावदग्नौ संयोजयेत् ।

शङ्खः ।

उष्णोदकेन ताम्रस्य सीसस्य त्रपुणस्तथा ।
क्षारेण शुद्धिं कांस्यस्य लोहस्य च विनिर्दिशेत् ॥
इदमप्युच्छिष्टादिलेपयुक्तविषयम् ।

पैठीनसिः ।

त्रपुसीसकानां गोमयतुषैः । तथोच्छिष्टस्नेहसंसृष्टे क्षारोदकाभ्यामब्जकस्य च । अब्जकस्य=शङ्खशुक्त्यादेः ।

बौधायनः ।

तैजसानां तु पात्राणामुच्छिष्टोपहतानां त्रिसप्तकृत्वः परिमार्जनम् । परिमार्जनद्रव्याणि मृद्गोशकृद्भस्मानि मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानां पुनःकरणं गोमूत्रे वा सप्तरात्रं परिस्थापनं महानद्यां वा । एवमश्ममयादीनां चालाबुबिल्ववैदलानां गोवालैः परिमार्जनम् । नलवेणुकुशस्यूतानां गोमयेनाद्भिः प्रक्षालनम् ।

त्रिःसप्तकृत्वः=एकविंशतिवारम् । वैदलानां=वेणुदलादिनिर्मितानाम् । पुनःकरणम्=पुनर्घटनम् । इदं चिरकालं व्याप्य वारं वारं मूत्रादिभिरुपघाते, स्वल्पोपघाते गोमूत्रे महानद्यां वा सप्तरात्रं स्थापनम् । अनेकवारं मूत्राद्युपघाते त्रिधा क्षारोदकेनाम्लोदकेन वा यावच्छुद्ध्यग्निप्रक्षेपो ब्रह्मपुराणवचनाविषयः ।

शातातपः ।

गवाघ्रातेषु कांस्येषु शूद्रोच्छिष्टेषु वा पुनः ।
दशभिर्भस्मभिः शुद्धिः श्वकाकोपहतेषु च ॥

अङ्गिराः ।

गण्डूषं पादशौचं च यः कुर्यात् कांस्यभाजने ।
भूमौ निक्षिप्य षण्मासान् पुनराकरमादिशेत् ॥

आकरमादिशेत्=अग्नौ दहेत् । इदं गण्डूषादिभिरसकृदुपहते । यत्त्वाह-राजधर्मे ।

यच्च लेपहतं कांस्यं गवाघ्रातमथापि वा ।
गण्डूषोच्छिष्टमपि च विशुध्येद्दशभिस्तु तत् ॥

दशभिर्दिनैरिति शेषः ।

न कांस्ये धावयेत्पादौ यत्र स्यादपि भोजनम् ।

यत्र पात्रान्तरे भोजनं तत्रापि पादौ न धावयेदित्यन्वयः । तत्रापि पादधावने तु कांस्यवदेव शुद्धिः ।

बौधायनः ।

भिन्नकांस्ये तु योऽश्नीयादह्नां स्नात्वा जपेद् द्विजः ।
गायत्र्यष्टसहस्रं तु एकभक्तस्ततः शुचिः ॥

अष्टसहस्रम्=अष्टोत्तरसहस्रम् । अन्यथा बहुवचनापत्तेः ।
देवलः ।

ताम्ररजतसुवर्णाश्मस्फटिकानां भिन्नमभिन्नमिति, न दुष्टमित्यर्थः ।

पराशरः ।

आयसेष्वायसानां च सीसस्याग्नौ विशोधनम् ।

अयोमयेषु घर्षणसाधनेष्वायसानां घर्षणेन शुद्धिः । सीसस्य त्वग्नौ प्रविलापनम् । इदमत्यन्तोपहतविषयम् ।

मार्कण्डेयपुराणम् ।

गात्राणां च मनुष्याणामम्बुना शौचमिष्यते ।
तथायसानां तोयेन भस्मसंघर्षणेन च ॥

तोयेनेत्यल्पोपहतविषयम् । तत्रैव

दन्तमस्थि तथा शृङ्गं रूप्यं सौवर्णभाजनम् ।

मणिपात्राणि शङ्खश्चेत्येतान्प्रक्षालयेज्जलैः ॥
पाषाणे तु पुनर्घर्षैः शुद्धिरेषामुदाहृता ।

अस्थिशब्देन गजास्थ्यादिमयं करण्डकादि ॥

शृङ्गशब्देन्महिषशृङ्गनिर्मितं तदेव, मणिपात्राणि प्रवालस्फटिकादीनि पाषाणपात्रस्य तु प्रक्षालनं पाषाणान्तरघर्षणं चेत्युभयं बोध्यम् ।

जलैः प्रक्षालनं निर्लेपविषयम् ।

विष्णुः ।

शारीरैर्मलैः सुराभिर्वा यदुपहतं सर्वं लोहभाण्डमग्नौ प्रतप्तं शुध्येत्। मणिमयमश्ममयमब्जमयं सप्तरात्रं महीखननेन, शृङ्गदन्तास्थिमयं च तक्षणेन दारवं मृण्मयं च जह्यात् । लोहपदं-सुवर्णाद्युपलक्षकपरम् । "सर्वं च तैजसं लोहम्" इत्यमरकोषात् ।

शङ्खः ।

सूतिकोच्छिष्टभाण्डस्य सुरामद्यहतस्य च ।
त्रिःसप्तमार्जनैः शुद्धिर्न तु कांस्यस्य भाजनम् ॥

भाण्डस्य सौवर्णादिभाजनस्य। सुरा=गौडी पैष्टी माध्वी त्रिधा, तद्व्यतिरिक्तं पनसादिसम्भवं मद्यं ताभ्यामुपहतस्य ।

दक्षः ।

ब्रह्मक्षत्रविशां चैव सकृत्संमार्जयेच्छुचिः ।
चतुर्थेन तु यद् भुक्तं चतुर्भिरथ मार्जितम् ॥
अग्नौ निक्षिप्य गृह्णीयाद् हस्तौ प्रक्षाल्य यत्नतः ।
गोशृङ्गेन तु संस्पृष्टं तत्पात्रं शुचितामियात् ॥

यत्र ब्रह्मक्षत्रविशां भोजनं वृत्तं तत्सकृत्संमार्जनाच्छुचि। चतुर्थेन=शूद्रेण तु ब्राह्मणादीनां यद्भाजने भुक्तं तच्चतुर्वारमार्जनादिभिः शुध्यतीत्यर्थः ।

तदेवमत्र व्यवस्था । सुवर्ण-रूप्य शङ्ख-अश्म-शुक्ति रत्न कांस्यापित्तल-रङ्ग-सीसकमयानां भाजनानां निर्लेपानां केवलजलेन शुद्धिः । उच्छिष्टादिलेपयुक्तानां क्षारोदकाम्लोदकाभ्यां यथायोग्यं शुद्धिः, चिरकालं शूद्रोच्छिष्टोपहतानां वारत्रयं क्षारोदकादिक्षालनोत्तरं वह्नौ यावत्सहनं निक्षेपाच्छुद्धिः। एकवारं श्वकाकशूद्रोच्छिष्टदूषितानां गवाघ्रातानां वा कांस्यानां दशवारं क्षारोदकमार्जनाच्छुद्धिः । अनेकवारं श्वकाकशूद्रोच्छिष्टदूषितानामेकविंशतिवारं क्षारोदकमार्जनाच्छुद्धिः । त्रैवर्णिकसम्बन्धिभाजने यस्मिन् शूद्रेण भुक्तं तच्चतुर्भिः क्षारैर्मार्जनोत्तरमग्नौ निक्षिप्तं प्रक्षालितहस्ताभ्यां गृहीतं शुध्यति। सूतकोच्छिष्टमद्यसुराभिः सकृदुपहतकांस्यभाजनमग्नौ प्रतापनात् शुध्यति । असकृदुपहतं पुनर्

ट्टनेन शुध्यति। वारं वारं गण्डूषपादशौचोपहतं कांस्यभाजनं षण्मासा-न्निखननोत्तरं वह्नौ प्रतापनाच्छुध्यति। सकृदुपहतं तु दशभिर्दिनैः शुध्य-ति। मूत्रपुरीषरेतःप्रभृतिभिः शारीरैर्मलैरल्पकालमुपहतानि तैजस-पात्राणि सप्तरात्रं गोमूत्रे महानद्यां वा स्थापनाच्छुध्यन्ति, अनेकवारं मूत्राद्युपहतानि शवसूतिकारजस्वलोपहतानि च वारत्रयं क्षाराम्लोद-कप्रक्षालनोत्तरं यावत्सहनमग्नौ प्रतापनाच्छुध्यति। चिरकालं व्याप्य वारं वारं मूत्रादिभिरुपहतानि पुनर्घट्टनेन शुध्यन्ति।

देवलः।

लोहानां दहनाच्छुद्धिर्भस्मना गोमयेन वा।
दहनाद्व खननाद्वापि शैलानामश्मसापि वा॥
काष्ठानां तक्षणाच्छुद्धिर्मृद्गोमयजलैरपि।
मृण्मयानां तु पात्राणां दहनाच्छुद्धिरिष्यते॥

अत्र दहनादिरत्यन्तोपघातविषयम्। अल्पोपघाते तु भस्मना गो-मयेन वा। शैलं=शिलाभाजनम्। तत्रात्यन्तोपहते दहनेन खननेन वा अल्पो-पघाते जलेन, काष्ठभाजनानां सल्पोपघाते तक्षणात् अन्यथा मृद्गोमयज-लेन मृण्मयानामत्यन्तानुपहतानां पुनः पाकः। अत्यन्तोपहतानां मृण्म-यानां दारवाणां च त्याग इति व्यवस्था। तथा च—

विष्णुः।

दारवं मृण्मयं च जह्यात्। अत्रात्यन्तोपहतमिति प्रकृतम्।

काश्यपः।

सिकताभिर्दन्तशृङ्गशङ्खशुक्तीनाम्।

सिकताभिः=जलयुक्तवालुकाभिः। अत्यन्तोपघातविषयमिदम्। केवल-जलेन शुद्धिरित्यनुवृत्तौ।

हारीतः।

अद्भिः काञ्चनराजतानां तद्गुणवर्णयोगात्। स्नेहवैवर्ण्योपहतानां यवगोधूमकलायमाषगोमयचूर्णैर्मार्जनं, रोचनाभिः प्रक्षालनं अम्ललव-णाभ्यां ताम्राणां भस्मना कांस्यानां शाणकर्षणैः। कार्दमायसानां सिक-तावधानघर्षणैः शैलानां शैलावघर्षणमार्जनैर्मणिमयानां निर्लेखनैर्दा-रुमयानां पुनः पाकेन मृण्मयानां, गोमूत्रगोमयबिल्वैर्वैदलानां गोवा-लरज्वा सोदकया फलपात्राणां मार्जनम् कमण्डलूनां यतिपात्राणां क्षारोदकाभ्यां कार्पासशाणमृण्मयानां पुत्रजीवारिष्टकैः क्षौमदुकूलानां, पुत्रजीवोदश्विद्भ्यामाजिनानां, श्रीफलश्वेतसर्षपैः कौशेयानां उदश्विद्बल्मी-कमृद्गौरसर्षपैरूर्णानां स्नेहसक्तकुल्माषोद्वर्तनैर्गुरूणाम्।

अयमर्थः । तद्गुणवर्णयोगात् तेषां गुणभूतो योवर्णस्तद्योगात् तेन निर्लेपत्वमभिप्रेतं तेन निर्लेपानां काञ्चनादीनामद्भिः केवलाभिः शुद्धिः । शाणं लोहनिघर्षणं प्रसिद्धम् । सिकतावघातघर्षणैः=वालुकासंयोगेन मर्दनैः। फलपात्रं नारिकेलादिमयम् । चीनः=चीनदेशजः पट्टवस्त्रविशेषः । पुत्रञ्जीवः=पितंजिया । अरिष्टः=हरिठ इति रुद्रधरः । उदश्वित्=तक्रम् । कुल्माषः=घोडा इति प्रसिद्ध इति रत्नाकरः। अर्द्धस्विन्नमाष इति कल्पतरुः। अत्र पुत्रञ्जीवादिभिश्चूर्णितैः शोधनं योग्यत्वात् , गुरूणामिति ऊर्णामयानामुपहतानां कम्बलानामित्यर्थः ।

मनुः ।

मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि ।
चमसानां ग्रहाणां च शुद्धिः प्रक्षालनेन तु ॥
चरूणां स्रुक्स्रुवादीनामद्भिरेव विधीयते ।
चेलवच्चर्मणां शुद्धिः वैदलानां तथैव च ॥
शाकमूलफलानां च धान्यवच्छुद्धिरिष्यते ।
कौशेयाविकयोरूषैः कुतपानामरिष्टकैः ॥
श्रीफलैरंशुपट्टानां क्षौमानां गौरसर्षपैः ।
क्षौमवच्छङ्खशृङ्गानामस्थिदन्तमयस्य च ॥
शुद्धिर्विजानता कार्या गोमूत्रेणोदकेन च ।
प्रोक्षणात् तृणकाष्ठानि पलालं च विशुद्ध्यति ।
मार्जनीयाञ्जनैर्वेश्म पुनः पाकेन मृण्मयम् ॥

चमसानां ग्रहणमन्येषां च यज्ञपात्राणां पूर्वं पाणिना मार्जनं कार्यम्। पश्चात्क्षालनेन यज्ञार्थं शुद्धिः, स्नेहाक्तानां चरुस्रुगादीनां उष्णोदकेन शुद्धिः । निःस्नेहानां त्वमीषां यज्ञपात्रत्वाज्जलेनैव शुद्धिः ।

एवं स्फ्यसूर्पादीनामपि । बहूनां धान्यानां वाससां च चाण्डालस्पर्शाद्युपघाते जलेन प्रोक्षणाच्छुद्धिः ।

बहुत्वं च पुरुषहार्य्याधिकत्वमिति कलिकाकुल्लूकभट्टः तद्ल्पानामद्भिः प्रक्षालनाच्छुद्धिः । स्पृश्यपशुचर्मणां वंशादिदलनिर्मितानां च वस्त्रवच्छुद्धिः । शाकादेर्धान्यवच्छुद्धिः । कौशेयस्य कृमिकोशोद्भवस्य। आविकस्य=अविलोमभवकम्बलादेः । ऊषैः क्षारमृद्भिः मध्यदेशे रह इति प्रसिद्धाभिः । कुतुपानां नेपालकम्बलानां अरिष्टैश्चूर्णितैः । अंशुपट्टानां=पट्टशाटकानां विल्वफलैः। क्षुमाऽतसी तद्वल्कलभवानां वस्त्राणां पिष्टश्वेतसर्षपैः प्रक्षालनाच्छुद्धिः । शङ्खस्पृश्यपशुशृङ्गभवस्यास्थिदन्तमयस्य च क्षौमवत् पिष्टश्वेतसर्षपकल्केन शुद्धिः । तृणादिकं चाण्डा-

लादिस्पर्शे प्रोक्षणाच्छुचि, तृणादिसाहचर्यादिदमिन्धनादिविषयमपि। दारवाणां च तक्षणमिति तु दारुमयस्थूलपात्रविषयम्। गृहमुदक्यादिसंपर्कदूषितं मार्जनगोमयलेपाभ्यां मृण्मयभाण्डोच्छिष्टादिस्पृष्टं पुनः पाकेन शुद्ध्यति।

याज्ञवल्क्यः।

सोषैरुदकगोमूत्रैः शुध्यत्याविककौशिकम्।
सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा।
सगौरसर्षपैः क्षौमं पुनःपाकेन मृण्मयम्।
सोषैरित्यादिचतुष्टयस्य उदकगोमूत्रैरिति विशेष्यम्॥

अत्र बहुवचनं पश्चादप्युदकप्राप्त्यर्थमिति मिताक्षरा।

अत्रैषां मलवत्वे तत्तद्द्रव्यभेदेन मलापकर्षकभेदात्तत्तत्प्रयुक्ता शुद्धिरुक्ता। मलाभावे तु केवलेन जलेन शुद्धिः। तथा च-

देवलः।

तावन्तं मलिनं पूर्वमद्भिः क्षारैश्च शोधयेत्।
अंशुभिः शोषयित्वा वा वायुना वा समाहरेत्॥
ऊर्णापट्टांशुकक्षौमदुकूलाविकचर्मणाम्।
अल्पाशौचे भवेच्छुद्धिः शोषणप्रोक्षणादिभिः॥
तान्येवामेध्यलिप्तानि निर्णिज्याद्गौरसर्षपैः।
धान्यकल्कैः पर्णकल्कै रसैश्च फलवल्कलैः॥
तूलिकाद्युपधानानि पुष्परक्ताम्बराणि च।
शोषयित्वातपे किंचित् करैरुन्मार्जयेन्मुहुः।
पश्चाच्च वारिणा प्रोक्ष्य शुचीत्येवमुदाहरेत्।
तान्यप्यतिमलिष्टानि यथावत् परिशोधयेत्॥

तूलं=शाल्मलीफलादिभवं तन्निर्मिता शय्या तूलिका, आदिशब्दादासनादिसंग्रहः। उपधानं उच्छीर्षकम्। पुष्परक्तानि=कुसुम्भकुङ्कुमादिरक्तानि, पुष्पग्रहणामन्यस्यापि हरिद्रादिरक्तस्य क्षालनासहस्य प्राप्त्यर्थं न माञ्जिष्ठादेः, तस्य क्षालनसहत्वात्।

शङ्खेनाप्युक्तम्।

रागद्रव्याणि प्रोक्षितानि शुचीनीति।

शातातपः।

कुसुम्भकुङ्कुमै रक्तास्तथा लाक्षारसेन च।
प्रक्षालनेन शुध्यन्ति चाण्डालस्पर्शने तथा॥

शुद्धिरित्यनुवृत्तौ विष्णुः।

यज्ञकर्मणि मृगलोमिनां वा।

उशनाः।

कौशेयानां गौरसर्षपकल्केन मृद्भिश्चान्येषां वाससाम्।

अङ्गिराः।

शौचं सहस्त्ररोमाणां वाय्वग्न्यर्केन्दुरश्मिभिः।
रेतःस्पृष्टं शवस्पृष्टमाविकं नैव शुध्यति॥
शयनासनयानानि रोमबद्धानि यानि तु।
वस्त्राण्येतानि सर्वाणि संहतानि प्रचक्षते॥

सहस्त्ररोमाणाम् ऊर्णादिरोमनिर्मितानाम्। शयनादीनि रोमबद्धानि कम्बलादीनि च संहतानि, तान्यनुपघाते वाय्वादिभिः शुद्ध्यन्ति। अत्र संहतत्वं मिलितत्वं तच्च धान्यानामपि। तथाच—

याज्ञवल्क्यः।

प्रोक्षणं संहतानां च बहूनां धान्यवाससाम्।

धान्यवासोग्रहणमनुक्तशुद्धीनां द्रव्याणामुपलक्षणम्। तथाचोक्तम्। शुद्धानां धान्यवासःप्रभृतीनां बहूनां राशिकृतानामुपघाते प्रोक्षणेनैव शुद्धिः। अत्र बहुत्वं पुरुषभारहार्याधिकत्वम्। मिताक्षरायां तु बहुत्वं स्पृष्टापेक्षया, तथा च यत्र धान्येषु वस्त्रादिषु वा राशीकृतेष्वल्पानि चाण्डालादिभिः स्पृष्टानि बहून्यस्पृष्टानि तत्र स्पृष्टानां यथोक्तैव शुद्धिरन्येषां प्रोक्षणम्। तथा च—

स्मृत्यन्तरे।

वस्त्रधान्यादिराशीनामेकदेशस्य दूषणे।
तावन्मात्रं समुद्धृत्य शेषं प्रोक्षणमर्हति॥

यत्र तु स्पृष्टानां बहुत्वमस्पृष्टानामल्पत्वं तत्र सर्वेषामेव क्षालनम्। यदाह—

मनुः।

अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम्।
प्रक्षालनेन स्वल्पानामद्भिः शौचं विधीयते॥

स्पृष्टानामस्पृष्टानां च समत्वे प्रोक्षणमेव, बहूनां प्रोक्षणविधानेनाल्पानां प्रक्षालने सिद्धे पुनरल्पानां क्षालनवचनस्य समेषु क्षालननिवृत्त्यर्थत्वात्। इयत्स्पृष्टमियदस्पृष्टमित्यविवेके तु क्षालनमेव। पाक्षिकस्यापि दोषस्य परिहर्तव्यत्वादित्युक्तम्। अन्ये तु मनुवाक्येऽपि बहुत्वं पुरुषभारहार्याधिकत्वम्। तथा चानेकपुरुषोद्धार्याणां धान्यवासःप्रभृतीनां स्पृष्टानामस्पृष्टानां च प्रोक्षणमेवेति वदन्ति। तथा च

बौधायनः।

चाण्डालादिस्पर्शेऽनेकपुरुषोद्धार्याणां प्रोक्षणं, मूत्रादिसंपर्के तन्मा-

श्रापहारः, असृक्पूयादिद्रव्यसंयोगे निस्तुषीकरणम् ।

विष्णुः ।

अल्पधान्यस्य तन्मात्रमुत्सृज्य शेषस्य कण्डनक्षालने कुर्यात् । चाण्डालादिस्पर्शे प्रोक्षणेन बहूनां धान्यादीनां शुद्धिः । मूत्रादि(स्पर्श)-स्पृष्टभागस्य स्वल्पस्य दूरीकरणे शेषस्य कण्डनादिना शुद्धिः । शय्यादेरप्येकदेशस्य चाण्डालादिस्पर्शे प्रोक्षणम् । मूत्राद्युपघाते तदंशं सम्यक् प्रक्षाल्येतरांशस्य प्रोक्षणमिति व्यवस्था ।

मनुः ।

प्रोक्षणं संहतानां च दारवाणां च तक्षणम् ।

तक्षणमत्यन्तानुपघातविषयम् । अत्यन्तोपहतस्य तु त्याग एव, विष्णुवाक्यात् ।

शङ्खलिखितौ ।

पुष्पमूलफलानां च विष्किरावधूतानां प्रोक्षणम् । अभ्युक्षणमित्येके । यानशय्यासनानां संहतवत् शौचम् । विष्किराः=कुक्कुटादयः ।

विष्णुः ।

अत्यन्तोपहतस्य यत्प्रक्षालितं सद् विरज्यते तच्छिन्द्यात् ।

बृहस्पतिः ।

वस्त्रवैदलचर्मादेः शुद्धिः प्रक्षालनं स्मृतम् ।
अतिदुष्टस्य तन्मात्रं त्यजेच्छित्वा तु शुद्धये ॥

यमः ।

कृष्णाजिनानां वालैश्च वालानां शुद्धिरम्भसा ।
गोमूत्रेणास्थिदन्तानां क्षौमाणां गौरसर्षपैः ॥

वालानां=चामराणामित्यर्थः ।

शङ्खः ।

सिद्धार्थकानां कल्केन दन्तशृङ्गमयस्य च ।
गोवालैः फलपात्राणामस्थ्नां स्याच्छृङ्गवत्तथा ॥

फलपात्राणि नारिकेलादिभवानि । अस्थ्नां शङ्खादीनां शृङ्गवत् तिलकल्केन, तेषां चेयं शुद्धिरल्पोपघाते । अत्यन्तोपघातेऽवलेखनं वायुपुराणोक्तं शृङ्गाणामप्यत्यन्तोपघातेऽवलेखनस्य तत्रोक्तत्वात् ।

तथा ।

निर्यासानां गुडानां च लवणानां तथैव च ।
कुसुम्भकुसुमानां च ऊर्णाकार्पासयोस्तथा ॥
प्रोक्षणात्कथिता शुद्धिरित्याह भगवान् यमः ।

वायुपुराणे ।

अरिष्टैश्च तथा बिल्वैरिङ्गुदैश्चर्मणामपि ।
वैदलानां च सर्वेषां चर्मवच्छौचमिष्यते ॥
तथा चर्मास्थिदारूणां शृङ्गाणां चावलेखनम् ।
मणिवज्रप्रवालानां मुक्ताशङ्खोपलस्य च ॥
सिद्धार्थकानां कल्केन तिलकल्केन वा पुनः ।
स्याच्छौचं सर्ववालानामाविकानां च सर्वशः ॥
तथा कार्पासिकानां च भस्मना समुदाहृतम् ।

सिद्धार्थकाः=सर्षपाः ।

विष्णुः ।

मृत्पर्णतृणकाष्ठानां श्वभिश्चाण्डालवामलैः ।
स्पर्शने विहितं शौचं सोमसूर्याग्निमारुतैः ॥

बौधायनः ।

आसनं शयनं यानं नावः पन्थास्तृणानि च ।
मारुतार्केण शुध्यन्ति पक्वेष्टकाचितानि च ॥
आत्मशय्यासनं वस्त्रं जायापत्यं कमण्डलुः ।
शुचीन्यात्मन एतानि सर्वेषामशुचीनि तु ॥

ब्राह्मे ।

प्रत्यहं क्षालयेद्वस्त्रं दैवे पित्र्ये च कर्मणि ।
सर्वं विण्मूत्रशुक्रैस्तु दूषितं च मृदम्बुभिः ॥
शोध्यादौ शोधनीयं च गोमूत्रक्षारवारिभिः ।
रज्जुवल्कलपात्राणां चमसानां च चर्मणाम् ॥
कृत्वा शौचं ततः शुद्धिर्गोवालैर्घर्षणं पुनः ।
कौशेयाविकयोर्देयं रजतार्कं जलं लघु ॥
सुवर्णाक्तं तथा देयं क्षौमाणां चाथ वाससाम् ।

सचैलमित्यनुवृत्तौ ।

शङ्खलिखितौ ।

सर्वेषामापो मृदरिष्टकेङ्गुदतण्डुलसर्षपकल्कक्षारगोमूत्रगोमयादीनि च शौचद्रव्याणि । उपहतानां प्रोक्षणमित्येके ।

कश्यपः ।

तृणकाष्ठरज्जुभूस्तृणक्षौमचीरचर्मवैदलपत्रवल्कलादीनां चेलवच्छौचम् । अत्यन्तोपहतानां त्यागो विधीयते ।

हारीतः ।

पयसा दान्तानां, कीतानामवहननानिष्पवनैः, व्रीहियवगोधूमानां घर्ष-

णदलनप्रेषणैः, शमीधान्यानां कण्डनविमर्शनक्षालनैः, फलीकृतानां घर्षणप्रक्षालनपर्यग्निकरणैः, शाकमूलफलानां भूस्थानां ग्रहणे प्रक्षालनैः; इक्षुकाण्डानां शमधान्यवत्, यज्ञद्रव्यहविषां श्रपणमेव, स्नेहानां पुनः पाकः, कृतलवणानां पुष्करादिभिः स्पृष्टानां भूस्थानां तृणकाष्ठानामादित्यदर्शनाच्छौचम्।

दान्तानां=दन्तनिर्मितानाम्। क्रीतानां=क्रयोपात्तानां तण्डुलादीनाम्। अवहननं=कण्डनं=निष्पवनं=प्रस्फोटनम्। शमीधान्यानां कोशीधान्यामुद्गादीनाम्। फलीकृतानां=निस्तुषीकृतानां तण्डुलादीनाम्। पर्यग्निकरणं=तदुपर्यग्निभ्रामणम्।

बौधायनः।

असंस्कृतायां भूमौ न्यस्तानां प्रक्षालनं तृणानां परोक्षाहृतानामभ्युक्षणमेव क्षुद्रसमिधां महतां काष्ठानामुपघाते प्रक्षाल्यावशोषणम्। तथा व्रीहीणामुपघाते प्रक्षाल्यावशोषणम्। तण्डुलानामुपसंसर्ग एव। शुद्धिरित्यनुवृत्तौ-

विष्णुः।

गुडादीनामिक्षुविकाराणां प्रभूतानां वाय्वग्निदानेन, सर्वलवणानां च तथा, द्रव्यवत्कृतशौचानां देवतार्चानां भूयः प्रतिष्ठापनेन। असिद्धार्थस्य यावन्मात्रमुपहतं तावन्मात्रं परित्यज्य शेषस्य कण्डनक्षालने कुर्यात्।

देवतार्चा=देवप्रतिमा। तस्या अस्पृश्यादिस्पृष्टायाः प्रकृतिद्रव्यस्य ताम्रादेर्यथोक्तं शौचं कृत्वा पुनः प्रतिष्ठापनेन शुद्धिः पूजार्हत्वमित्यर्थः।

देवलः।

सर्वद्रवाणां पक्वानां लवणस्य गुडस्य च।
नान्यच्छौचं परित्यागादशुद्धानामिति स्थितिः॥
तोयाभावेऽपरस्पर्शे भूमिसंवेशनेऽपि च।
कुण्डिकायाः परित्यागो दहनं चापदि स्मृतम्॥

कुण्डिका=कमण्डलुः। तस्याश्च तोयहीनाया अशुचिस्पृष्टाया अशुद्धभूमिधृतायाश्च परित्यागः। कुण्डिकान्तरालाभे दग्ध्वा ग्राह्या। शुचिरित्यनुवृत्तौ-

सुमन्तुः।

गोवालरज्वा पुष्पफलानामन्यत्र शकुनोच्छिष्टेभ्यस्तेषामदोषः।

शङ्खलिखितौ।

आकरस्थद्रव्याणि च प्रोक्षितानि शुचीन्याकरजातानां स्वद्रव्य-

हरणीयानां घृतेनाभिप्लावितानां शुद्धिर्नैवं स्नेहानां स्नेहवद्रसानां मृद्भिरद्भिर्द्रवाणामुत्पवनं शुष्काणामुद्धूननदोषाणां संस्कारः परिप्लावितानां दोषेणात्यन्तस्त्यागः ।

मनुः ।

यावन्नापैत्यमेध्याक्तो गन्धो लेपश्च तत्कृतः ।
तावन्मृद्वारि चादेयं सर्वासु द्रव्यशुद्धिषु ॥

वृद्धशातातपः ।

अशुचिः संस्पृशेद्यस्तु एक एव स दुष्यति ।
तं स्पृष्ट्वान्यो न दुष्येत सर्वद्रव्येष्वयं विधिः ॥
संहतानां तु पात्राणां यद्येकमुपहन्यते ।
तस्य तच्छोधनं प्रोक्तं न तु तत्स्पृष्टिनामपि ।

अत्राशुचिस्पृष्टस्पर्शेऽशौचनिषेधश्चाण्डालादिस्पृष्टस्पर्शादन्यत्र । चाण्डालाद्यस्पृष्टस्पर्शे यथायथं स्नानाचमनादेरुक्तत्वात् ।

अथात्यन्तोपहतशुद्धिः ।

तत्र बौधायनः ।

अतैजसानामत्यन्तोपहतानां त्यागः । एष च त्यागो विष्णुकमणिमयादिभाजनेतरस्य । तथा च—

विष्णुः ।

शारीरैर्मलैः सुराभिर्मद्यैर्वा यदुपहतं तदत्यन्तोपहतम् । अत्यन्तोपहतं सर्वंलौहभाण्डमग्नौ प्रतप्तं विशुद्ध्येत् । मणिमयमश्ममयमब्जमयं च सप्तरात्रं महीखननेन । दन्तशृङ्गास्थिमयं च तक्षणेन, दारवं मृण्मयं च जह्यात् । अत्यन्तोपहतस्य वस्त्रस्य यत् प्रक्षालितं सद् विरज्यते तच्छिन्द्यात् । लौहभाण्डं=सुवर्णाद्यष्टमयधातुभाजनमिति रत्नाकरः । सुरा गौडी पैष्टी माध्वी त्रिविधा, तदितरत्सुरा मद्यम् । शारीराणि मलानि द्वादशविधानि वसादीनि ।

शङ्खः ।

मद्यैर्मूत्रपुरीषैश्च श्लेष्मपूयाश्रुशोणितैः ।
संस्पृष्टं नैव शुद्ध्येत पुनः पाकेन मृण्मयम् ॥
एतैरेव तथा स्पृष्टं ताम्रसौवर्णराजतम् ।
शुद्ध्यत्यावर्तिते पश्चादन्यथा केवलाम्भसा ॥

अत्र तैजसे व्यवस्था प्रथममेव दर्शिता ।

देवलः ।

दूषितं वर्जितं दुष्टं कश्मलं चेति लिङ्गिनाम् ।

चतुर्विधममेध्यं च सर्वं व्याख्यास्यते पुनः ॥

लिङ्गिनाम्=आश्रमिणामित्यर्थः ।

शुच्यप्यशुचिसंस्पृष्टं द्रव्यं दूषितमुच्यते ।
अभक्ष्यभोज्यपेयानि वर्जितानीह चक्षते ॥
त्यक्तः पतितचाण्डालौ ग्रामकुक्कुटशूकरौ ।
श्वा च नित्यं विवर्ज्याः स्युः षडेते धर्मतः समाः ॥
सव्रणः सूतिका सूती मत्तोन्मत्तरजस्वलाः ।
मृतबन्धुरशुद्धश्च वर्ज्यान्यष्टौ स्वकालतः ॥

सूतिका=प्रसूतिका । अशुद्धः=पुरीषादिना ।

स्वेदाश्रुबिन्दवः फेनो निरस्तं नखलोम च ॥
आर्द्रचर्मासृगित्येतद् दुष्टमाहुर्मनीषिणः ।
मानुषास्थि शवो विष्ठा रेतो मूत्रार्त्तवानि च ॥
कुणपं पूयमित्येतत्कश्मलं समुदाहृतम् ।
दूषितैः प्रोक्षणेनापि शुद्धिरुक्ता विधानतः ॥
दुष्टैर्मार्जनसंस्कारैः कश्मलैः सर्वथा भवेत् ।

दुष्टैः सम्बन्धे कश्मलैः सम्बन्धे च द्रव्यमार्जनसंस्कारैः शुद्धिरित्यर्थः । संस्कारास्तु तत्रतत्रोक्ताः । इति तैजसादिद्रव्यशुद्धिः ।

अथ पक्वान्नशुद्धिः ।

स्मृत्यन्तरे ।

शुक्तानि हि द्विजोऽन्नानि न भुञ्जीत कदाचन ।
प्रक्षालयित्वा निर्दोषाण्यापद्धर्मो यदा भवेत् ॥

शुक्तानि=स्वभावमधुराणि कालक्रमादत्यम्लतां प्राप्तानि यदा स्यादापद्धर्मोऽन्यान्नासम्भवः, तदा तानि प्रक्षालनैर्निर्दोषताङ्गतानि, भुञ्जीतेत्यध्याहारेणान्वयः ।

मसूरमाषसंयुक्तं तथा पर्युषितं च यत् ।
तत्तु प्रक्षालितं कृत्वा भुञ्जीताभ्यभिघारितम् ॥

माषोऽत्र राजमाषः, मसूरोऽप्यत्राभक्ष्यएव, साहचर्यात् ।

माधो ।

पक्कमन्नं गवाघ्रातं मक्षिकाकेशदूषितम् ।
छागघ्रातं च तत् कृत्वा शोध्यं रत्नाम्बुभिः सह ॥

गवाघ्रातादिकमन्नं छागघ्रातं कृत्वा रत्नाम्बुभिः सहितं सत् शुध्यतीत्यर्थः ।

श्वशूकरखरोष्ट्रैश्च यदालीढं च जम्बुकैः ।
अन्नं विहाय तत्पश्चात्संस्पर्शं ममथाग्निना ॥

छागघ्रातं ततः शुद्धं स्यात्क्षेमजलसंयुतम् ।
भुञ्जतश्चापि यच्चान्नं मक्षिकाकेशदूषितम् ।
रजःपिपीलिकाजुष्टं यच्च स्पृष्टमवक्षुतैः ॥
तदन्नं तु विहायैव शेषं क्षाराम्बुभिः शुचिः ।

यमः ।

मक्षिकाकेशमन्नेषु पतितं यदि दृश्यते ।
मूषकस्य पुरीषं वा क्षुतं यच्चावधूनितम् ॥
भस्मनास्पृश्य चाश्नीयादभ्युक्ष्य सलिलेन वा ।

क्षुतं=यस्योपरि छिक्का कृता । अवधूनितं मुखदवातोपहतं भस्मना सलिलेन वेति वाशब्दः समुच्चये, वाक्यान्तरैक्यात्, तेन भस्मजलाभ्यां स्पृष्टं शुद्धमितीत्यर्थः । तथा स एव—

अवक्षुतं केशपतङ्गकीटैरुदक्यया वा पतितैश्च दृष्टम् ।
अलातभस्माम्बुहिरण्यतोयैः संस्पृष्टमन्नं मनुराह भोज्यम् ॥

अवक्षुतं=यदुपरि छिक्का कृता तत् । पतङ्गकीटकैः, दूषितमिति शेषः । उदक्या=रजस्वला अलातभस्मेति शुद्धस्थानभस्मोपलक्षणम् । तथा—

वाक्प्रशस्तानि भुञ्जीत वाग्दुष्टानि विवर्जयेत् ।
शुचीनि ह्यन्नपानानि वाक्पूतानि न संशयः ।

तथा—

मक्षिका दंशमशका घुणाः सूक्ष्माः पिपीलिकाः ।
आमिषामेध्यसेवी च नैते कीटा विपत्तये ॥

आमिषामेध्यसेवी=शटितमांसोद्भवः कीटः । एते कीटा न विपत्तये अन्नदोषाय न भवन्तीत्यर्थः ।

मनुः—

पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् ।
दूषितं केशकीटैश्च उत्क्षेपणैव शुध्यति ।
अत्र पक्षिशब्दो भक्ष्यपक्षिपरः ॥

याज्ञवल्क्यः—

गोघ्रातेऽन्ने तथा केशमक्षिकाकीटदूषिते ।
मृज्जलम सलिलं वापि प्रक्षेप्तव्यं विशुद्धये ॥

इदन्तु बोध्यम् । पाकोत्तरं केशकीटादिदूषितमेव मृदादिभिः शुध्यति । तैः सह पक्वं तु त्याज्यम् ।

एतदभिप्रायकमेव नित्यमभक्ष्यं केशकीटावपन्नमिति गौतमवाक्यमिति ।

शातातपः ।

केशकीटगवाघ्रातं वायसोपहतं च यत् ।
क्लीबाभिशस्तपतितैः सूतिकोदक्यनास्तिकैः ।
दृष्टं वा स्याद्यदन्नं तु तस्य निष्कृतिरुच्यते ॥
अभ्युक्ष्य किञ्चिदुद्धृत्य भुञ्जीताप्यविशङ्कितः ।
भस्मना वापि संस्पृश्य संस्पृशेदुदकेन वा ।
सुवर्णरजताभ्यां वा भोज्यं स्नातमजेन च ॥

बौधायनः ।

त्वक्केशलोमनखाखुपुरीषाणि दृष्ट्वा तद्देशपिण्डानुद्धृत्याद्भिरभ्युक्ष्य भस्मनावकीर्याभिघार्य पुनरपि प्रोक्ष्य वाचा प्रशस्तमुपभुञ्जीत । सिद्धहविषां महतां श्ववायसप्रभृत्युपहतानां तद्देशे पिण्डमुद्धृत्य पवमानः सुवर्जनइत्येतेनानुवाकेनाभ्युक्षणम् । मधूदके पयोविकारे च पात्रात्पात्रान्तरनयने न शौचम् । एवं तैलसर्पिषी । उच्छिष्टसमन्वारब्धेतूदके चोपघायोपयोजयेत् ।

उशनाः ।

अजाघ्राणेनाद्यानां स्नेहघृतलवणमधुगुडानां पुनः पाकेन ।

अद्यानाम्=अदनीयानामन्नानामित्यर्थः ।

मनुः ।

देवद्रोण्यां विवाहे च यज्ञेषु प्रकृतेषु च ।
काकैः श्वभिश्च यत् स्पृष्टं तदन्नं नैव दुष्यति ।
तन्मात्रमन्नमुद्धृत्य शेषं संस्कारमर्हति ॥
घनानां प्रोक्षणाच्छुद्धिर्द्रव्याणामभितापनात् ।
संस्पर्शनाच्छुद्धिरपां गवामग्रघ्रानस्य च ॥
छागेन प्रथमं स्पृष्टं शुचित्वेन विनिर्दिशेत् ।

देवद्रोणी=देवयात्रा । प्रकृतेषु=उत्सवेषु ॥

अत्र देवयात्रादिकं द्रोणाढकाधिकसाध्यकर्मोपलक्षकम् । तथा ।

पराशरे ।

काकश्वानावलीढं तु गवाघ्रातं खरेण वा ।
स्वल्पमन्नं त्यजेद्विप्रः शुद्धिर्द्रोणाढके भवेत् ॥

द्रोणो धान्यषु, निर्धन आढकः, तत्र यथायथं द्रोणादाढकाच्च स्वल्पमन्नं काकादिभिरवलीढं त्यजेत् । द्रोणाढकाधिके तु विवक्षिता शुद्धिर्भवति । शुद्धिमाह तत्रैव—

अन्नस्योद्धृत्य तन्मात्रं यच्च लालाकृतिर्भवेत् ।

सुवर्णोदकमभ्युक्ष्य हुताशनेन तापयेत् ॥
हुताशनेन संस्पृष्टं सुवर्णसलिलेन च ।
विप्राणां ब्रह्मघोषेण भोज्यं भवति तत्क्षणात् ॥

तस्यान्नस्य यावद्भागे स्पर्शसम्भावना तावद्भागं दूरीकृत्यावशिष्टेऽपि यावति लालास्पर्शः सम्भावितस्तावदुद्धृत्य शेषं सुवर्णसंयुक्तोदकप्रोक्षितं वह्निशिखास्पृष्टं पवमानसूक्तादिनिर्घोषेण संस्कृतं भुञ्जीत ।

देवलः ।

भक्तधान्यादिराशीनामेकदेशस्य दूषणे ।
तावन्मात्रं समुद्धृत्य शेषं प्रोक्षणमर्हति ॥

भक्तराशिः=द्रोणाधिकः ।

विष्णुः ।

द्रोणादभ्यधिकं सिद्धमन्नं न दुष्यति । तस्योपहतमपास्य गायत्र्यभिमन्त्रितं सुवर्णाम्भः क्षिपेत् । बस्तस्य दर्शयेदग्नेश्च ।

बस्तः=छागः ।

यमदग्निरपि ।

शृतान्नं द्रोणमात्रस्य श्वकाकाद्युपघातितम् ।
ग्रासमुद्धृत्याग्नियोगात् प्रोक्षणं तत्र शोधनम् ॥
अन्नमेकाढकं पक्वं श्वकाकाद्युपघातितम् ।
केशकीटावपन्नं च तदाप्येवं विशुद्ध्यति ॥
क्रीतस्यापि विनिर्दिष्टं तद्वदेव मनीषिभिः ॥ इति ।

शातातपोऽपि—

केशकीटशुना स्पृष्टं वायसोपहतं च यत् ।
क्लीबाभिशस्तपतितैः सूतिकोदक्यनास्तिकैः ॥
दृष्टं वा स्याद्यदन्नं तु तस्य निष्कृतिरुच्यते ।
अभ्युक्ष्य किञ्चिदुद्धृत्य तद् भुञ्जीत विशेषतः ॥
भस्मना वापि संस्पृश्यं संस्पृशेदुल्मुकेन वा ।
सुवर्णरजताभ्यां वा भोज्यं स्नानमजेन वा ॥ इति ।

हारीतोऽपि—

श्वकाकगृध्रोपघाते केशकीटपिपीलिकादिभिश्चाद्युपघाते काञ्चनभस्मरजतताम्रवज्रवैदूर्यगोवालाजिनदर्भाणामन्यतमेनाद्भिः संस्पृष्टमन्त्रप्रोक्षणपर्यग्निकरणादित्यदर्शनाच्छुद्धं भवतीति । द्रोणाढकयोः परिमाणमाह ।

पराशरः—

वेदवेदाङ्गविद्विप्रैर्धर्मशास्त्रानुपालकैः ।
प्रस्था द्वाविंशतिर्द्रोणः स्मृतो द्विप्रस्थ आढकः ॥ इति ।

मनु—

भविष्यपुराणे—

पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम् ।
चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः ॥
आढकैश्च चतुर्भिश्च द्रोणस्तु कथितो बुधैः ।
कुम्भो द्रोणद्वयं प्रोक्तं खारी द्रोणास्तु षोडश ॥ इति ।

तद्देशाभेदादविरुद्धम् ।

बृहस्पतिः—

तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति ॥
आपद्यपि च कष्टायां तृड्भये पीडने सदा ।
मातापित्रोर्गुरोश्चैव निदेशे वर्त्तनात्तथा ॥

स्पृष्टास्पृष्टिरिति । अस्पृष्टिरस्पृश्यं स्पृष्टमस्पृष्टिर्येनेति च बहुव्रीहिः । तेन तीर्थादावस्पृश्यस्पर्शने नाचमनस्नानादि । एवं च यत्र स्पर्शे न दोषस्तत्र दर्शनेऽपि सुतरां तथा । अत एव तीर्थादौ श्वकाकादिदर्शने ऽप्यनुपहतत्वमुक्तम् ।

देवलः—

द्रव्याणामवशिष्टानां तोयाग्निभ्यां विशोधनम् ।
शोधनार्थं तु सर्वेषां उभयैर्ब्राह्मणैः स्मृतम् ॥
श्वपाको यत् स्पृशेद् द्रव्यं मृण्मयं द्रव्यमेव च ।
पक्वं वा भोज्यकल्पं वा तत्सर्वं परिवर्जयेत् ॥
उच्छिष्टाशुचिभिः स्पृष्टमद्रवं शोध्यतेऽम्भसा ।
द्रवं वापि प्रभूतं च शोधयेत प्रोक्षणादिभिः ॥

भोज्यकल्पं=अर्द्धपक्वम् । उच्छिष्टाशुचिभिः । उच्छिष्टत्वेनाशुचिभिः ।

यमः ।

आममांसघृतं क्षौद्रं स्नेहाश्च फलसम्भवाः ।
म्लेच्छभाण्डगता द्रव्या निष्क्रान्ताः शुचयः स्मृताः ।

एतच्चाकरभाण्डविषयम् । अनाकरे द्रोणाधिकाञ्चोपसेचनयोग्यघृतादिविषयम् । ततो न्यूनस्यापि देशकालाद्यपेक्षया अपणादिभिः शुद्धिः । तथा च—

बौधायनः ।

देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत् ॥
तत्रैवाधारदोषे तु नयेत्पात्रान्तरं द्रवम् ।
घृतं च पायसं क्षीरं तथैवेक्षुरसो गुडः ॥
शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति ।

मिताक्षरायाम् ।

मधुघृतादेर्वर्णापसदहस्तात् प्राप्तस्य पात्रान्तरे नयनं पुनः पचनं च कार्यम् । यथा—

शङ्खः ।

आकरजानां त्वभ्यवहरणीयानां घृताभिघारितानां शुद्धिः । पुनः पचनमेव स्नेहानां स्नेहवद्रसानाम् ।

शातातपः ।

गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः ।
अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च ।

अमीमांस्यानि शौचाशौचभागितया न विचारणीयानि । कन्दुशाला= भर्जनशाला । अत्र कुण्डशालायामिति निर्णयामृते । कुण्डशाला=यज्ञशाला । बालः=पञ्चवर्षाभ्यन्तरवयस्कः । निर्णयामृते—

शङ्खः ।

निर्यासानां गुडानां च लवणानां तथैव च ।
कुसुम्भकुङ्कुमानां च ऊर्णाकार्पासयोस्तथा ॥
शोषात्तु कथिता शुद्धिरित्याह भगवान् यमः ।

निर्यासा=हिङ्गुप्रभृतयः । इदमल्पपरिमाणविषयम् । बहुपरिमाणे तु—

बौधायनः ।

बहूनां कुसुम्भकार्पासगुडलवणसर्पिषां कठिनीभूतानां चाण्डालादिस्पर्शे प्रोक्षणेनैव शुद्धिः । अत्यल्पत्वे त्याग एव । पारिजाते—

आदिपुराणे ।

गृहदाहे समुत्पन्ने दग्धे च पशुमानुषे ।
अभोज्यस्तद्गतो व्रीहिर्धान्यद्रव्यस्य संग्रहः ॥
मृण्मयेनावरुद्धानामधोभुवि च तिष्ठताम् ।
यवमाषतिलादीनां न दोषं मनुरब्रवीत् ॥
ततः संक्रममाणेऽग्नौ स्थाने स्थाने च दह्यते ।
न च प्राणिवधो यत्र केवलं गृहदीपनम् ॥

तत्र द्रव्याणि सर्वाणि गृह्णीयादविचारयन् ।

शातातपः ।

घृतं च पायसं क्षीरं तथैवेक्षुरसो गुडः ।
शूद्रभाण्डगतं तक्रं तथा मधु न दुष्यति ॥

पायसं=दध्यादि । विकारार्थे तद्धितविधानादिति कल्पतरुपारिजातरत्नाकरप्रभृतयः । यत्तु दुग्धसाधितमन्नं पायसमिति तन्न । तद्वाचित्वे पुल्लिङ्गस्यैवासाधुत्वात् । "परमान्नं तु पायसम्" इत्यमरकोशाद् ।

वसिष्ठः ।

द्रवाणां प्लावनेनैव घनानां प्रोक्षणेन च ।
छागेन मधु संस्पृष्टमन्नं तच्छुचितामियात् ॥

द्रवाणां प्लावनेनेति गोरसविषयम् । यदाह ।

शङ्खः ।

श्रपणं घृततैलानां प्लावनं गोरसस्य च ।
भाण्डानि प्लावयेदद्भिः शाकमूलफलानि च ॥

घृतादीनामपि श्रपणासम्भवे प्लावनं कार्य्यम् ।

वृद्धशातातपः ।

तापनं घृततैलानां प्लावनं गोरसस्य तु ।
तन्मात्रमुद्धृतं शुध्येत् कठिनं तु पयो दधि ।
अविलीनं तथा सर्पिर्विलीनं श्रपणेन तु ॥

ब्रह्मपुराणे ।

द्रवद्रव्याणि भूरीणि परिप्लाव्यानि चाम्भसा ।
सस्यानि व्रीहयश्चैव शाकमूलफलानि च ॥
त्यक्त्वा तु दूषितं भागं प्लाव्यान्यथ जलेन तु ।

बौधायनः ।

मधूदके पयोविकारे पात्रात्पात्रान्तरनयनेन शौचम् । एवं तैलसर्पिषी । उच्छिष्टसमन्वारब्धे तूदके चोपधायोपयोजयेत् ।

एवमिति पात्रात्पात्रान्तरनयनमतिदिश्यते । उदके चोपधायेति उदके प्रक्षिप्योद्धृत्योपयोजयेत् ।

तदियमत्र व्यवस्था । कठिनघृतादीनां यदंश उपघातस्तदंशं दूरीकृत्य प्रोक्षणेन शुद्धिः । अकठिनानां तु श्रपणम् । उच्छिष्टादिसम्बन्धे जलेन प्लावनं कार्यमिति । मिताक्षरायां तु प्लावो द्रवस्येति याज्ञवल्कीयाद् द्रवद्रव्यस्य घृतादेः प्रस्थप्रमाणाधिकस्य काकश्वाद्युपहतस्यामेध्यसंस्पृष्टस्य प्लावः प्लावनं समानजातीयद्रवद्रव्येण भाण्डस्याभिपूरणम् । यावन्निःसरणं शुद्धिः, अल्पस्य तु त्याग एव ।

अल्पं च देशकालाद्यपेक्षया "देशं कालं तथाऽऽत्मान"मिति वचनादित्युक्तम् । कीटाद्युपहतस्य तूत्पवनम् । यथाह—

मनुः ।

द्रवाणां चैव सर्वेषां शुद्धिरुत्पवनं स्मृतम् ।

उत्पवनं=वस्त्रान्तरितपात्रप्रक्षेपेण कीटाद्यपनयनमित्युक्तम् ।

अथ देहशुद्धिः ।

तत्र याज्ञवल्क्यः ।

कालोऽग्निः कर्म मृद्वायुर्मनो ज्ञानं तपो जलम् ।
पश्चात्तापो निराहारः सर्वेमी शुद्धिहेतवः ॥
अकार्यकारिणां दानं वेगो नद्याश्च शुद्धिकृत् ।
शोध्यस्य मृच्च तोयं च सन्न्यासो वै द्विजन्मनाम् ॥
तपो वेदविदां क्षान्तिर्विदुषां वर्ष्मणो जलम् ।
तपः प्रच्छन्नपापानां मनसः सत्यमुच्यते ॥
भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञानं विशोधनम् ।
क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ॥

कालो=दशाहादिर्ब्राह्मणादीनाम् । अग्निः=स्पर्शादिद्वारा । कर्म=सन्ध्योपासनादि । मृत्तिका=अशुच्यालिप्तानाम् । वायुः=प्राणायामादिगोचरः । मनः=सङ्कल्पविकल्पात्मकम्, विचिकित्सितानाम् । यथा "मनःपूतं समाचरे"दिति । ज्ञानम्=आत्मश्रवणमननादिरूपम्, बुद्धिरूपाऽन्तःकरणस्य । पश्चात्तापः=कृते पापेऽनुशयः । वेग इति शवाद्यशुद्धद्रव्यसंसर्गिण्या अपि नद्यास्तद्रसगन्धविरहिणि देशान्तरे वेगवशात् शुद्धिर्न तु कूपादिवत्सर्वत्राशुद्धिरिति । निराहारः=आहारनिवृत्तिः । शोध्यस्य=शुक्राद्युपहतस्य शरीरादेः । संन्यास इति=किञ्चित्पापवतो ब्राह्मणस्य संन्यासः शुद्धये न तु पतितस्यापि, अनधिकारात् । तप इति="वेदाभ्यासो हि विप्राणां विशेषात्तप उच्यते" इति दक्षवचनाद्विप्राणां वेदाभ्यासोऽसाधारणशुद्धिहेतुः । कृच्छ्रादिकं तु सर्वसाधारणमित्यर्थः । अप्रख्यातपापानां तपः, गायत्र्यादिजप इति कलिका । क्षान्तिः=अपकारिण्यप्यनपकारिबुद्धिः । विदुषां=पण्डितानाम् । वर्ष्मणः=स्वेदादिमतो देहस्य । तपः=कृच्छ्रचान्द्रायणादि । सत्यम्=असत्यभाषणनिवृत्तिः । भूतात्मनः=शरीरस्य । तपोविद्ये=उपवासादिवेदाभ्यासौ । बुद्धेः=अध्यवसायलक्षणाया विपर्ययज्ञानोपहताया यथार्थज्ञानेन नैर्मल्यम् । क्षेत्रज्ञस्य=जीवात्मनः । ईश्वरः=परमात्मा ।

मनुविष्णू ।

ज्ञानं तपोऽग्निराहारो मृन्मनो वार्युपाञ्जनम् ।
वायुः कर्मार्ककालौ च शुद्धेः कर्तॄणि देहिनाम् ॥
सर्वेषामेव शौचानामर्थशौचं परं स्मृतम् ।
योऽर्थे शुचिर्हि स शुचिर्न मृद्वारिशुचिः शुचिः ॥
क्षान्त्या शुध्यन्ति विद्वांसो दानेनाकार्यकारिणः ।
प्रच्छन्नपापा जप्येन तपसा वेदवित्तमाः ॥
शोध्यं शुध्यति मृत्तोयैर्नदी वेगेन शुध्यति ।
रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमः ॥
अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति ।
विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति ॥

ज्ञानम्=आध्यात्मिकं सांख्ययोगोपदिष्टम् । तपः=कृच्छ्रादि । आहारः=पवित्रतमभूत्पन्नयावकादेः । मनः स्वसङ्कल्पद्वारेण शुद्धिकारणम् । उपाञ्जनम्=गोमयलेपनादि । कर्म्म=सन्ध्योपासनादि । अर्थशौचं निषिद्धोपायेन धनग्रहणाभावः । परं प्रकृष्टं स्मृतं मन्वादिभिः । अतो हेतो योऽर्थे शुचिः स एव शुचिः, अर्थेऽशुचिः पुनर्मृद्वारिशुद्धोऽप्यशुद्ध एवेत्यर्थः । शोध्यम्=मलाद्युपहतं शोधनीयम् ताम्रादि । नदी वेगेन रजसा आर्त्तवेन मनो दुष्टा=परपुरुषाभिलाषमापन्नवती । संन्यासेन=चतुर्थाश्रमग्रहणेन । भूतात्माऽत्र जीवः ।

यमः ।

सत्यं शौचं तपः शौचं शौचमिन्द्रियनिग्रहः ।
सर्वभूतदया शौचमद्भिः शौचं च पञ्चमम् ॥

बृहस्पतिः—

परापवादाश्रवणं परस्त्रीणामदर्शनम् ।
एतच्छौचं श्रोत्रदृशोर्जिह्वाशौचमपैशुनम् ॥
अप्राणिवधमस्तेयं शुचित्वं पादहस्तयोः ।
असंश्लेषः परस्त्रीणां शारीरं शौचमिष्यते ॥

अप्राणिवधः=प्राणिनामहतिः शौचमित्यर्थः ।

तथा—

गात्राण्यद्भिर्विशुध्यन्ति मनः सत्येन वाग् धिया ।
भूतात्मा तपसा बुद्धिर्ज्ञानेन क्षमया बुधः ॥

बृहस्पतिः—

गात्रं मृज्जमला शुध्येत् चित्तं भूताभिशंसनात् ।
विद्यया तपसा देही मतिर्ज्ञानेन शुध्यति ॥

स्वाध्यायेनानुतापेन होमेन तपसैनसः ।
ध्यानेन क्षेत्रवासेन दानेनांहः परिक्षयः ॥

भूताभिशंसनमेनसः परिक्षय इत्यन्वयः ।

वशिष्ठः ।

कालोऽग्निर्मनसस्तुष्टिरुदकान्यवलेपनम् ।
अविज्ञातं च भूतानां षड्विधा शुद्धिरिष्यते ॥

अविज्ञातं यस्योपघातहेतुसम्बन्धो न ज्ञातस्तद्द्रव्यमविज्ञातम् ।

अथ प्रक्षालनादिशुद्धिः ।

तत्राङ्गिराः ।

ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते ।
तत्र स्नानमधस्तात्तु क्षालनेनैव शुद्ध्यति ।
इन्द्रिये च प्रविष्टं स्यादमेध्यं यदि कुत्र चित् ।
मुखेऽपि संस्पर्शगतं तत्र स्नानं विशोधनम् ॥

ऋष्यशृङ्गः ।

मद्यविण्मूत्रविप्रुड्भिः संस्पृष्टं मुखमण्डलम् ।
मृत्तिकागोमयैर्लेपात् पञ्चगव्येन शुद्ध्यति ॥

विप्रुषो निरोमक्लेदनसमर्था मुखजलबिन्दवः ।

शातातपः ।

रजकः चर्मकृच्चैव व्याधजालोपजीविनौ ।
चेलनिर्णेजकश्चैव नटः शैलूषकस्तथा ॥
मुखेभगस्तथा श्वा च वनिता सर्ववर्णगा ।
चक्री ध्वजी वध्यघाती ग्रामकुक्कुटशूकरौ ॥
एभिर्यदङ्गं स्पृष्टं स्याच्छिरोवर्जं द्विजातिषु ।
तोयेन क्षालनं कृत्वा ह्याचान्तः शुचितामियात् ॥

रजको=वस्त्ररञ्जनकर्ता । नटो=नर्तकः । शैलूषको=नाटकाद्यभिनेता । मुखेभगो=मुखयोनिरिति प्रसिद्धः । चक्री=तैलिकः । ध्वजी=शौण्डिकः । वध्यघाती=चौरादिवधे नियुक्तः । ग्रामपदमुभयान्वितम् । अत्र शिरःशब्देन नाभेरूर्ध्वं लक्ष्यते ।

पैठीनसिः ।

उच्छिष्टरेतोविण्मूत्रं संस्पृश्यान्मृज्याचम्य प्रयतो भवति त्रिः प्रक्षाल्य च देहम् । अत्र त्रिःप्रक्षाल्याचम्य प्रयतो भवतीत्यन्वयः ।

देवलः ।

उच्छिष्टं मानवं स्पृष्ट्वा भोज्यं चापि तथाविधम् ।

तथैव हस्तौ पादौ च प्रक्षाल्याचम्य शुद्ध्यति ॥

तथाविधम्=उच्छिष्टमेव भक्तादि ।

यदम्भः शौचानिर्मुक्तं क्षितिं व्याप्य विनश्यति ॥

प्रक्षाल्याशुचिलिप्तं च संस्पृश्याचम्य शुद्ध्यति ।

शौचजलार्द्रितभूमिं स्पृष्ट्वा मलाद्यशुचिलिप्ताङ्गं च प्रक्षाल्याचम्य शुद्ध्यतीति वाक्यार्थः ।

अथ शारीरं शौचम् ।

हारीतः ।

दुष्टाभिशस्तपतिततिर्य्यगधोवर्णोपहतानां संस्पर्शे श्वासस्वेदपूयशोणितच्छर्दितलालानिष्ठीवितरेणुकर्दमोच्छिष्टजलाविण्मूत्रपुरीषादिभिर्बाह्यशरीरोपघाते निरुपहताभिरद्भिर्मृद्भिर्भस्मगोमयौषधिमन्त्रमङ्गलाचाराविधिप्रयुक्तैर्बाह्यशरीरोपघातात् पूतो भवति ।

दुष्टाः=चाण्डालादयः । आभिशस्तः=पतितत्वादिना । तिर्यग्=अश्वविट्शूकरादिः । अधोवर्णः=असच्छूद्रः । उपहतः=कुष्ठादिरोगवान् । श्वासादयः परकीयाः । तत्रापि—

"स्पर्शनेन प्रदुष्यन्ति वातो गन्धरसाः स्त्रियः ।

स्त्रीणां मुखरसश्चैव गन्धो निःश्वास एव च" ॥

इति वचनात् स्वस्त्रीश्वासादयो न दुष्टाः । औषधी=सर्वौषधी । मङ्गलाचारो=मङ्गलेच्छाचरणं येषां ते सितसर्षपादयः । विधिप्रयुक्तैः=शिष्टप्रयुक्तेन विधिना यथाक्रममनुष्ठितैः । अत्र श्वासाद्यल्पोपघाते मृत्तोयक्षालनोत्तरं भस्मादिष्वेकतरोपादानं शोणिताद्युपघाते तदुत्तरं द्वित्रिचतुर्णां सर्वोपघाते तदुत्तरं सर्वोपादानमिति निबन्धकाराः ।

विष्णुः ।

नाभेरधस्तात् प्रबाहुषु च कायिकैर्मलैरमेध्यैर्वोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्यातन्द्रितः शुद्ध्येत् । अन्यत्रोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य स्नानेन चक्षुष्युपहत उपोष्य स्नात्वा पञ्चगव्येन, दशनच्छदोपहतश्च ।

प्रबाहुः=कफोणिकावधिर्बाह्वोरग्रभागः । मद्यान्याह—

विष्णुरेव ।

मधूत्थमैक्षवं टाङ्कं कौलं खार्जूरपानसम् ॥

मृद्वीकारसमाध्वीकं मैरेयं नारिकेलजम् ।

अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य तु ॥

राजन्यश्चैव वैश्यश्च स्पृष्ट्वा चैतान्न दुष्यतः ॥

मधूत्थं=मधुपुष्पप्रभवम्। ऐक्षवम्=इक्षुरससम्भवम्। टाङ्कं=कपित्थविशेषसम्भवम्। कोली बदरी तद्भवं कौलम्। खार्जूरं=खर्जूरफलभवम्। पानसं=पनसफलभवम्। मृद्वीकारसं=द्राक्षाद्रवजम्। माध्वीकं=मधुजम्। मैरेयं=धातुपुष्पगुडधान्यादिसहितमिति शब्दार्णवे वाचस्पतिः। नारिकेलभवम्=तालफलजं एकादशं पैष्टी च द्वादशं मद्यम्। तदाह—

पुलस्त्यः।

पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम्।
मधूत्थं सैरमारिष्टं मैरेयं नालिकेरजम्।
समानानि विजानीयान्मद्यान्येकादशैव तु।
द्वादशं तु सुरामद्यं सर्वेषामधमं स्मृतम्॥

अत्रैकादशमद्यस्पर्शे ब्राह्मणानामेवाशौचं सुरास्पर्शे क्षत्रियविशोरपीति व्यवस्था। पञ्चगव्येन प्राशितेनेति शेषः। दशनच्छदोपहतः=ओष्ठोपहतः।

ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते।
तत्र स्नानमधस्तात्तु क्षालनेनैव शुद्ध्यति॥
इन्द्रिये च प्रविष्टं स्यादमेध्यं यदि कर्हिचित्।
मुखेऽपि संस्पृश्य गतं तत्र स्नानं विशोधनम्॥

शङ्खः।

रथ्याकर्दमतोयेन ष्ठीवनाद्येन वा पुनः।
नाभेरूर्ध्वं नरः स्पृष्टः सद्यः स्नानेन शुद्ध्यति।

यमः।

सकर्दमं तु वर्षासु प्रविश्य ग्रामसङ्करम्।
जङ्घाभ्यां मृत्तिकास्तिस्रः पद्भ्यां च द्विगुणाः स्मृताः॥

ग्रामसङ्करम्=ग्रामसलिलप्रवाहदेशं सकर्दमं प्रविश्येत्यर्थः। मारुतशुष्ककर्दमादौ त्वदोषः। रथ्याकर्दमतोयानां मारुतेन शुद्धेरुक्तत्वात्।

मनुः।

विण्मूत्रोत्सर्गशुद्ध्यर्थं मृद्वार्यादेयमर्थवत्।
दैहिकानां मलानां च शुद्धिषु द्वादशस्वपि॥
वसाशुक्रमसृङ्मज्जा मूत्रं विट् कर्णविण्नखाः(१)।
श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः॥

विण्मूत्रमुत्सृज्यते येन स विण्मूत्रोत्सर्गः=पाय्वादिस्तस्य शुद्धिरर्थः प्रयोजनं गन्धलेपक्षयादि तत्समर्थम्। कर्णविट्=कर्णमलम्। नखास्तु

(१) घ्राणकर्णविट्। इति मनुस्मृतौ पाठः।

कृत्ता एव मलम् । दूषिका=नेत्रमलम् । अत्र पूर्वषट्के मृद्वारिग्रहणम् । उत्तरषट्के जलमात्रग्रहणम् । तदाह—

बौधायनः ।

आददीत मृदोऽपश्च षट्सु पूर्वेषु शुद्धये ॥
उत्तरेषु च षट्स्वद्भिः केवलाभिर्विशुद्धति ।

पूर्वेषु षट्सु विडन्तेषु ।

गोविन्दराजस्तु मनुबौधायनवचनयोर्दर्शनात् उत्तरषट्केऽपि दैवपि-त्र्याद्यदृष्टकर्मप्रवृत्ते मृदमादद्यान्नान्यदेति व्यवस्थितविकल्पमाहेति कुल्लूकभट्टः ।

देवलः ।

ततः शरीरस्रोतोभ्यो मलविस्यन्दविस्रवात् ।
अन्नादीनां प्रवेशाच्च स्यादशुद्धिर्विशेषतः ॥
पतिताशुच्यमेध्यानां स्पर्शनाच्चाशुचिर्भवेत् ।
स्वप्नाद्वस्त्रविपर्यासात् क्षताद्ध्वपरिश्रमात् ॥
उक्त्वा च वचनं शुक्तमनृतक्रूरमेव वा ।
त्रप्साविद्धां तनुं प्रेक्ष्य दृष्ट्वाचाम्य शुचिर्भवेत् ॥
प्रलेपस्नेहगन्धानामशुद्धौ व्यपकर्षणम् ।
शौचलक्षणमित्याहुर्मृदम्भोगोमयादिभिः ॥
लेपस्नेहे च गन्धे च व्यपकृष्टेषु दूरतः ।
पश्चादाचमनं वापि शौचार्थे वक्ष्यते विधिः ॥

शरीरस्रोतोभ्यः=शरीरच्छिद्रेभ्यः । मलं=द्वादशविधं वसाशुक्रादि । विस्यन्दा=लालादयः । विस्रवो=विशिष्टस्रवणं स्वस्थानात्स्थानान्तर-स्रवणम् । अन्नादिप्रवेशो मुखादिद्वारा । पतितः=पातकी । अशुचि=औपाधि-काशौचवत् द्रव्यम् । अमेध्यं=वक्ष्यमाणम् । शुक्तम=अश्लीलं परुषं च । "शुक्तोऽम्ले परुषेऽपूते व्यक्तं स्फुटमनीषिणा"विति विश्वकोषात् । त्रप्सा= दृढीभूतं श्लेष्मादिमलम् , तेन विद्धां लिप्तां प्रेक्ष्यानुमानादिना ज्ञात्वा, दृष्ट्वा निरीक्ष्य, विधिमाचमनस्येति शेषः ।

विष्णुः ।

पञ्चनखास्थिस्नेहं स्पृष्ट्वा आचमेत् , चाण्डालम्लेच्छभाषणे च । पञ्चनखास्थि=भक्ष्येतरपञ्चनखास्थि ।

बौधायनः ।

नीवीं विस्रस्य परिधायोपस्पृशेत् ।

उपस्पृशेत्=आचामेदित्यर्थः ।

आपस्तम्बः ।

रिक्तपाणिर्वयस उदधस्याप उपस्पृशेत् । शक्तिविषये न मुहूर्त्त-मप्यप्रयतः स्यात् । रिक्तपाणिस्तु रिक्तहस्तो वयसे पक्षिणे उदधस्य पाणिमाचामेदित्यर्थः ।

हारीतः ।

देवनामभिगन्तुकामो आचामेत् । तथा नोत्तरेदनुपस्पृश्य ।

जल पारगमने पूर्वमाचामितव्यमित्यर्थः ।

यमः ।

उत्तीर्योदकमाचाम्यावतीर्याप उपस्पृशेत् ।
एवं स्यात् श्रेयसा युक्तो वरुणश्चैव पूजितः ॥

याज्ञवल्क्यः ।

स्नात्वा पीत्वा क्षुते सुप्ते भुक्ते रथ्योपसर्पणे ।
आचान्तः पुनराचामेद्वासो विपरिधाय च ॥

मन्वङ्गिरोबृहस्पतयः ।

सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतं वचः ।
पीत्वापोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन् ॥

क्षुत्वा=छिक्कां कृत्वेत्यर्थः । अत्र शयनादि कृत्वा द्विराचमनं कर्त्त-व्यम् । वेदाध्ययनपूर्वकाले च द्विराचमनीयमित्यर्थः ।

वायुपुराणे ।

निष्ठीवने तथाभ्यङ्गे तथापादावसेचने ।
उच्छिष्टस्य च सम्भाषादशुच्युपहतस्य च ॥
सन्देहेषु च सर्वेषु शिखां मुक्त्वा तथैव च ।
विना यज्ञोपवीतेन नित्यमेवमुपस्पृशेत् ॥
उष्ट्रवायससंस्पर्शे दर्शने चान्त्यजन्मनाम् ।

निष्ठीवनं=मुखेन श्लेष्मत्यागः । निष्ठीवनादौ कृते आचमनम् । सन्देहेषु चाचमननिमित्तसंशयेषु चाचमनं कर्त्तव्यम् । शिखां मुक्त्वा विना यज्ञोपवीतेनेत्येताभ्यां शिखामोचनस्य यज्ञोपवीतत्यागस्य चाच-मननिमित्तत्वमुक्तं तेन तदुत्तरं पुनः शिखां बध्वा यज्ञोपवीतं च धृत्वा-ऽऽचमनीयमित्यर्थः ।

वशिष्ठः ।

सुप्त्वा भुक्त्वा स्नात्वा पीत्वा रुदित्वा चाचान्तः पुनराचामेत् । भोजनस्यादावप्याचमनं "भोक्ष्यमाणस्तु प्रयतो द्विराचामे"दित्यापस्त-म्बात् ।

मार्कण्डेयपुराणे ।

देवार्चनादिकार्याणि तथा गुर्वभिवादनम् ।
कुर्वन्ति सम्यगाचम्य तद्वदन्नभुजिक्रियाम् ॥

पद्मपुराणे ।

वर्णत्रयस्य संस्पर्शादाचम्य प्रयतो भवेत् ।
संस्पर्शे प्रतिलोमानां क्रियात्यागो विधीयते ॥

तथा—

विप्रो विप्रेण संस्पृष्ट उच्छिष्टेन कथञ्चन ।
आचम्यैव तु शुद्धः स्यादापस्तम्बो ब्रवीन्मुनिः ॥

प्रजापतिः ।

उपक्रमे विशिष्टस्य कर्मणः प्रयतोऽपि सन् ।
कृत्वा च पितृकर्माणि सकृदाचम्य शुध्यति ॥

उपक्रमे=आरम्भे । विशिष्टस्य=विहितस्येत्यपरार्कः ।

संवर्तः ।

चर्मारं रजकं वेणं धीवरं नटमेव च ।
एतान्स्पृष्ट्वा नरो मोहादाचामेत्प्रयतोऽपि सन् ॥

अथाचमनानुकल्पः ।

योगियाज्ञवल्क्यः ।

क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने ।
कर्मस्थ एव नाचामेद्दक्षिणं श्रवणं स्पृशेत् ॥
अग्निरापश्च देवाश्च चन्द्रादित्यानिलास्तथा ।
एते सर्वे तु विप्राणां श्रोत्रे तिष्ठन्ति दक्षिणे ॥

मार्कण्डेयपुराणे ।

कुर्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम् ।
कुर्वीतालम्भनं वापि दक्षिणश्रवणस्य च ॥
यथाविभवतो ह्येतत् पूर्वाभावे ततः परम् ।
अविद्यमाने पूर्वस्मिन्नुत्तरप्राप्तिरिष्यते ॥

पराशरः ।

क्षुते निष्ठीविते चैव दन्तश्लिष्टे तथानृते ।
पतितानां च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ॥

वृद्धशातातपः ।

वातकर्माणि निष्ठीव्य दन्तश्लिष्टे तथानृते ।
क्षुते पतितसम्भाषे दक्षिणं श्रवणं स्पृशेत् ॥

कर्णस्पर्शं च नासास्पर्शपूर्वकमिच्छन्ति । पठन्ति च—

गङ्गा वै दक्षिणे श्रोत्रे नासिकायां हुताशनः ।
उभावपि च पर्ष्टव्यौ तत्क्षणादेव शुद्ध्यति ॥

अथाचमनापवादः ।

तत्रापस्तम्बः ।

न श्मश्रुभिरुच्छिष्टो भवति । अन्तरास्ये शुचिर्यावन्न हस्तेनोपस्पृशति । श्मश्रु मुखान्तःप्रविष्टं श्मश्रुगतलालादिलेपश्च, शुचिर्यावद्धस्तेन न स्पृशति तावदेव, हस्तेन स्पर्शे तु श्मश्रु हस्तं च प्रक्षाल्याचमेत् ।

याज्ञवल्क्यः ।

श्मश्रु चास्यगतं दन्तलग्नं त्यक्त्वा ततः शुचिः ।

आस्यगतं=श्मश्रु शुचि दन्तावकाशस्थितं चान्नावयवादि त्यक्त्वा शुचिः । अत्र त्यागोत्तरमाचमनं कार्यं "भोजने दन्तलग्नानि निर्हृत्याचमनं चरे"दिति देवलीयात् । विशेषमाह—

गौतमः ।

दन्तश्लिष्टेषु दन्तवदन्यत्र जिह्वाभिमर्षणात् प्राक् च्युतेरित्येके । च्युतेष्वास्रावविद्यान्निगिरन्नेव तच्छुचिः । जिह्वाभिमर्षणायोग्यं दन्तलग्नं नाशौचजनकम् । एतच्चानुपलभ्यमानरसविषयम् । "दन्तवद्दन्तलग्नेषु रसवर्जम्" इति शङ्खवाक्यात् । जिह्वाभिमर्षणेऽप्यशक्त्यानुद्धारे न दोषः ।

दन्तलग्नमसंहार्य्यं लेपं मन्येत दन्तवत् ।
न तत्र बहुशः कुर्याद्यत्नमुद्धरणे पुनः ॥
तस्मात्यन्तमशौचं स्यात् तृणवेधाद् व्रणे कृते ॥

इति देवलीयात् । असंहार्य्यं दन्तगतं लेपं दन्तवन्मन्येतेत्यर्थः । च्युतेष्विति यदि दन्तलग्नमाचमनोत्तरं च्यवते तदा स्रावत् लालावत् निगिरन्नेव शुद्ध्यति । तथा च—

वशिष्ठः ।

दन्तवद्दन्तलग्नेषु यच्चाप्यन्तर्मुखे भवेत् ।

यच्चापीति । दन्तच्युतमप्यत्र कणादि यत् प्रमादादवशिष्टमाचमनोत्तरमुपलभ्यते तदपि निगिरन्नेव शुचिरित्यर्थः । अत्र निगिरन् त्यजन्निःत्याचारादर्शः । एतन्मते दन्तसक्तं त्यक्त्वेति याज्ञवल्क्यैकवाक्यता । वस्तुतो निगिरणं गलाधःकरणमेव । इत्थमेव निगिरन्नेवेत्येवकारो भोजनोत्तरप्रसक्ताऽऽचमनव्युदासार्थः साधु सङ्गच्छते । अत एव निगिरणं त्यागो वेति विकल्प इति मिताक्षरा शूलपाणिश्च ।

मनुः ।

स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् ।
भूमिगैस्ते समा ज्ञेया न तैरप्रयतो भवेत् ॥

अन्येषामाचमनार्थं जलं ददतो ये जलबिन्दवः पादौ स्पृशन्ति ते शुद्धभूमिगतोदकैः समास्ते नाचमनावहाः, पादावित्युपादानाज्जङ्घादिस्पर्शे प्रयतत्वमिति कलिकाकुल्लूकभट्टौ ।

यमः ।

प्रयान्त्याचमतां यास्तु शरीरे विप्रुषो नृणाम् ।
उच्छिष्टदोषो नास्त्यत्र भूमितुल्यास्तु ताः स्मृताः ॥

विप्रुषामपि निष्ठीवनत्वात् तत्स्पर्शे आचमनप्रसक्तावपवादमाह—

मनुः ।

नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽङ्गं नयन्ति ताः ।

मुखभवा विप्रुषो या अङ्गं न यन्ति किन्तु भूमौ पतन्ति ताः स्पृष्टा अपि शुचयः । अङ्गगतासु तद्विरोमक्लेदनक्षमास्वाचमनम् ।

तथा च ।

पैठिनसिः ।

भूमिगता बिन्दवः परामृष्टाः पूता विप्रुषः शुद्धाः विरोमक्लिन्नेष्वाचामेत् ।

अङ्गिरसौ ।

मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च ।
नोच्छिष्टस्तु भवेद्विप्रो यथात्रेर्वचनं तथा ॥

प्राणाहुतीषु पञ्चमहाग्रासयाम् । अत्र मधुपर्कादिविहितभक्ष्यपाठादप्सु विहितापोशानादिष्विति कल्पतरुप्रभृतयः । पीत्वाप इति तु विहितेतरजलपाने आचमनविधायकम् । परे तु—अप्स्वाचमनं नारिकेलादिजलविषयम् । अप्सु नोच्छिष्ट इति तदितरजलविषयमित्याहुः ।

विद्याकरपद्धतौ ।

त्वग्भिः पुष्पैः फलैर्मूलैस्तृणकाष्ठमयैस्तथा ।
सुगन्धिभिस्तथान्यैश्च नोच्छिष्टो भवति द्विजः ॥
खर्जूरीतालवर्गञ्च मृणालं पद्मकेसरम् ।
नारिकेलं कसेरुं च नोच्छिष्टं मनुरब्रवीत् ॥
ताम्बूलं च कषायं च सर्वं च जलसम्भवम् ।
मधुपर्कं च सोमं च लवणार्द्रं तथा क्वचित् ॥

आचमनस्याशुचित्वापनायकत्वादुच्छिष्टत्वाभावान्नाचमनं कार्यम् ।

अन्ये तु ।

सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतं वचः ।
पीत्वाऽपोऽध्येष्यमाणश्च आचामेत् प्रयतोऽपि सन् ॥

इति मनुना प्रयतस्यापि नैमित्तिकाचमनविधानादाचमनमावश्यकम् । तथाच—

आचारादर्शः ।

अप्सूच्छिष्टतानिषेधेऽपि पीत्वाप इति नैमित्तिकमाचमनं प्रयतोऽपीति श्रवणाच्चेति ।

अत एव मधुपर्के आचमनं गृह्ये स्मर्यते । अनुच्छिष्टविधानं तु परेषां तत्स्पर्शादावाचमनाभावस्य शूद्रादिस्पर्शेऽधिकदोषाभावस्य तदुत्तरं विनाचमनं कर्मान्तराधिकारस्य च बोधाय । एवं च विहितगङ्गाजलपानाद्दावप्रायत्याभावेऽपि नैमित्तिकमाचमनम् । अत एव भट्टपादैस्ताम्बूलभक्षणोत्तरमनाचमनमनाचार इत्युक्तम् । भोजननिबन्धननैमित्तिकाचमनौचित्यात् । यदि च—

आचामेत् चर्वणे नित्यं मुक्त्वा ताम्बूलचर्वणम् ।
ओष्ठौ विलोमकौ स्पृष्ट्वा वासो विपरिधाय च ॥

इति मिताक्षराशूलपाणिधृतवचनात्ताम्बूलचर्वणेऽनाचमनं तथाप्यन्यत्र तदावश्यकमिति वदन्ति ।

शातातपः ।

दन्तलग्ने फले मूले भक्ष्ये स्नेहे तथैव च ।
ताम्बूले चेक्षुखण्डे च नोच्छिष्टो भवति द्विजः ॥

फले मूले चाग्निपक्वभिन्ने इति रत्नाकरः । फलपदं च धान्यभिन्नफलपरम् । भक्ष्ये=कटुकषाये ।

मनुः ।

उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन ।
अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् ॥

द्रव्यहस्तो–दुग्धादिहस्त एवाचान्तः शुचितां प्राप्नुयादिति रत्नाकरः । द्रव्यमत्रान्नपानव्यतिरिक्तमित्याचारादर्शः ।

बृहस्पतिः ।

प्रचरंश्चान्नपानेषु यदोच्छिष्टमुपस्पृशेत् ।
भूमौ निधाय तद्द्रव्यमाचान्तः प्रचरेत् पुनः ॥

प्रचरन्=परिवेषणं कुर्वाणः । अन्नपानेषु–स्नेहपक्वादिष्विति रत्नाकरः । भूमिनिहितस्य तु तस्य द्रव्यस्याभ्युक्षणम् ।

तथा ।

अरण्येऽनुदके रात्रौ चौरव्याघ्राकुले पथि ।
कृत्वा मूत्रं पुरीषं च द्रव्यहस्तो न दुष्यति ॥
शौचं तु कुर्यात्प्रथमं पादौ प्रक्षालयेत् ततः ।
उपस्पृश्य तदभ्युक्ष्य गृहीतं शुचितामियात् ॥

आपस्तम्बः ।

कृत्वा मूत्रं पुरीषं च द्रव्यहस्तः कथञ्चन ।
भूमावन्नं प्रतिष्ठाप्य कृत्वा स्नानं यथाविधि ॥
तत्संयोगात्तु पक्वान्नमुपस्पृश्य ततः शुचिः । तत्र—

अथ स्नानशुद्धिः ।

तत्र मनुः ।

दिवाकीर्तिमुदक्यां च सूतिकां पतितं तथा ।
शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति ॥
आचम्य प्रयतो नित्यं जपेदशुचिदर्शने ।
सौरान् मन्त्रान् यथोत्साहं पावमानीश्च शक्तितः ॥
नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुध्यति ।

दिवाकीर्तिः=चाण्डालः । उदक्या=रजस्वला । सूतिका=प्रसवोत्तरमप्राप्तसमया । तत्स्पृष्टिनमिति=शवस्पृष्टिनमित्यर्थं इतिकुल्लूकभट्टः । यत्तु तत्स्पृष्टिनमिति तच्छब्देन दिवाकीर्त्यादीनां सर्वेषां परामर्शाद्दिवाकीर्त्यादिस्पृष्टिनमित्यर्थं इति । तन्न । "शवस्पृशं च स्पृष्ट्वे"ति वक्ष्यमाणविष्णुवाक्ये विशिष्याभिधानात् ।

शवस्पृशं दिवाकीर्त्तिं चितिं यूपं रजस्वलाम् ।
स्पृष्ट्वा स्वकामतो विप्रः स्नानं कृत्वा विशुध्यति ॥

इति । मिताक्षराधृतबृहस्पतिवचनाच्च । किञ्चैवं दिवाकीर्त्यादिस्पृष्टस्पर्शे आचमनमात्रविधानं विरुद्धेत् । तथा च—

याज्ञवल्क्यः ।

उदक्याशुचिभिः स्नायात् संस्पृष्टस्तैरुपस्पृशेत् ।
अब्लिङ्गानि जपेच्चैव गायत्रीं मनसा सकृत् ॥

उदक्या रजस्वला । अशुचयः=शवचाण्डालपतितसूतिकाः, शावाशौचिनश्च, एतैः संस्पृष्टः स्नायात्, तैः उदक्याशौचिसंस्पृष्टैः संस्पृष्टस्तु आचामेत् । संस्पृष्ट इत्येकवचनान्तनिर्दिष्टस्य तैरिति बहुवचनान्तेन परामर्शः । परेषामपि स्नानार्हाणां परामर्शार्थं तेन स्नानार्हमात्रस्पर्शे आचमनमुत्सर्गतः सिध्यति । स्नानार्हाश्च वक्ष्यमाणस्मृतिवाक्यैरवगन्तव्याः । आचम्याब्लिङ्गानि "आपो हि ष्ठा" इत्येवमादीनि त्रीणि वाक्या-

नि जपेत्, तथा गायत्रीं सकृन्मनसा जपेत् । एतेन "उदक्याशुचिभिः स्नायात्" इति वृद्धाद्यचेतनव्यवधानस्पर्शविषयम्, चेतनव्यवधानस्पर्शे तु मानवमित्यविरोधात् तत्स्पृष्टिनमिति चाण्डालादिस्पृष्टिनमित्यर्थकमिति दीपकलिकामिताक्षरोक्तं प्रत्युक्तम् ।

एकां शाखां समारूढश्चाण्डालादिर्यदा भवेत् ।
ब्राह्मणस्तत्र निवसन् स्नानेन शुचितामियात् ॥

तादृशस्पर्शेऽपि स्नानविधानाच्च । तस्मान्छवमिश्रोदक्याद्यशुचिस्पृष्टस्पर्शे आचमनम् । शवस्पृष्टस्पर्शे स्नानम् । शवस्पृष्टस्पृष्टस्पर्शे त्वाचमनम् ।

तत्स्पृष्टिनं स्पृशेद्यस्तु स्नानं तस्य विधीयते ।
ऊर्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा ॥

इति संवर्तस्मरणात् । तत्स्पृष्टस्पर्शे न किञ्चित् । इदमकामकृते । कामकृते तु तृतीयस्य स्पर्शेऽपि स्नानमेव । यदाह—

गौतमः ।

पतितचाण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्टयुपस्पृष्ट्युपस्पर्शने सचैलमुदकोपस्पर्शनाच्छुध्येदिति । चतुर्थस्त्वाचमनम् ।

उपस्पृश्याशुचिस्पृष्टं तृतीयं वापि मानवः ।
हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुध्यति ॥

इति देवलीयात् । तृतीयं वेति वाकाराच्चतुर्थसंग्रहः । तत्राकामतस्तृतीयं कामतश्चतुर्थं स्पृष्ट्वाचमनम्। अत्र शवः प्रथमः, तत्स्पृष्टो द्वितीयः, तत्स्पृष्टस्तृतीय इत्यादि बोध्यम् । चाण्डालादिस्पृष्टरश्म्यादिस्पर्शे न दोषः । तथा च—

याज्ञवल्क्यः ।

रश्मिरग्निरजश्छायागौरश्वो वसुधानिलः ।
विप्रुषो मक्षिकाः स्पर्शे वत्सः प्रस्रवणे शुचिः ॥

रश्मयः=सूर्यादेः । रजः=अजाद्यलश्वादिश्वकाकोष्ट्रखरोलूकशूकरग्राम्यपक्षिणाम् । "अजाविरेणुसंस्पर्शादायुर्लक्ष्मीश्च हीयते" । इति तत्र दोषश्रवणात् । छाया=वृक्षादेः ।

पराशरः ।

मार्जारमक्षिकाकीटपतङ्गकृमिदर्दुराः ।
मेध्यामेध्यं स्पृशन्तोऽपि नोच्छिष्टं मनुरब्रवीत् ॥

दर्दुरो=मण्डूकः । तथा पादुकान्तरितामेध्यादिस्पर्शे न दोषः । "पादुके चापि गृह्णीयादस्पृश्यस्पर्शवारणे" इति व्रतप्रकरणस्थवचनात् ।

तथानेकजनसंबाधे दारुशिले अपि भूमिसमे इति वचनादीदृशदारुशि-
लाद्यारकस्पर्शे नाशौचम् । आचारपल्लवे-

मनुः ।

कुण्डे मञ्चे शिलापृष्ठे नौकायां गजवृक्षयोः ।
संग्रामे संक्रमे चैव स्पर्शदोषो न विद्यते ।

अत्र वृक्षस्पर्शे दोषाभावः शाखाभेदेन बोध्यः । "एकशाखा" इत्या-
दिपूर्वलिखितवाक्यात् ।

व्याघ्रपादः ।

चाण्डालं पतितं चैव दूरतः परिवर्जयेत् ।
गोबालव्यजनादर्वाक् सवासा जलमाविशेत् ॥

एतदतिसङ्कटस्थानविषयम् ।

अन्यत्र तु—

बृहस्पतिः ।

युगं च द्विगुणं(१) चैव त्रियुगं च चतुर्युगम् ।
चाण्डालसूतिकोदक्यापतितानामधः क्रमात् ।

स्मृत्यन्तरे ।

स्पृष्ट्वा देवलकं चैव सवासा जलमाविशेत् ।
देवार्चनपरो विप्रो वित्तार्थी वत्सरत्रयम् ॥
असौ देवलको नाम हव्यकव्येषु गर्हितः ।

ब्रह्माण्डपुराणे ।

शैवान् पाशुपतान् स्पृष्ट्वा लोकायतिकनास्तिकान् ।
विकर्मस्थान् द्विजान् शूद्रान् सवासा जलमाविशेत् ॥

मनुः ।

नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुध्यति ।
आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य वा ॥

मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमाशौचमस्निग्धे त्वहोरात्रम् ।

विष्णुः ।

पञ्चनखास्थिस्नेहं स्पृष्ट्वाऽऽचामेच्चाण्डालम्लेच्छसम्भाषणे च ।

अत्र पञ्चनखास्थि=अमानुषभक्ष्येतरपञ्चनखास्थि । तथा—

विष्णुः ।

चिताधूमसेवने सर्वे वर्णाः स्नानमाचरेयुः । मैथुने दुःस्वप्ने वमनवि-
रेकयोश्च श्मश्रुकर्म्मणि कृते च शवस्पृशं स्पृष्ट्वा रजस्वलाचाण्डालयूपां-
श्च । भक्ष्यवर्ज पञ्चनखशवं तदस्थि च सस्नेहं स्पृष्ट्वा स्नातः पूर्ववस्त्रं ना-

---

(१) द्वियुगमिति मिताक्षरायां पाठः ।

प्रक्षालितं बिभृयात् । नाप्रक्षालितं बिभृयादित्येतावता यत्राङ्गे धृते स्पर्शो वृत्तस्तदङ्गं सर्वमक्षालितमशुद्धमिति गम्यते ।

तदियमत्र व्यवस्था । अकामकृते स्निग्धब्राह्मणास्थिस्पर्शे स्नानम्, अस्निग्धतत्स्पर्शे आचमनम्, गोस्पर्शनं च । कामकृते तु स्निग्धास्निग्धब्राह्मणास्थिस्पर्शे स्नानगोस्पर्शसूर्येक्षणविष्णुस्मरणानि । कामकृते स्निग्धब्राह्मणेतरमानुषास्थिस्पर्शे त्रिरात्रम् । अस्निग्धतत्स्पर्शेऽहोरात्रं भक्ष्यपञ्चनखास्थिस्पर्शे न दोषः । अस्निग्धमानुषेतराभक्ष्यपञ्चनखास्थिस्पर्शे आचमनमात्रं विष्णूक्तम् । स्निग्धतत्स्पर्शे तदुक्तमेव स्नानमात्रं कामाकामकृतो विशेषोऽत्रापि कल्प्यः । शिशुबालकुमाराणां विशेषमाह—

शातातपः ।

शिशोरभ्युक्षणं प्रोक्तं बालस्याचमनं स्मृतम् ।
रजस्वलादि संस्पृश्य स्नातव्यं तु कुमारकैः ॥

तथा ।

प्राक्चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः ।
कुमारस्तु स विज्ञेयो यावन्मौञ्जीनिबन्धनम् ॥

मनुः ।

वान्तो विरिक्तः स्नात्वा च घृतप्राशनमाचरेत् ।
आचामेदेव भुक्त्वान्नं स्नानं मैथुनिनः स्मृतम् ॥

वान्तः=कृतवमनः । विरिक्तः=तद्दिनेवृत्तविरेकः, एवं भूतः स्नात्वा घृतं प्राश्य विशुध्यतीत्यर्थः । मिलितस्नैतन्निमित्तम् । मैथुने दुःस्वप्ने वमनविरेकयोरिति विष्णुनाभिधानात् । "स्नानं मैथुनिन" इति ऋतुगमनविषयम् । तथा च—

शातातपः ।

ऋतौ तु गर्भशङ्कायां स्नानं मैथुनिनः स्मृतम् ।
अनृतौ तु सदा कार्य्यं शौचं मूत्रपुरीषवत् ॥
अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्माणि मैथुने ।
दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते ॥

अजीर्णे सति अभ्युदिते सूर्योदयोत्तरं वान्ते स्नानं समुदितमेतन्निमित्तं तेन पर्युषितवान्ते स्नानमित्यर्थ इति कल्पतरुः । केचित्तु—अभ्युदिते वमनोद्गारादिना अभिव्यक्ते अजीर्णे सति तदुत्तरं स्नानम्, वान्त इति पर्युषितवमनपरमित्याहुः । दुर्जनः=चाण्डालादिः । परे तु रूढ्यनुरोधात् दुर्जनः पिशुन इत्याहुः ।

देवलः ।

श्वपाकं पतितं व्यङ्गमुन्मत्तं शवहारकम् ।

सूतिकां सूयिकां(१) चैव रजसा च परिप्लुताम् ॥
श्वकुक्कुटवाराहांश्च ग्राम्यान् संस्पृश्य मानवः ।
सचैलं सशिरः स्नात्वा तदानीमेव शुध्यति ॥
अशुद्धान् स्वयमप्येतानशुद्धस्तु यदि स्पृशेत् ।
विशुध्यत्युपवासेन तथा कृच्छ्रेण वा पुनः ॥

सूयिका=प्रसवकारयित्री । कृच्छ्रेण वा पुनरिति वारं वारं कामकृतस्पर्शविषयमिति मिश्राः । कृच्छ्रः श्वपाकादिविषयः । श्वादिषु तूपवास इति व्यवस्थेति मिताक्षरा ।

तथा ।

मानुषास्थिवसां विष्ठामार्त्तवं मूत्ररेतसी ।
मज्जानं शोणितं वापि परस्य यदि संस्पृशेत् ।
स्नात्वापमृज्य लेपादीनाचम्य स शुचिर्भवेत् ।
तान्येव स्वानि संस्पृश्य पूतः स्यात् परिमार्जनात् ॥

लेपादीनपमृज्य स्नात्वा चेति क्रमः । अत्र वसादीनामपि मानुषलस्वन्धिनामेवोपादानं सन्निहितत्वात् । वसादिस्पर्शश्चात्र नाभेरुपरिस्नानेहतुः ।

ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते ।
तत्र स्नानमधस्तात्तु क्षालनेनैव शुध्यति ॥

इत्यङ्गिरोवचनात् । अधःस्पर्शे तु क्षालनम् ।

बौधायनः ।

शुनोपहतः सचैलो जलमवगाहेत । प्रक्षाल्य वान्तदेशमग्निना संस्पृश्य पुनः प्रक्षाल्य पादौ चाचम्य प्रयतो भवति ।

शुनोपहतः=शुना संस्पृष्टः । अत्र नाभेरूर्ध्वं स्पर्शे स्नानम् । नाभेरधः स्पर्शे प्रक्षालनमाचमनञ्चेति व्यवस्थितो विकल्प इति रत्नाकरः ।

बौधायनः । चाण्डालेन सहाध्वगमने सचैलस्नानम् । इदं च कामकृतविषयम् । चाण्डालस्य मुख्यतया तत्सहगमनविषयमित्यन्य इति रत्नाकरः ।

पराशरः ।

चैत्यवृक्षश्चितिर्यूपश्चाण्डालः सोमविक्रयी ।
एतांस्तु ब्राह्मणः स्पृष्ट्वा सचैलो जलमाविशेत् ।

तथा ।

श्वकाकैरवलीढस्य नखैर्विदलितस्य च ।

---

( १ ) सावित्रिकामिति विज्ञानेश्वरधृतः पाठः । साविका=प्रसवस्य कारयित्रीति मिताक्षरा ।

अद्भिः प्रक्षालनं शौचमग्निना चोपचूडनम् ॥

चैत्यवृक्षः=चितास्थानजो वृक्षः । अवलीढः=रसनया स्पृष्टः । उपचूडनम्= अग्निशिखासंयोगः ।

हारीतः ।

श्वपचमुष्टिकप्रेतहारकमद्यादि संस्पृश्य "देवीराप" इत्येताभिरन्तर्जले स्नातः पूतो भवति ।

श्वपचः । श्वखादकः । प्रेतहारक इति प्रसिद्धः । मुष्टिकः=शवहर इति रत्नाकरः । देवीराप इत्येताः "देवीरापोऽपानपादि"त्याद्याहितस्य भावः । अयं च प्रयोगो वारंवारं स्पर्शे, अन्यथा स्नानमात्रम् । तथा—

अजीर्णवान्तश्मश्रुकर्मायोनिपशुद्विवामैथुनगमने च ।

अजीर्णवान्तः=दिनान्तरे कृतपर्युषितवमनः । श्मश्रुकर्म=क्षौरम् । अयोनिपशुद्विवेत्यत्र मैथुनगमन इति प्रत्येकमभिसम्बध्यते । अयोनि=योनीतरदङ्गम् । ब्रह्मचर्यानुवृत्तौ—

पैठीनसिः ।

स्कन्दने छर्दने सचैलस्नानं घृतप्राशनं च । काककेशमलने सचैलस्नानं घृतप्राशनं च, अनुदकमूत्रपुरीषकरणे सचैलस्नानं महाव्याहृतिहोमः । सस्नेहमस्थि संस्पृश्य सचैलं स्नानं महाव्याहृतिहोमश्च । खरोष्ट्रचाण्डालस्पर्शे सचैलस्नानम् ।

स्कन्दने रेतस इति शेषः । काककेशमलने=काकपक्षमर्दने । अनुदकमूत्रपुरीषकरणे=उदकव्यतिरेकेण मूत्रपुरीषोत्सर्गानन्तरं शौचविलम्बे शौचं कृत्वा सचैलं स्नानं कार्यम् । सस्नेहमिति=कामकृते महाव्याहृतिहोमः । अकामकृते तु ब्रह्मचारिण्यपि मनूक्तस्नानमेव शुद्धिः ।

काश्यपः ।

चाण्डालश्वपचश्मशानसूनामृतहारकरजस्वलासूतिकास्पर्शे उदितेऽस्तमिते स्कन्दित्वाऽक्षिस्पन्दने कर्णक्रोशने चित्यारोहणे यूथस्पर्शने [चैव प्रायश्चित्ते ब्राह्मणेभ्यो निवेद्य] च सचैलं स्नात्वा पुनर्मनोजपेत, महाव्याहृतिभिः समाज्याहुतीर्जुहुयात् , ततः शुद्धिर्भवति ।

अक्षिस्पन्दने=अशुभसूचकादिस्पन्दे "पुनर्मन" इति पुनर्मनः पुनरायुरित्यादि प्रायश्चित्तमिति । एतच्च बुद्धिपूर्वकेऽभ्यासे वा द्रष्टव्यम् ।

मार्कण्डेयपुराणे ।

अभोज्यसूतिकाषण्डमार्जाराखुश्वकुक्कुटान् ।
पतितापविद्धचाण्डालमृतहारांश्च धर्मवित् ॥
संस्पृश्य शुध्यति स्नानादुदक्याग्रामशूकरौ ।

अपविद्धः=कुलबहिष्कृतः। अत्र मार्जारस्पर्शे यत्स्नानमुक्तं तद्यदि पुरुषेण मार्जारः स्पृश्यते तदा ज्ञेयम्। यदि तु मार्जार एव पुरुषं स्पृशति भाण्डादि वा तदा पुरुषादेर्नाशौचं, तद्विषयमेव मार्जारश्च सदा शुचिरिति वचनमिति व्यवस्थेत्याचारादर्शः। स्नानं च मार्जारस्पर्शविषयमित्यन्ये।

च्यवनः।

श्वपाकं प्रेतधूमं देवद्रव्योपजीविनं ग्रामयाजकं यूपं चितिकाष्ठं मद्यं मद्यभाण्डं सस्नेहं मानुषास्थि शवस्पृष्टं रजस्वलां महापातकिनं शवं स्पृष्ट्वा सचैलमम्भोऽवगाह्योत्तीर्याग्निमुपस्पृशेत्, गायत्र्यष्टशतं जपेत्, घृतं प्राश्य पुनः स्नात्वा त्रिराचामेत्। अत्राग्निस्पर्शादिकामकृते वारं वारं स्पर्शे, अन्यथा स्नानमात्रम्।

व्यासः।

भासवानरमार्जारखरोष्ट्राणां शुनां तथा।
शूकराणाममेध्यं च स्पृष्ट्वा स्नायात् सचैलकम्॥

भासो=गोष्ठकुक्कुट इति प्रसिद्धः। "भासो भासः समाख्यातो गोष्ठकुक्कुटवृद्धयोः" इति विश्वकोषात्। अत्रोर्ध्वाङ्गस्पर्शे स्नानम्। नाभेरधोऽङ्गस्पर्शे मृत्तोयाभ्यां प्रक्षालनमाचमनं च। वाक्यान्तरैकवाक्यत्वात्।

कालिकापुराणे।

स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचिः।

निर्माल्यमत्रापनीतम्। एवमेवाऽऽचारादर्शः।

अङ्गिराः।

इन्द्रियेषु प्रविष्टं स्यादमेध्यं यदि कर्हिचित्।
मुखेऽपि संस्पर्शगतं तत्र स्नानं विशोधनम्।

ब्रह्मपुराणे।

उच्छिष्टेनाथ विप्रेण विप्रः स्पृष्टस्तु तादृशः।
उभौ स्नानं प्रकुरुतः सद्य एव विशुध्यतः॥

लघुहारीतः।

श्वविष्ठां काकविष्ठां वा काकगृध्रनरस्य च।
अधोच्छिष्टश्च संस्पृश्य सचैलो जलमाविशेत्॥
ऊर्ध्वोच्छिष्टस्तु संस्पृष्टः प्रायश्चित्तं समाचरेत्।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति॥

अधोच्छिष्टो=मूत्राद्युत्सर्गेणाशुद्धः। ऊर्ध्वोच्छिष्टो=भोजनोच्छिष्टः। जलमाविशेत्=सचैलं स्नायात्। अत्र प्रकरणे सर्वत्र जलमाविशेदित्यादिवाक्यानि वारुणस्नानोपलक्षकानीत्याचारादर्शः।

शङ्खः।

रथ्याकर्दमतोयेन ष्ठीवनाद्येन वा पुनः।
नाभेरूर्ध्वं नरः स्पृष्टः सद्यः स्नानेन शुध्यति॥

अत्र प्रकरणे एषु नैमित्तिकस्नानेषु मन्त्रतर्पणप्रसङ्गो नास्ति।

अस्पृश्यस्पर्शने वान्ते अश्रुपाते क्षुरे भगे।
स्नानं नैमित्तिकं प्रोक्तं दैवपित्र्यविवर्जितम्॥

जलाशयमज्जनासम्भव उष्णोदकेनाप्येतत् स्नानं कार्यम्।

नित्यं नैमित्तिकं चैव क्रियाङ्गमलकर्षणम्।
तीर्थाभावेऽपि कर्त्तव्यमुष्णोदकपरोदकैः॥

इति शङ्खाव। क्रियाङ्गं=देवपूजादिक्रियाङ्गम्। मलकर्षणम्=अभ्यङ्गपूर्वकं स्नानम्। यदा तु रोगवशादुष्णोदकस्नानेऽपि शक्तिर्नास्ति तदा शुद्धिप्रकारमाह।

यमः।

आतुरे स्नानमापन्ने दशकृत्वस्त्वनातुरः।
स्नात्वा स्नात्वा स्पृशेदेनं ततः शुध्येत् स आतुरः॥

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलश्रीमन्महाराजाधिराजप्रतापरुद्रतनुजश्रीमन्महाराजमधुकरसाहसूनुश्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकरश्रीवीरसिंहोद्योजितश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनुसकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातुश्रीमन्मित्रमिश्रकृते श्रीवीरमित्रोदयनिबन्धे शुद्धिप्रकाशे द्रव्यशुद्धिप्रकरणम्।

---

## अथ मुमूर्षुकृत्यम्।

तत्र दिवोदासीये।

स्मृतिः।

दृष्ट्वा स्थानस्थमासन्नमर्धोन्मीलितलोचनम्।
भूमिस्थं पितरं पुत्रो यद्धि दानं प्रदापयेत्॥
तद्विशिष्टं गयाश्राद्धादश्वमेधशतादपि।

स्थानस्थम्=अनिषिद्धदेशस्थम्। पितृग्रहणं मुमूर्षुमात्रस्योपलक्षणम्।

पुत्रग्रहणं सम्बन्धिमात्रस्य । दानानि च जातूकर्ण्य आह ।

उत्क्रान्तिवैतरण्यौ च दश दानानि चैव हि ।
प्रेतेऽपि कृत्वा तं प्रेतं शवधर्मेण दाहयेत् ॥

अत्राऽपिशब्दश्रवणाज्जीवद्दशायामेवैतानि कार्याणीति गम्यते । यदि तत्र दैवान्न जातानि तदा मृतेऽपि तानि कृत्वा दाहादि कुर्यात् । एतेन जीवद्दशायामकरणे दशाहोत्तरं कार्याणीति स्मार्त्तमतमपास्तम् । अत्र यद्यपि पाठक्रमेण दशदानानामुत्तरत्वं प्रतीयते । तथाप्युत्क्रान्तिधेनोरुत्क्रान्तिनिमित्तकत्वादर्थाद् दशदानोत्तरत्वम् । दशदानानि च तेनैवोक्तानि ।

गोभूतिलहिरण्याज्यवासोधान्यगुडानि च ।
रूप्यं लवणमित्याहुर्दशदानान्यनुक्रमात् ।

तत्राभ्युदयसिद्ध्यर्थं सर्वपापक्षयार्थं वा दशदानानि करिष्ये इति सङ्कल्प्य तानि कुर्यात् । तत्राचाराद्गवामङ्गेष्वित्यनेन मन्त्रेण गोदानम् ।

सर्वभूताश्रया भूमिर्वराहेन समुद्धृता ।
अनन्तसस्यफलदा अतः शान्तिं प्रयच्छ मे । इति भूमिम् ।
महर्षेर्गोत्रसम्भूताः कश्यपस्य तिलाः स्मृताः ।
तस्मादेषां प्रदानेन स मे पापं व्यपोहतु ॥ इति तिलान् ।
हिरण्यगर्भगर्भस्थं इति हिरण्यम् ।
कामधेनुषु सम्भूतं सर्वक्रतुषु संस्थितम् ।
देवानामाज्यमाहारमतः शान्तिं प्रयच्छ मे ॥ इति आज्यम् ।
शरणं सर्वलोकानां लज्जाया रक्षणं परम् ।
सुवेषधारि वस्त्र ! त्वमतः शान्तिं प्रयच्छ मे ॥ इति वस्त्रम् ।
सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत् ।
प्राणिनां जीवनोपाय अतः शान्तिं प्रयच्छमे ॥ इति धान्यम् ।
यथा देवेषु विश्वात्मा प्रवरश्च जनार्दनः ।
सामवेदस्तु वेदानां महादेवस्तु योगिनाम् ॥
प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा ।
तथा रसानां प्रवरः सदैवेक्षुरसो मतः ।
मम तस्मात्परां लक्ष्मीं ददस्व गुड सर्वदा ॥ इति गुडम् ।
प्रीतिर्यतः पितॄणां च विष्णुशङ्करयोः सदा ।
शिवनेत्रोद्भवं रूप्यमतः शान्तिं प्रयच्छमे ॥ इति रूप्यम् ।
यस्मादन्नरसाः सर्वे नोत्कृष्टा लवणं विना ।
शम्भोः प्रीतिकरं नित्यमतः शान्तिं प्रयच्छ मे॥ इति लवणं दद्यात् ।

एतानि च दानानि मुमूर्षुणा कार्याणि । अशक्तौ तु अन्य एतानि कृत्वा श्रेयोऽस्मै दद्यात् । अत एव ।

व्यासः ।

तदा यदि न शक्नोति दातुं वैतरणीं तु गाम् ।
शक्तोऽन्योऽरुक् तदा दत्त्वा दद्याच्छ्रेयो मृतस्य च ॥

तदा=जीवद्दशायाम् । वैतरणीग्रहणमुपलक्षणम् । दशदानादीनां समानन्यायत्वात् । एतानि च पापविशेषनिश्चये तन्निमित्तं प्रायश्चित्तं कृत्वा कार्याणि । विशेषनिश्चयाभावेऽपि षडब्दं ऽयब्दं सार्धाब्दं सर्वं प्रायश्चित्तं कुर्यादिति वदन्ति । तत्प्रकारश्च प्रायश्चित्तप्रकाशे ज्ञेयः । दशदानोत्तरं च उत्क्रान्तिधेनुदानं कार्यम् । धेनुश्च सवत्सा, तदभावेऽवत्सापि ।

आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत् ।
तदभावे तु गौरेव नरकोत्तरणाय वै ॥

इति व्यासोक्तेः । ततो वैतरणीदानम् ।

तत्र—

धेनुके ! त्वं प्रतीक्षस्व यमद्वारे महापथे ।
उत्तितीर्षुरहं देवि ! वैतरण्यै नमोऽस्तु ते ॥

इति धेनुं प्रार्थ्य—

विष्णुरूप ! द्विजश्रेष्ठ ! भूदेव ! द्विजपावन ! ।
तर्तुं वैतरणीमेनां कृष्णां गां प्रददाम्यहम् ॥

इति ब्राह्मणं प्रार्थ्य ।

यमद्वारे महाघोरे कृष्णा वैतरणी नदी ।
तर्तुकामः प्रयच्छामि कृष्णां वैतरणीं तु गाम् ॥

इति मन्त्रेण दद्यात् । स्वस्याशक्तौ पुत्रादिर्दद्यात् । तदोत्तितीर्षुरयमिति पठेदिति केचित् । इयं च—

पठित्वैवं प्रदातव्या हिरण्येन समन्विता ।
अशक्तौ वस्त्रयुग्मेन सप्तधान्येन वा पुनः ॥

इति वचनात् हिरण्ययुक्ता देया । एवं=पूर्वोक्तमन्त्रम् । दानान्तरमुक्तम्—

ब्राह्मे ।

ताम्रपात्रं तिलैः पूर्णं प्रस्थमात्रं द्विजाय तु ।
सहिरण्यं च यो दद्याद्वृद्धवित्तानुसारतः ॥
सर्वपापविशुद्धात्मा लभते गतिमुत्तमाम् ।

अत्र प्रकरणान्मुमूर्षुकर्तृकत्वलाभः । तिलदाने मन्त्रश्च पूर्वोक्त एव

प्राह्यः। दीपदानं च कार्यम्। तथा च—

वाराहे।

तथैव दीपदानं च शीघ्रं मुच्येत किल्बिषात्।

एषां च दानानां मध्ये कस्यचित् पुरुषविशेषं प्रति आवश्यकत्व-माह।

स्मृतिः।

येऽपि संकीर्णकर्माणो राजानो रौद्रकर्मिणः।
तेभ्यः पवित्रमाख्यातं भूमिदानं परं महत्॥

अनन्तरकर्त्तव्यमाह।

वाराहे।

पश्चाच्छ्रुतिपथं दिव्यमुच्चैः कर्णे च श्रावयेत्।

स्मृत्यन्तरेऽपि।

दत्त्वा दानं द्विजेभ्यस्तु दीनानाथेभ्य एव च।
बन्धौ कलत्रे मित्रे च क्षेत्रे धान्यधनादिषु॥
मित्रवर्गे च सर्वत्र ममत्वं विनिवर्त्तयेत्।
त्यजन्ननशनस्थोऽपि प्राणान् यः संस्मरेद् हरिम्।
संयाति विष्णुसायुज्यं यावदिन्द्राश्चतुर्दश॥
ॐ नमो वासुदेवायेत्येनञ्च सततं जपेत्।
यत्तूदीरयितुं नाम समर्थस्तदुदीरयेत्॥
ध्यायेत्तु देवदेवस्य रूपं विष्णोरनामयम्।
अन्यं तं वयसा वृद्धो व्याधिना चोपपीडितः॥
स्थातुं यदि न शक्नोति शयीतोदक्शिराः क्षितौ।
दक्षिणाग्रेषु दर्भेषु शयीत प्राक्शिरा अपि॥
[illegible] जपेन्नारण्यकं सुतः।
यं [illegible] लेवरम्॥
[illegible] णियथा।

अत्र सर्वत्र शक्तौ स्वयंपाठोऽन्यथा श्रवणमिति द्रष्टव्यम्। क्षिति-ग्रहणात् खट्वादिनिषेधः। तथा काण्वधानेऽपि।

ज्ञानारामिति सूक्तं तु अन्तकाले सदा पठेत्।
जप्त्वा चैव परं स्थानममृतत्वाय कल्पते॥

मरणे प्रशस्तदेशानाह।

लिङ्गपुराणे।

शालग्रामसमीपे तु क्रोशमात्रं समन्ततः।

कीटकोऽपि मृतो याति वैकुण्ठभवनं नरः ॥

व्यासः।

तुलस्युपसमीपे तु यदि मृत्युर्भवेत् क्वचित्।
स निर्भर्त्स्य यमं पापी लीलयैव हरिं विशेत्॥
प्रयाणकाले यस्याऽऽस्ये दीयते तुलसीदलम्।
निर्वाणं याति पक्षीन्द्र! पापकोटियुतोऽपि सः॥

कौर्म्ये।

गङ्गायां च जले मोक्षो वाराणस्यां जले स्थले।
जले स्थले चान्तरिक्षे गङ्गासागरसङ्गमे॥

स्कान्दे।

तीराद् गव्यूतिमात्रं तु परितः क्षेत्रमुच्यते।
अत्र स्नाता दिवं यान्ति ये मृतास्तेऽपुनर्भवाः॥

मरणकाले मधुपर्कदानमुक्तं—

वाराहे।

दृष्ट्वा तु विह्वलं प्रेतं यममार्गानुसारिणम्।
प्रयाणकाले तु ततो मन्त्रेण विधिपूर्वकम्॥
मन्त्रकेनैव तद्देयं सर्वसंसारमोक्षणम्।
मधुपर्कं ततो ग्राह्यमिमं मन्त्रमुदाहरेत्॥

सङ्गच्छ मागच्छ ममैव देहे मधुपर्कं संसारमोक्षणं शरीरं शव आगतं तु निहन्मि शरीरशोधनम्। गृहाण लोकनाथेममं मधुपर्कम्। एतेन मन्त्रेण मधुपर्कोत्तमं दद्यात्। अत्र साग्नेर्विशेषमाह—

कात्यायनः,

स्वयं होमासमर्थस्य समीप उपसर्पणम्।
तत्राप्यशक्तस्य सतः शयनाच्चोपवेशनम्।
हुतायां सायमाहुत्यां दुर्बलश्चेद् गृही भवेत्।
प्रातर्होमस्तदैव स्यात् जीवेच्चेच्छ्वः पुनर्नवा।
पौर्णमासे कृते प्राक्चेद्दर्शात्स्वामी मुमूर्षुकः॥
अपिण्डः पितृयज्ञः स्याद्दर्शोऽप्येवं तदैव तु।
वैश्वदेवे कृतेऽप्येवं चातुर्मास्यसमापनम्॥
उपक्रान्तान्यनेकाहःसध्याद्यान्येवमेव तु।
प्रयासुं स्वामिनं ज्ञात्वा कर्त्तव्यानि सुतादिभिः॥
तथैवं क्रियमाणे तु हविरासादनात्पुरा।
मरणं चेत्तद्धवींषि नवैः प्रक्षिप्य संहरेत्॥

तत्तदाहवनीये तानूर्ध्वमासदनान्मृतौ ।
मरणान्तं हि तत्कर्म कर्त्रभावात्समाप्यते ॥
अग्निहोत्रेऽप्युपक्रान्ते स्वामी यदि विपद्यते ।
प्रागुन्नयनतो नेयं दहेद्धौम्यं तदुत्तरम् ॥
तत्तदाहवनीये च कर्म तत्र समाप्यते ।
इष्टि पश्वादिकं तत्र कालाल्पत्वान्न सम्भवेत् ॥
देवतानां प्रधानानामेकैकस्य पृथक् पृथक् ।
पुरानुवाक्यायाज्याभ्यां चतुरत्ता घृताहुतीः ॥
जुहुयादेवमन्यत्र सर्वत्र यदि हूयते ।
अथेष्ट्ययनमध्ये स्यात्पत्युर्मरणसंशयः ॥
अवशिष्टेष्टिदेवेभ्यस्तत्संख्यानि घृतानि च ।
चतुर्गृहीतान्येकत्र गृहीत्वा चमसैः सह ।
पुरोनुवाक्यायाज्याभिः पूर्ववज्जुहुयात्पृथक् ॥

स्वयं होमपक्षे सम्पूर्णे होमे समर्थेन यजमानेनोपसमर्पणमात्रं विहारसमीपेऽवस्थानमात्रं कार्यम् । तत्राप्यशक्तेन शयनादुपविश्य स्थेयम् । सायं होमोत्तरं यदि मृत्योरासन्नता तदा शुक्लपक्षे प्रातर्होमोऽपि तदैव कार्यः । तद्व्यतिरेकेण सायंहोममात्रेण फलाभावात् । फलवाक्ये निमित्तवाक्ये चाभ्यस्तस्य कर्मण एव फलसाधनत्वावगमात् । एवं पूर्णमासोत्तरं मरणशङ्कायां दर्शस्यापि तदैव करणम् । एकफलसाधनत्वादुभयोः । अतश्च यत्र नैकसाधनत्वं यथा शरद्वसन्ताग्रयणयोस्तत्रैककर्मत्वेऽपि फलभेदादेकाग्रयणानुष्ठानोत्तरं मरणशङ्कायामितरस्य नानुष्ठानम् । प्रातर्होमानुष्ठानोत्तरं यदि पुनर्जीवति तदा स्वकाले पुनर्नैव कार्य्यम् । वाशब्दोऽवधारणे नैवेत्यर्थः । एवं पूर्णमासोत्तरं मरणशङ्कायां दर्शस्याप्याकर्षः । परं पिण्डपितृयज्ञरहित एव दर्शः कार्यः । अत्र च दर्शानुष्ठानं दर्शावधिकान् सायम्प्रातर्होमान् पक्षहोमविधानेन कृत्वा कार्यम् । अपरपक्षे त्वप्रयाणं शङ्क्येत "यावत्योऽपरपक्षस्यातिशिष्टाः रात्रयः स्युस्तासां सायं प्रातराहुतीः प्रतिसंख्यया हुत्वा मावास्येन हविषेष्ट्वा समापयेयु"रिति वचनात् । अत्र च तद्दिनस्थं प्रातर्होममात्रं पृथक् कृत्वा अन्ये सायंप्रातर्होमाः पक्षहोमविधानेन तन्त्रेण कार्याः । एवं चातुर्मास्यादिष्वप्येकपर्वकरणोत्तरं मरणशङ्कायामग्निपर्वानुष्ठानं बोध्यम् । अत्रापि समानन्यायत्वादन्त्यपर्वपर्यन्तानां सायं प्रातर्होमानामनुष्ठानम् । परं तत्राग्निपर्वपर्यन्तान् होमान् कृत्वा तत्पर्व च कृत्वा पुनराग्रिमहोमादीन् कृत्वाग्रिमपर्वकरणमित्येवं बोध्यम् । अत्र

होमेष्ट्यादौ सुतादिभिरनुष्ठीयमानेऽशक्त्या याजमानादिलोपोऽपि न दोषावहः । तदाह मण्डनः ।

अशक्त्या याजमानञ्चेत्पत्नीकर्म च लुप्यते ।
न तावता क्रतुभ्रेषः स्यादाथर्वणसून्नतः ॥ इति ।

एवं सति इष्ट्यादौ कर्मणि क्रियमाणे यदि आसादनात्पूर्वं यजमानमरणं तदा तद्धविर्गार्हपत्ये दहेत् । आसादनोत्तरं चेत्तदाहवनीये दहेत् । तत्र मन्त्रो याभ्यो गृहीतानि ताभ्यः स्वाहेति ज्ञेयः "याभ्यो गृहीतानि ताभ्यः स्वाहेति एवैतान्याहवनीये सर्वाहुतिं जुहुयादित्याश्वलायनब्राह्मणात् ।

एवमग्निहोत्रेऽप्युन्नयनात्पूर्वं मृतौ गार्हपत्ये दाहः । तदुत्तरं चेदाहवनीये न तु मरणोत्तरं करणम् । इदं च कात्यायनीयानामेव । आश्वलायनानां तु मरणोत्तरमपि अग्निमकर्मोत्कर्षो भवत्येव । अतश्च तन्मतेन हविषां दाहोऽपि । अत एव—

मण्डनः ।

आहिताग्निः कदाचित्तु कृष्णपक्षे मृतो यदि ।
तदा शेषाहुतीः सर्वा जुहोतीत्याश्वलायनः ॥

आकृष्य क्रियमाणे दर्शादौ कालादपरस्माद्यदि असामर्थ्यं तदा चतुर्गृहीताज्येन पुरानुवाक्यानुक्त्वा याज्यया यागान् गणयित्वा कुर्यात् । चातुर्मास्याङ्गभूतपश्वलाभे तु तद्दैवत्यं पुरोडाशं आमिक्षां वा पूर्णाहुतिं वा कुर्यात् । अत एव—

मण्डनः ।

पश्वलाभे पुरोडाशं निर्वपेत्पशुदैवतम् ।
आमिक्षामथवा कुर्यात् पूर्णाहुतिमथापि वा ॥

पुरोऽनुवाक्यादिनापि यागासम्भवे चतुर्थ्यन्तास्तत्तद्यागीयदेवता उद्दिश्य चतुर्गृहीताज्येन गणयित्वा यजेत् । एवं कृते सति अमावास्यापर्यन्तं जीवने तस्यां केवलं पिण्डपितृयज्ञमात्रं कार्यम् ।

अथ कात्यायनमतानुसारिणां मृतकृत्यम् ।

तत्र यदि दुर्मरणादि प्रेतस्य भवति तदा तन्निमित्तं प्रायश्चित्तमादौ कृत्वौर्ध्वदेहिकं कार्यम् । तच्च प्रायश्चित्तं प्रायश्चित्तप्रकाशे ज्ञेयम् । तत्रौर्ध्वदेहिके सामान्यविशेषोऽभिहितः ।

छन्दोगपरिशिष्टे ।

उद्धृत्याहवनीयानि स्वस्थाने दक्षिणानलम् ।
सकृत्सकृत्समूहादि संस्कृतं दक्षिणामुखः ॥

कर्त्ता प्रत्यगग्न्याधिश्रित्य शुष्कगोमयसंयुताः ।
कार्पासादिभिरन्यैर्वा स्थाल्यस्तेषु प्रतापयेत् ॥

दक्षिणानलं दक्षिणाग्निम् । समूहनम् । पर्युक्षणमादिशब्दार्थः । कर्ता=और्ध्वदैहिककर्त्ता । अग्निं अग्निं प्रतीति प्रत्यग्नि । इदं च सर्वमपसव्येन कार्यम् । "प्रेतसम्बन्धि यत्कर्म तत्सर्वमपसव्यवत्" इति तेनैवोक्तेः । सव्यापसव्ययोर्न स्थाल्याधिश्रयणम् । मानाभावात् । अत्र च यत्र स्थाने प्रेतस्य मृत्युस्तत्रैकोद्दिष्टविधिना श्राद्धं कार्यम् ।

अत्र श्राद्धं भवेदस्य प्रेतोत्थाननिमित्तकम् ।

इति तेनैवोक्तत्वात् । अत्र=मृत्युदेशे उत्थानं=मरणम् ।

स्थाने चार्धपथे नीते चितायां शवहस्तके ।
श्मशानवासिभूतेभ्यः पञ्चमं प्रातिवेश्मकम् ॥
षष्ठं सञ्चयने प्रोक्तं दश पिण्डा दशाहिकाः ।
श्राद्धं षोडशकं चैतत्प्रथमं परिकीर्तितम् ॥

इति स्मृतेश्च । स्थाने=मृतदेशे । श्मशानवासिभूतेभ्य इत्यस्य पूर्वेणान्वयः । प्रातिवेश्मकं=द्वारि क्रियमाणं श्राद्धम् । अत्र च श्राद्धोत्तरं पिण्डदानमुक्तं देवयाज्ञिकोदाहृतायां स्मृतौ ।

मृतस्योत्क्रान्तिसमयात् षट्पिण्डान् क्रमशो दिशेत् ।
मृतस्थाने तथा द्वारे चत्वरे तार्क्ष्य ! कारणात् ।
विश्रामे काष्ठचयने तथा सञ्चयने च षट् ॥

अत्र नामोद्देशोऽपि तेनैवोक्तः ।

शृणु तत्कारणं तार्क्ष्य ! षट्पिण्डपरिकल्पने ।
मृतस्थाने शवो नाम तेन नाम्ना प्रदीयते ॥
चत्वरे खेचरो नाम तमुद्दिश्य प्रदापयेत् ।
विश्रामे भूतसंज्ञोऽयं तेन तत्र प्रदीयते ॥
चितायां साधकं नाम वदन्त्येके खगेश्वर ।
चितामोक्षप्रभृतिकं प्रेतत्वमुपजायते ॥
अतस्तं प्रेतमेवाहुः यथाकल्पविदो जनाः ।
सञ्चये यत्र तत्रापि प्रेतनाम्ना प्रदीयते ॥
इत्येवं पञ्चपिण्डैस्तु शवस्याहुतियोग्यता ।
अन्यथा चोपघाताय पूर्वोक्ता ये भवन्ति हि ॥

अत्र चत्वरे श्राद्धस्यानुक्तेः पिण्डदानमात्रस्यैव चोक्तेः तन्मात्रमेव कार्यम् ।

अन्येषु तु सापिण्डकं श्राद्धं कृत्वा तदन्ते तेषु स्थलेषु तत्तन्नाम्ना

पिण्डदानं कार्यम् । यत्र तु पिण्डदानं प्रोक्तं तत्र श्राद्धमात्रमिति देवयाज्ञिकः । यत्तु द्वारि क्रियमाणे पिण्डदाने पान्थेतिनामोच्चार उक्तः, स निर्मूलः । प्रमाणाभावात्, इत्थेवं पञ्चपिण्डैरित्यादिवचनविरोधापत्तेश्च । अतस्तत्प्रेतनाम्ना कर्त्तव्यमनामकं चेत्यास्तां विस्तरः ।

षोडशस्वपि श्राद्धेषु तत्तच्छ्राद्धानन्तरं माषान्नयुक्तजलकुम्भदानं कार्यमित्युक्तं—

स्मृत्यन्तरे ।

षोडशाद्याः प्रदातव्या माषान्नजलपूरिताः ।
उत्क्रान्तिश्राद्धमारभ्य श्राद्धषोडशकस्य तु ॥ इति ।

ततस्तस्य श्मशानदेशे नयनप्रकार उक्तो—

ब्रह्मपुराणे ।

प्रेतः स्नातो वस्त्रमाल्यैर्दिव्यगन्धैरलङ्कृतः ।
श्मशानभूमिं नेतव्यो मानुषैरनलङ्कृतैः ॥
निधाय च मुखे कांस्यं सुवर्णमणिविद्रुमम् ।
चतुर्विधेन वाद्येन कुर्युः कोलाहलं महत् ॥

मानुषैः=सुतादिभिः । अनलङ्कृतैः=मुक्तकेशत्वादिनाऽलङ्कारशून्यैः । यदि गृहे मृतस्तदा वर्णभेदेन बहिर्ग्रामनयने प्रकारमाह ।

मनुः ।

दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् ।
पश्चिमोत्तरपूर्वैस्तु यथासंख्यं द्विजातयः ॥

अत्र वैश्यादारभ्य क्रमः ।

पूर्वामुखस्तु नेतव्यो ब्राह्मणो बान्धवैर्गृहात् ॥
उत्तराभिमुखो राजा वैश्यः पश्चान्मुखस्तथा ॥

इति वचनादित्यपरार्कः । एतेनानुलोमक्रमोक्तिर्निःशङ्कलोकयामपास्ता । अत्र बान्धवानामनुगमनं तत्प्रकारं चाह—

आश्वलायनः ।

अन्वञ्चोऽमात्या अधोनिवीताः प्रमुक्तशिखाः ज्येष्ठप्रथमा कनिष्ठजघन्या अनुगच्छेयुरिति ।

अमात्या=बान्धवाः । अग्न्यादिकं च सह नेयमित्याह ।

स्मृतिः ।

प्रतिभूतं द्विजच्छन्नं निर्हरेयुः सुतादयः ।
स्थानं यन्त्यनसि प्रेतमेकाग्नि च कटादिषु ॥
शिविकायां विमाने वा प्रचेतोवचनादिह ।
पृथक्सन्तापजानग्नीनामपात्रेष्वथाहरेत् ॥

सभ्याग्निं सावसथ्यं च कृत्वा पात्रान्तरे क्वचित् ।
विधुरस्य कपालाग्निमामपात्रेण तं नयेत् ॥
पृषदाज्यं घृतं दर्भास्तिलान् पात्राणि सप्त च ।
हिरण्यानि घृताद्यत्र चन्दनानीन्धनानि च ॥
अनस्येतानि कृत्वैवं सपिण्डा दक्षिणां दिशम् ।
अनसा सह ते यान्ति यमसूक्तादिपाठकाः ।
अपेतोऽध्याय इत्यत्र यमसूक्तं विदुर्बुधाः ।
कटादिभिरपि स्कन्धैर्माल्यादिभिरलङ्कृतम् ।
चत्वारस्तं वहेयुस्ते पञ्चमं पुरतोऽनलम् ।

चत्वारश्च शूद्रवर्जिता ग्राह्याः ॥

न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण वाहयेत् ।
अस्वर्ग्या ह्याहुतिः सा स्यात् शूद्रसम्पर्कदूषिता ॥

इति मनुवचनात् अत्र च द्वारदेशे पूर्ववदेकोद्दिष्टविधिना श्राद्धं कार्यम् ।

प्रेताय च गृहद्वारि प्रथमं भोजयेद् द्विजान् ॥

इति कूर्मपुराणात् । अत्र पिण्डदानं कार्यम्, पूर्वोदाहृतवचनात् ।

चत्वरे खेचरो नाम्ना तमुद्दिश्य प्रदापयेत् ।

इतिवचनात् खेचरनाम्ना कार्यम् । पिण्डदानमुक्तम्-

कात्यायनेनापि ।

हिरण्यशकलान्यस्य क्षिप्त्वा छिद्रेषु सप्तसु ।
मुखेष्वथापिधायैनं निर्हरेयुः सुतादयः ।
आमपात्रेऽन्नमादाय प्रेतमग्निपुरस्सरम् ॥
एकोऽनुगच्छेत्तस्यार्द्धमर्द्धे पथ्युत्सृजेद् भुवि ।
ऊर्ध्वमादहनं प्राप्तमासीनो दक्षिणामुखः ॥
सव्यं जान्वाच्य शनकैः सतिलं पिण्डदानवत् ।

तस्यार्द्धम्=अन्नस्यार्द्धम् । आदहनं=दहनस्थानम् । उत्सृजेदित्यस्य दा- -स्थानेऽप्यनुषङ्गः । अर्द्धपथि=विश्रामस्थाने ।

ततो यत्र विश्रामस्तत्र श्राद्धं कार्यम् ।

यत्र स्थाने भवेन्मृत्युस्तत्र श्राद्धं प्रकल्पयेत् ।
एकोद्दिष्टं ततो मार्गे विश्रामो यत्र कारितः ॥

इति नागरखण्डवचनात् । अत्र श्राद्धान्तरे भूतनाम्ना पिण्डदानं चत्वरे कुम्भदानं च । अत्र-

ब्रह्मपुराणे ।

भूमौ शनैर्निधातव्यो यावत्प्रेतस्य जीवनम् ।

गतैस्तु नवभिः प्राणैरसौ देहं न मुञ्चति ॥
इति मत्वा शनैः स्थाप्यः पूज्यः स्नानादिकैः शवः ।
नदीमध्ये स्नाप्यस्तु दग्धव्यश्च न चान्यथा ।
यस्मिन्देशे जलं न स्यात् तुषारं वा न विद्यते ॥
तत्र तोयकथा कार्या वक्तव्यं वा हिमं हिमम् ।

शवस्नानादिकं च चितायां पूर्वचरुश्राद्धं कृत्वा कार्यम् ॥
अत्र श्राद्धान्ते पिण्डदानं प्रेतनाम्ना साधकनाम्ना वा बोध्यम् ।

चितामोक्षप्रभृतिकं प्रेतत्वमुपजायते ॥
अतस्तं प्रेतमेवाहुर्यथाकल्पविदस्तथा ।
चितायां साधकं नाम वदन्त्येके खगेश्वर ॥

इति गारुडोक्तेः । माषाज्यजलकुम्भदानं च पूर्वोदाहृतवचनात् । ततः पुत्रादिः कर्ता मनसा तीर्थानि ध्यायेत् । तथा च—

वाराहे ।

दक्षिणाशिरसं कृत्वा सचैलं तु शवं तथा ।
तीर्थस्यावाहनं कृत्वा स्नापनं तत्र कारयेत् ॥
गयादीनि तु तीर्थानि ये तु पुण्याः शिलोच्चयाः ।
कुरुक्षेत्रं च गङ्गां च यमुनां च सरिद्वराम् ।
पृथिव्यां यानि तीर्थानि सरितः सागरास्तथा ॥

ध्यात्वा तु मनसा सर्वानित्यादि । ततः कर्तुर्वपनम्—

प्रथमेऽहनि कर्तव्यं वपनं चानुभाविभिः ।
प्रेतस्य केशश्मश्रूणि वापयित्वाथ दाहयेत् ॥

इति मदनरत्नधृतगालववचनात् ।

गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृते ।
आधाने सोमपाने च वपनं सप्तसु स्मृतम् ॥

इतिवचनाच्च । मृते=तद्दिने । अस्माच्च वचनात् दाहकर्तृत्वाभावेऽपि सर्वेषामेव पुत्राणामिदं दाहाङ्गं वपनं विधीयते । रात्रौ दाहे तु संग्रहे ।

रात्रौ दग्ध्वा तु पिण्डान्तं कृत्वा वपनवर्जितम् ।
वपनं नेष्यते रात्रौ श्वस्तनी वपनक्रिया ॥

कालान्तरमुक्तम्—

स्मृत्यन्तरे ।

द्वितीयेऽहनि कर्तव्यं क्षुरकर्म प्रयत्नतः ।
तृतीये पञ्चमे वापि सप्तमे वाऽऽप्रदानतः ॥

आप्रदानतः=एकादशाहादिश्राद्धावधि। अनेनाष्टमादीनां ग्रहणम्।

देवलः।

दशमेऽहनि सम्प्राप्ते स्नानं ग्रामाद्बहिर्भवेत्।
तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च॥

अत्र स्नानवत्सर्वेषां वपने प्राप्ते"अनुभाविनां च परिवापनम्" इत्यापस्तम्बेन मृतकनीयःसपिण्डानां तन्नियम्यते।

व्यासः।

पुत्रः पत्नी च वपनं कुर्यादन्ते यथाविधि।
पिण्डदानोचितोऽन्योऽपि कुर्यादित्थं समाहितः॥

एषां च कालानां देशाचाराद्व्यवस्था। मदनपारिजाते तु प्रथमदिने कृतवपनस्यापि पुनराशौचान्ते वपनं भवत्येवेत्युक्तम्। स्नानोत्तरं कृत्यमुक्तम्।

गृह्यकारिकायाम्।

समे शुचौ विहृत्याग्नीन् वैतानान् सतृणे शुभे।
उद्धृत्य क्षीरसंयुक्ता ओषधीर्माषपर्णिकाः॥
मुञ्जा दूर्वाश्मगन्धा वा व्याण्डा च पुरुषाहृतीः।
न्यग्रोधाश्वत्थहारिद्रतिलकस्यूर्जकादयः॥
दूरे त्याज्या ततोऽग्नीनामन्तरा चिनुयुश्चितिम्।

अग्निविहरणं च भूसंस्कारं कृत्वा कार्यम्।

सम्मृज्य चोपलिप्याथोल्लिख्योद्धृत्य च वेदिकाम्।
अभ्युक्ष्योपसमाधाय वह्निं तत्र विधानतः॥

इति वचनात्। व्याण्डा=ठण्ठाणिका। पुरुषाहृतीः=पुन्नामकाः। अत्राग्निविहरणं चितादेशे गार्हपत्यादिस्थानकल्पनां कृत्वा कार्यम्। यद्यत्र समारूढाग्निस्तदा विशेषमाह—

मण्डनः।

अग्न्यावरुण्योरारूढे प्रमीयेत पतिर्यदि।
प्रेतं स्पृष्ट्वा मथित्वाग्निं जप्त्वा चोपावरोहणम्॥
घृतं च द्वादशोपात्तं तूष्णीं हुत्वा शवक्रिया।

उपावरोहणम्=उपावरोह जातवेद इत्यादिमन्त्रः। प्रजापतिर्देवता। होमे ध्येयः। प्रजापतिं मनसा ध्यायात् तूष्णीं होमेषु सर्वत्रेति वचनात्। विच्छिन्नश्रौताग्नेर्मृतौ तु प्रेताधानं तत्रैवोक्तम्—

विच्छिन्नवह्निमुत्सृष्टपावकं विधुरानलम्।
आहिताग्निं मृतं दग्धुं प्रेताग्न्युत्पत्तिसिद्धये॥

भारद्वाजादयः प्राहुः प्रेताधानविधिं पृथक् ।
प्राचीनावीतवानुद्धृत्यावोक्ष्यायतनान्यथा ॥
प्रेतं स्वाम्यालये क्षिप्त्वा मथित्वाऽन्यालयेऽरणी ।
सन्निधाप्यारणिं मन्थेद् यस्येति यजुषा ततः ॥
प्रणीय पावकं तूष्णीं आदग्धोपात्तसर्पिषा ।
तूष्णीं हुत्वा ततः कुर्यात् प्रेते मादृशा इति क्रियाम् ॥
नष्टेष्वग्निष्वथारण्योर्नाशे स्वामी म्रियेत चेत् ।
आहरेदरणीद्वन्द्वं मनोज्योतिर्जुषा ततः ॥

उत्सृष्टपावकः=अग्निहोत्राद्यशक्त्योत्सर्गेष्टिपूर्वकं कृताग्नित्यागः । विधुरानलः=पूर्वंमृतायै भार्यायै दत्ताग्निः । स्वाम्यालये=स्वस्थाने । अन्यालये मथितारणीं सन्निधाप्येत्यन्वयः । यस्येति यजुषा=यस्याग्नयो जुह्वतो मांसकामाः सङ्कल्पयन्ते यजमानमांसम् । जायन्तु ते हविषे सादिताय स्वर्ग्यंलोकामिमं प्रेतं नयन्त्विति मन्त्रेण मन्थेदित्यर्थः । मनोज्योतिर्जुषा= मनोज्योतिर्जुषतामित्याद्यया । ततः—अग्निमन्थनादि कृत्वेत्यर्थः ।

यज्ञपार्श्वः ।

यजमाने चितारूढे पात्रन्यासे कृते सति ।
वर्षाद्यभिहते चाग्नौ कथं कुर्वन्ति याज्ञिकाः ।
तदर्द्धदग्धकाष्ठेन मन्थनं तत्र कारयेत् ॥
तच्छेषालाभतोऽन्येन दग्धशेषेण वा पुनः ।
हुत्वाज्यं लौकिके वह्नौ दग्धशेषं दहेत् तु तम् ॥

चितारूढे ज्वलच्चितारूढे तासामरणीनामर्द्धदग्धकाष्ठेन मन्थेत् । तदलाभेऽन्येन दग्धकाष्ठेनेत्यर्थः । आज्यहोमस्तु लौकिकपक्ष एव । अन्यकाष्ठपक्षेऽपीति केचित् । एवं पर्णशरादिदाहेनाग्निनाशे पश्चात्तद्देहलाभे मदनरत्ने—

ब्रह्मपुराणम् ।

अथ पर्णशरे दग्धे पात्रन्यासे कृते सति ।
गतेष्वग्निषु तद्देहो यद्यूर्ध्वं लभते क्वचित् ॥
तदार्धदग्धकाष्ठं तु तदीयं नैव लभ्यते ।
तदा तदस्थिखण्डं तु निक्षेप्तव्यं महाजले ॥

एते चाविरोधिनः सर्वे प्रकाराः श्रौताग्नेरिव स्मार्ताग्नेरपि ज्ञेयाः । विच्छिन्नसन्धानप्रकारस्त्वन्यान्योऽप्युक्तो गृह्यग्रन्थेषु ।

उल्लेखनादिना संस्कृतायां भूमौ लौकिकाग्निं प्रतिष्ठाप्यायाश्चेत्यनया एकामाज्याहुतिं स्रुवेण जुहुयात्, व्याहृतिहोमश्चेति । यजमाने

पूर्वं मृते पश्चात्पत्नीमृतावग्न्युत्पत्तिप्रकारस्तु देवयाज्ञिकोदाहृतस्मृतौ—

दम्पत्योरनयोर्मध्ये पूर्वं स्वामी मृतो यदि ।
नवोल्मुकं पृथक् कृत्वा समारोह्यानलं तु तम् ॥
धारयेदरणिस्थं तमाप्रायणात्प्रयत्नतः ।
मृता निर्मन्थ्य दग्धव्या तेन पत्नी सुतादिभिः ॥

नवोल्मुकं=गार्हपत्योल्मुकम् । पृथक् कृत्वावशिष्टाग्निभिर्यजमानं दहेदित्यर्थः ।

अरणिस्थम्=स्वतन्त्रारणिस्थम् । पूर्वाग्निस्तस्यैव दाहात् । अत्र पक्षान्तरमुक्तम्—

मण्डनेन ।

पत्नी चेद्विधवा भूत्वा प्रमीयेत कदाचन ।
तदा श्रौताग्निशून्यत्वान्निर्मन्थ्येनैव दह्यते ॥

अन्यदपि पक्षान्तरमुक्तम्—

ब्राह्मे ।

आहिताग्न्योस्तु दम्पत्योर्यस्त्वादौ म्रियते यदि ।
तस्य देहः सपिण्डैस्तु दग्धव्यस्त्रिभिरग्निभिः ॥
पश्चान्मृतस्य देहस्तु दग्धव्यो लौकिकाग्निना ।

अस्माच्च वचनाद्यजमानस्याप्युत्तरकालं मरणे लौकिकाग्निना दाहः प्रतीयते स त्वशक्त्या पुनर्विवाहाकरणेऽपि वा आधानाकरणे ज्ञेयः ।

यदि पूर्वं मृता पत्नी दाहयित्वाग्निभिस्त्रिभिः ।
पुनर्दारक्रियां कृत्वा पुनराधानमेव च ॥

इति तत्रैवोक्तेः ।

भार्यायै पूर्वमारिण्यै दत्त्वाग्नीनन्त्यकर्मणि ।
पुनर्दारक्रियां कृत्वा पुनराधानमेव च ॥

इति मनूक्तेश्च । अथवा पुनर्विवाहाशक्तौ निर्मन्थ्येन पत्नीं दग्ध्वा श्रौतैरग्निभिर्यजमान एव दग्धव्य इत्यपि प्रकारान्तरम् । अत एव—

भारद्वाजः ।

निर्मन्थ्येन पत्नीं दहेदिति ।

अत्र निर्मन्थ्येन पत्न्या दाहश्रवणादग्नीनां स्थापनमेवेति गम्यते । अत एव तस्मादपत्नीकोऽप्यग्निहोत्रमाहरेदिति श्रुतिः पूर्वाग्नीनामेवाहरणं कार्यमिति प्रतिपादयति । न चेयं विधुरस्य स्वतन्त्राग्निहोत्रकरणप्रतिपादनपरा ।

मृतायामपि भार्यायां वैदिकाग्निं न हि त्यजेत् ।
उपाधिनापि तत्कर्म यावज्जीवं समाचरेत् ॥

रामोऽपि कृत्वा सौवर्णीं सीतां भार्यां यशस्विनीम् ।
ईजे यज्ञैर्बहुविधैः सह भ्रातृभिरच्युतः ॥
यो दहेदग्निहोत्रेण स्वेन भार्यां कथञ्चन ।
सस्त्री सम्पद्यते तेन भार्या वास्य पुमान् भवेत् ॥

इति छन्दोगपरिशिष्टविरोधात् । उपाधिर्हेमकुशपत्न्यादिः । तत्कर्म-श्रौत्तरवेदिकवर्ज्यम् । अपत्नीकोऽप्यसोमप इतिश्रुतेः । एवं च यदपि दारकर्मणि यद्यशक्त आत्मार्थमग्न्याधेयमित्यापस्तम्बवचनं तदपि तत्पूर्वमग्न्याधेयं कृतं तदात्मार्थमेव न तु तदग्निभिः पत्न्या दाह इति व्याख्येयम् । ब्राह्मणभाष्यशार्करामाण्डारतरवमप्येवम् । देवयाज्ञि-केन तु स्मृतिवचनमुदाहृत्य प्रकारान्तरमुक्तम् ।

पुनः परिणयाधानं न सिद्ध्येत मृता च सा ।
गार्हपत्यैकदेशेन दाह्या निर्मन्थ्य वा पुनः ॥

मण्डनेन तु विधुरस्याधानमप्युक्तम् ।

स्त्रीमात्रमविशेषेण दग्धव्यं वैदिकाग्निभिः ॥
विवाह्या दधते यद्वाधानमेवाह्नि चेद्वधूः ।
एकाकी वादधीताग्नीन् विवाहश्चेन्न सिद्ध्यति ॥
नित्येष्ट्याग्रायणा चाग्निहोत्रं कर्मास्य नेतरत् ।

अत एवास्मिन्पक्षे पूर्वोदाहृतश्रुतिवाक्यापस्तम्बवचनयोरप्याञ्ज-स्यमिति केचित् । ततश्चायमत्र निर्गलितोऽर्थः । पूर्वपत्नीमरणे पत्युर्वि-वाहपूर्वकमाधानमिति मुख्यः पक्षः । विवाहासम्भवे तु विधुराधानं वा निर्मन्थ्येन वा तां दग्ध्वाऽग्नयः स्थाप्याः । तदेकदेशेन वा तस्या दाहं कृत्वाग्निभिरेतस्य दाहः । प्रेताधानप्रकारेण वाग्न्युत्पत्तिं कृत्वैतस्य दाहो लौकिकाग्निना वेति पक्षाः । पश्चात्पत्नीमृते तु गार्हपत्योल्मुकं समारोप्य मथित्वा दाहो निर्मन्थ्येन वा लौकिकेन वेति पक्षत्रयम् । अत्र ज्येष्ठायां विद्यमानायां यदि कनिष्ठामरणं तदापि तस्यै अग्निः श्रौत एव देयः ।

एवं वृत्तां सवर्णां स्त्रीं द्विजातिः पूर्वमारिणीम् ।
दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्मवित् ॥

इति अविशेषश्रवणादाहिताग्नित्वाविशेषात् ।

यत्तु ।

द्वितीयां चैव यो भार्यां दहेद्वैतानिकाग्निभिः ।
जीवन्त्यां प्रथमायां तु सुरापानसमं हि तत् ॥

इति वचनम्, तदाधाने सहानधिकृतविषयमिति विज्ञानेश्वरः । अयं

च भार्यायाः पात्रैः श्रौताग्निना दाहो व्यभिचारिण्याद्यतिरिक्तविषयः।

अग्निनैव दहेद्भार्यां स्वतन्त्रां पतिता न चेत्।
तदुत्तरेण पात्राणि दाहयेत्पृथगन्तिके॥

इति छन्दोगपरिशिष्टात्। स्वतन्त्रां व्यभिचारिणीमग्निभिरेव दहेत्। पात्राणि तूत्तरतः पृथक् दहेत्। पतितायास्तु नाग्निभिरपि दाह इत्यर्थः। अनाहिताग्न्यादेरग्निमाह।

वृद्धयाज्ञवल्क्यः।

आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः।
अनाहिताग्निरेकेन लौकिकेनापरो जनः॥

एकेन=स्मार्ताग्निना।

कारिकापि।

पत्नीमपि दहेदेवं भर्त्तुः पूर्वं मृता यदि।
अनाग्निका दहेदेवं कापालेन हविर्भुजा॥

क्रतुः।

विधुरं विधवां चैव कपालस्याग्निना दहेत्।
ब्रह्मचारियती चैव दहेदुत्तपनाग्निना॥
तुषाग्निना च दग्धव्यः कन्यका बाल एव च।
अग्निवर्णं कपालं तु कृत्वा तत्र विनिक्षिपेत्॥
कारीषादिततो यस्तु जातः स तु कपालजः।

यतिः=कुटीचक एव।

कुटीचकं तु प्रदहेत्पूरयेच्च बहूदकम्।
हंसो जले तु निक्षेप्यः परहंसं प्रपूरयेत्॥

इति वचनेन तस्यैव दाहोक्तेः। कन्यका=अविवाहिता। बालः=अनुपनीतः। इदं चानुपनीतस्य लौकिकेन दहनं जातारण्यभावे। तत्सद्भावे तु तन्मथितेनैव। तस्याः पुत्रजननोत्तरमेव पुत्रसम्बन्धिकार्यमात्रार्थं स्वशाखोक्तविधिना क्रियमाणाया अविशेषेण दाहार्थमप्युपादानात्। कलौ तु "प्रजार्थं तु द्विजाग्र्याणां जातारणिपरिग्रह"—इति वर्ज्येषु परिगणनाल्लौकिकाग्निनैव दाहः। अत्रोत्तपनलक्षणमुक्तम्।

स्मृत्यन्तरे।

दर्भाग्रेऽग्निं तु प्रज्वाल्य पुनर्दर्भैस्तु संयुतः।
पुनर्दर्भे तृतीयेऽग्निरेष उत्तपनः स्मृतः॥
लौकिके विशेषमाह।

देवलः।

चाण्डालाग्निरमेध्याग्निः सूतकाग्निश्च कर्हिचित्।
पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचितः॥

यमोऽपि ।

यस्यानयति शूद्रोऽग्निं तृणकाष्ठं हवींषि च ।
प्रेतत्वं च सदा तस्य स चाधर्मेण लिप्यते ॥

अत्र प्रेतत्वमिति श्रवणात् कृतोऽपि दाहोऽदाह एव । अतः पर्णशरादिना पुनर्दाह इति केचित् । अत्र यो यस्याग्निः स चितायाः पश्चिमप्रदेशे स्थाप्यः ।

चिता तु दक्षिणोत्तरायता कार्या ।
अथ पुत्रादिराप्लुत्य कुर्याद्दारुचयं महत् ।
तत्रोत्तानं निपात्यैनं दक्षिणाशिरसं ततः ॥

इति कात्यायनोक्तेः । इदं चानाहिताग्नेः, आहिताग्नेस्तु प्राक्शिरस्कत्वं वक्ष्यते । तदा चितापि प्राक्पश्चिमायता कार्या । सा तु ऊर्ध्वं बाहुपुरुषप्रमाणा कार्या योग्यत्वात् । ततः प्रेतस्य वपनादि कर्तव्यम् । तदाह । कात्यायनः ।

केशश्मश्रुनखानां लोम्नां च निकृन्तनं कृत्वा विपुरीषं चेच्छन् केशादि निखाय सर्पिषान्तरं चितावेनमादधाति ।

केशाः=मूर्धजाः । श्मश्रु=मुखरोम । लोम=गुह्यकक्षादिस्थमिति देवयाज्ञिकः । विपुरीषमिति । उदरं पाटयित्वा पुरीषरहितं कुर्यात् । इदं च वैकल्पिकमित्याह इच्छन्निति । केशादिकं च भूमौ क्वचित्प्रदेशे गर्ते निक्षिप्य विपुरीषकरणपक्षे पाटितोदरं घृतेनाभ्यज्य चितावेनमभ्याददध्यादित्यर्थः । आहिताग्नेस्तु चिताग्नीनामन्तरा कार्या । समे बहुलतृणेन्तराग्निश्चितिं चिनोतीति कात्यानोक्तेः । तस्यां च कृष्णाजिनास्तरणं कृत्वा प्रेतः स्थाप्यः ।

चित्यां प्राग्ग्रीवमास्तीर्याजिनमुत्तरलोमकम् ।
तस्मिन् प्राक्शिरसं प्रेतमुत्तानं विनिपातयेत् ॥

इति गृह्यकारिकोक्तेः । अन्यच्च कारिकायामुक्तम् ।

विसृष्टाभिरपसलैर्दृढाभिः कुशरज्जुभिः ।
बद्धो निष्क्रान्तिसमये छेदयेदधुनैव ताः ॥

अपसलैः=अपसव्येन । विसृष्टाभिः=कृताभिः । अधुना=चितास्थापनकाले । प्रचेताः ।

स्नानं प्रेतस्य कृत्वा तु पुष्पवस्त्रैश्च पूजनम् ।
चितायां नीयते पश्चात् तां संस्कृत्य प्रयत्नतः ॥
नग्नदेहं दहेन्नैव किञ्चिद्देयं परित्यजेत् ।
गोत्रजस्तं गृहीत्वैव चितामारोपयेत्तदा ॥

किञ्चिदिति । शववस्त्रैकदेशं श्मशानवास्यर्थं परित्यजेदित्यर्थः । गोत्रजग्रहणं सहायविधानार्थम् । ततः प्रेतस्य हस्ते आज्यं कृत्वा प्रेत-

नाम्ना पिण्डदानं माषान्नजलकुम्भदानं च कार्यम् । पूर्वोदाहृतवचननिचयात् । श्रौताग्नेरग्निमकृत्यमाह ।

कात्यायनः ।

सप्तसु प्राणायतनेषु सप्तहिरण्यशकलान् प्रास्यति मुखे प्रथमं, दक्षिणहस्ते जुहूं सादयति घृतपूर्णां स्फ्यं च, उपभृतं सव्ये, उरसि ध्रुवां, मुखे अग्निहोत्रहवणीम्, नासिकयोः स्रुवौ, कर्णयोः प्राशित्रहरणे, शिरसि चमसं, प्रणीताप्रणयनं कपालानि चैकैकपार्श्वयोः शूर्पं उदरे पात्रीं समवत्तधानीं पृषदाज्यवतीम्, शिश्ने शम्यामरणी वृषणयोरन्तरोरूयज्ञपात्राण्यन्यानि अन्ववहरणं मृन्मयाश्ममयान्ययस्मयानि वा ब्राह्मणाय दद्यात् ।

अस्यार्थः । सप्तसु=मुखनासिकाद्वयचक्षुर्द्वयकर्णद्वयरूपेषु । स्फ्यश्च दक्षिणहस्त एव चकारश्रवणात् । अत्र यद्यपि जुह्वाः प्रथममुपधानं प्रतीयते, तथापि वक्ष्यमाणहोमस्य जुह्वैव कर्तव्यत्वात्तदर्थक्रमाद्धोमान्त एवोपधानं बोध्यमिति देवयाज्ञिकः । गृह्यकारिकायां तु "हवण्या पितृदिङ्मुख" इत्यादिनाग्निहोत्रहवण्यैवाग्निमहोम उक्त इति तन्मते जुह्वाः पाठक्रमेणैवासादनमिति बोध्यम् । एवं स्फ्यस्यापि श्रुतौ सर्वान्त एवोपधानाम्नानात् श्रौतक्रमस्य च स्मार्तक्रमापेक्षया प्राबल्यात्सर्वान्त एवोपधानम्, घृतपूर्णत्वं तु जुह्वामेव, सन्निधानात् । अत्र यन्मतेऽग्निहोत्रहवण्या वक्ष्यमाणो होमस्तन्मते तस्य नास्मिन् काल उपधानम् । जुह्वादीनां प्रागग्राणामासादनमिति देवयाज्ञिकः । नासिकयोः=नासापुटयोः । स्रुवः=ऐष्टिको होमार्थश्चेति द्वौ । तत्राद्यस्य सव्यायां नसि, इतरस्येतरस्यां तत्राद्यैष्टिकस्योपग्रहणात्सर्वान्त एवोपधानम् । प्राशित्रहरणे । एकं ब्रह्मभागावदानार्थमपरं तदपिधानार्थं तत्राद्यस्य दक्षिणे कर्णे, अन्त्यस्योत्तरत्र । द्वितीयं । शूर्पं वरुणप्रघासस्थकरम्भपात्राणामिति हरिस्वामिनः । कर्कस्तु प्रतिप्रस्थातृविहारस्थमित्याह । न च प्रतिप्रस्थातृकर्तृकयागस्याऽऽमिक्षाद्रव्यकत्वात्तत्र शूर्पाभाव इति वाच्यम् । तन्मते मेष्यर्थयवानां प्रदेयप्रकृतित्वेन तत्र शूर्पसद्भावात् । अकृतवरुणप्रघासिकस्य तु पैष्टिकमेव द्विधा कृत्वोपधेयं छित्त्वैकमिति तैत्तिरीयपाठात् । यत्तु द्विवचनबलाल्लौकिकग्रहणमिति वासुदेवेनोक्तम् । तन्न । प्रतिपत्तित्वात् पात्रासादनस्य । समवत्तधानीम्=इडापात्रीम् । पृषदाज्यवतीम्=पृषदाज्यपूर्णाम् । समवत्तधानीग्रहणमुद्धरणहविर्ग्रहणपात्र्योर्व्यावृत्त्यर्थम् । अतोऽनयोरन्ययज्ञपात्रवदूर्वोरन्तरुपधानम्, अरण्योरपि प्रागग्रयोरेवासादनं पात्रान्तरवत् पादयोरधरां प्राचीमिति वक्ष्यमाणछन्दोगपरिशिष्टवचनेऽनाहिताग्निं प्रति तथा

दर्शनाच्च । उदगग्रयोरिति देवयाज्ञिकः । कृष्ण=ताम्रमयी । यज्ञपात्राणि=उलूखलमुसलादीन्यनुक्तस्थानानि । उलूखलं च न्युब्जमासादयेत् । मुसलेन सह न्युब्जमन्तरूर्ध्वमुलूखलमिति छन्दोगपरिशिष्टात् । अत एव पात्रान्तराणामुत्तानता । यद्यपि चेदं प्रकरणादनाहिताग्निविषयं तथाप्यविरोधादाहिताग्नेरपि सम्बध्यते । अत्र च यज्ञपात्रत्वाविशेषाद्धरणप्राशित्रपश्वादिलक्षणाग्निधपात्राणामपि अग्नेरुपधानमिति देवयाज्ञिकः । तन्न । जुहूत्वाद्यविशेषेण तत्र तत्रोपधानस्य प्राप्तिः । वस्तुतो माद्वीयागाद्यङ्गभूतजुह्वादीनामपि दर्शपात्रायायतन्त्र तत्रासादनादृष्टप्रतिपत्तेरविलापाय तत्र तत्रासादनमेव युक्तञ्चाह । अतो यदा प्राकृतकार्यकारि तेषु पात्रं तदैव परिस्तरणादावासादनं नान्यदेति युक्तम् । एवं सोमाङ्गभूतानां प्रचरण्यादीनामप्यूह्यमासादनम् । न च तत्रातिदेशाभावात् कथं प्रतिपत्तिप्राप्तिः । एतस्यानारभ्याधीतत्वेन सर्वासु प्रकृतिषु निवेशात् । याज्ञिकास्तु दर्शपूर्णमासपात्रव्यतिरिक्तानां प्रतिपत्तिर्न भवतीत्याहुः । एवमौपासनपात्राणामपि येषां स्रुवादीनां स्थानमुक्तम्, तेषां तत्रैवासादनमन्येषां तूष्णीं स्तरणानि ज्ञेयम् । अतश्च यद्देवयाज्ञिकेन तद्दर्शनार्थैवासादनं यज्ञपात्रत्वाविशेषादित्युक्तं तत्र मूलं मृग्यम् । तदासादनप्रकारश्च वक्ष्यते । अप्सुहरणम्=अप्सु प्रक्षेपः । इदं च मृन्मयानां वैकल्पिकं पूर्वं शिरसि निधानस्योक्तत्वात् । अयस्मयानां शस्त्रादीनां जलेऽपि प्रक्षेपः । ब्राह्मणाय वा दद्यादिति वाशब्दश्रवणात् । एवं पात्रासादनमुक्त्वा दाहादिविधिमाह—स एव । अग्निभिरादीपयेदिति । आहुतिं जुहोति । एषा सातोऽन्या ब्राह्मणोऽस्मात्त्वमधिजातोऽसीति । अग्निभिर्गार्हपत्यादिभिस्त्रिभिरेव तं यदि गार्हपत्यः पूर्वं इत्यादिना श्रुतौ त्रयाणामेव दाहे करणत्वश्रुतेः, सभ्यावसथ्ययोस्तु चितेरुत्तरस्यां दिशि पश्चात्तु प्रक्रमेषु स्थापनं सभ्यावसथ्याग्निहोत्रदहनकर्माणि न प्रयुज्यन्ते चितापदेशादुत्तरस्यां दिशि पश्चात्क्रमान्तिकस्थापनं जानीते शाङ्खायनोक्तेः । आवसथ्यपात्राणां तु तत्र तत्रासादनं भवत्येव । अत एव

शाङ्खायनः ।

पात्राणि तु प्रयुज्यन्ते । अत्र यद्यपि स्थानविशेषो नोक्तस्तथापि पूर्वोक्तस्थानविशेषोऽत्र बोध्यः । अत्र चादीपनात्पूर्वं वह्निना पूजा कार्या ।

अभ्युक्ष्यापि समाधाय वह्निं तत्र विधानतः ।
पुष्पाक्षतैश्च सम्पूज्य देवं क्रव्यादसंज्ञितम् ॥
त्वं भूतकृज्जगद्योने ! त्वं लोकपरिपालकः ।

उक्तः संहारकस्तस्मादेनं स्वर्गं मृतं नय ॥

इति क्रव्यादमभ्यर्च्य शरीराहुतिमाचरेत् ।

इति गारुडोक्तेः । एवं सम्पूज्याहवनीयादीन् गृहीत्वा । "कृत्वा सुदुष्करम्" इत्यादि मन्त्रं पठित्वा चितेरादीपनं कार्यम् ।

गृहीत्वा पाणिना चाग्निं मन्त्रमेतमुदीरयेत् ।

कृत्वा सुदुष्करं कर्म जानता वाप्यजानता ।

मृत्युकालवशं प्राप्य नरं पञ्चत्वमागतम् ॥

धर्माधर्मसमायुक्तं लोभमोहसमावृतम् ।

दहेयं सर्वगात्राणि दिव्याल्लोकान् स गच्छतु ॥

एवमुक्त्वा ततः शीघ्रं कृत्वा चैव प्रदक्षिणम् ।

ज्वलमानं तथा वह्निं शिरःस्थाने प्रदीपयेत् ॥

चतुर्वर्णेषु संस्कार एवं भवति पुत्रक ॥

इति वाराहोक्तेः । आहुतिं जुहोतीति पुत्रो भ्राता वा यो यस्याधिकारी स इति यावत् । ब्राह्मणग्रहणं क्षत्रियवैश्ययोः पुत्रमात्राव्युदासार्थम् । अत्राज्यं संस्कृताहवनीयं परिस्तीर्य स्रुचि स्रुवेण सकृद् गृहीत्वाहवनीये समिधमाधाय—

अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः ।

तदनन्तरमसौ स्वर्गाय लोकाय स्वाहेति मन्त्रेण जुहुयात् ।

अत्र मन्त्रेऽसावित्यत्र प्रेतनाम वक्तव्यमिति देवयाज्ञिकः । इदमग्नय इति त्यागः । स्रुगत्र जुहूः । अनादेशे तस्या एव परिभाषितत्वात् । कारिकायां त्वग्निहोत्रहवणी इत्युक्तम् । "शव्ये तु वा समित्पूर्वं हवण्या पितृदिङ्मुख" इत्यादिना । शव्ये=आहवनीये । अयं चास्मात्त्वमधिजातोऽसीति मन्त्रोऽनूहेनैव स्त्रियां प्रयोक्तव्य इति कर्कः । ततो जुहूहोमपक्षे इदानीं जुह्वा आसादनम् । अग्निहोत्रहवणीहोमपक्षे तु तस्या इदानीमासादनम् । स्रुवमासादयेत् । सौत्रपाठक्रमात्, तदनन्तरं श्रौतपाठानुरोधात् स्फ्यमासादयेत् । अस्मिन् होमे याऽऽज्यस्थाली सा मृन्मयी चेद्‌दग्धु प्रक्षेप्तव्या नो चेदन्तरेणोदकनिधानम् । प्रतिपाद्यत्वाविशेषात् । न चाहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति तृतीयानिर्देशात्पात्राणां गुणत्वप्रतीतेनैवं प्रतिपत्तिरिति वाच्यम् । पात्राणां दाहे गुणत्वेऽपि दक्षिण हस्ते जुहूमासादयतीत्यादौ द्वितीयानिर्देशेन प्राधान्यप्रतीतेरासादनं प्रतिपत्तिः, अत एव पात्राणां नाशादौ न पात्रान्तरोत्पत्तिः । न चैवमपि पात्राणां दाहे करणत्वात्तन्नाशादौ दाहः प्रयोजकः किं न स्यादिति वाच्यम् । दाहेऽपि यज्ञपात्राणामेव करणत्वेन तस्य परप्रयुक्तद्रव्योपजीवित्वेन पुरोडाशकपा-

त्वस्य पात्राणामप्रयोज्यत्वात् । ततश्च स्कन्धे उदकपूर्णं कुम्भं कृत्वा तेन प्रेतपादमारभ्य चितिं परितोऽप्रदक्षिणां धारां दद्यात् । ततो गाढं रोदनं रोदितव्यम् । ततो गाढमेव तस्य सुखं भवेदिति गारुडोक्तेः । अथ स्मार्ताग्नेः पूर्वोदाहृतकात्यायनवचनोक्तोऽपि दाहप्रकारः सुखग्रहणार्थं विशिष्योच्यते । अत्र कारिका—

अथ पुत्रादिराप्लुत्य कुर्याद् दारुचयं बहु ।
भूप्रदेशे शुचौ युक्तं कृत्वा चित्यादिलक्षणम् ॥
तत्रोत्तानं निपात्यैनं दक्षिणाशिरसं मुखे ।
न्यस्त्वा हिरण्यं शिरसि प्रणीतं चमसं तथा ॥
शूर्पे तत्पार्श्वयोरेकं चेद् द्विधा पूर्ववन्न्यसेत् ।
श्रवणाकर्मसम्बन्धि द्वितीयं शूर्पमुच्यते ।
अण्डयोररणिं तद्वत्प्रोक्षणीपात्रमादितः ॥
पात्राणि चान्तरेणोरू मृन्मयान्यप्सु क्षिपेत् ।
अथाग्निं सव्यजान्वक्तो दद्यात् दक्षिणतः शनैः ॥
पूर्ववज्जुहुयाद्धौ सामिद्धं स्रुवेण सः ।
दक्षिणायां स्रुवं दद्यात्रासि स्फयं दक्षिणे करे ।
समिन्धीयात्ततो वह्निं शेषं स्यादाहिताग्निवत् ॥

अत्र मुखमात्रे हिरण्यनिधानम् ।

तिलान् दर्भान् विकीर्याथ मुखे स्वर्णं विनिक्षिपेत् ।

इति गारुडोक्तेः ।

अन्ये तु एतस्य वचनस्य प्रकरणान्मुमूर्षुविषयत्वात्सूत्रोक्तः सप्तस्वपि छिद्रेषु हिरण्यनिक्षेपः कार्य इत्याहुः ।

प्रोक्षणीपात्रमादितः=प्रोक्षणीपात्रमारभ्येत्यर्थः । तेन प्रोक्षण्यादीनां पात्राणामन्तरेणोरूनिक्षेप एव । न च तस्या अग्निहोत्रहवणीस्थानापन्नत्वान्मुख एव निक्षेपो युक्तः "मुखेऽग्निहोत्रहवणीम्" इत्यनेनाग्निहोत्रहोमकरणत्वरूपयोगार्थविशिष्टाया एव मुखे निक्षेप एव प्रतीतेः । अन्तरेणोरुद्वयस्यैवायं विषयः अत एवारणीनिक्षेपोत्तरं प्रोक्षणीपात्रनिक्षेपः । अग्निदानं चाग्निपूजादि कृत्वा कार्यं स्मृत्युक्तानां पदार्थानामत्रापि प्रवृत्तेस्तुल्यत्वात् । स्रुवस्य सव्यायां नास्ति निधानं केचिदिच्छन्ति । इति कात्यायनीयानां दाहाख्यसंस्कारविधिः ।

अथाश्वलायनानाम् ।

तत्राश्वलायनः ।

आहिताग्निश्चेदुपतपेत्प्राच्यामुदीच्यामपराजितायां वा दिश्युद-

स्येत्। अगदः सोमेन पशुनेष्ट्येष्ट्वावस्थेष्वनिष्ट्वा वा, संस्थिते भूमिभागं खान येत् दक्षिणपूर्वस्या दक्षिणापरस्या वा, दक्षिणाप्रवणं प्राग्दक्षिणाप्रवणं वा प्रत्यग्दक्षिणाप्रवणमित्येके । यावानुद्वाहुकः पुरुषस्तावदायामम् । व्याममात्रं तिर्यग्वावतान्तरिक्षमर्वाक् अभितः आकाशं श्मशानम् । बहुलौषधिकं कण्टकिक्षीरिणस्तु यथोक्तं पुरस्तात्। यत्र सर्वत्र अपः प्रस्यन्देरन्। एतदादहनस्य लक्षणं श्मशानस्य, केशश्मश्रुलोमनखानीत्युक्तं पुरस्तात्। द्विगुल्फं बर्हिराज्यं च । दध्यन्यत्र सर्पिरानयन्ति एतत्पित्र्यं पृषदाज्यम् । अथैतां दिशमग्नीन्नयन्ति यज्ञपात्राणि च अन्वञ्चं प्रेतमयुजोऽमिथुनाः प्रवयसः पीठचक्रेण गोयुक्तेनेत्येके। अनुस्तरणीं गामजां वैकवर्णां कृष्णामेके। सव्ये बाहौ बद्ध्वानुसङ्कालयन्ति । अन्वञ्चोऽमात्या अधोनिवीताः प्रवृत्तशिखा ज्येष्ठप्रथमाः कनिष्ठजघन्याः । प्राप्यैवं भूमिभागं गर्त्तोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन् प्रोक्षत्यपेतवीतविचसर्पतात इति। दक्षिणपूर्व उद्धृत्य आहवनीयं निदधाति। उत्तरपश्चिमे गार्हपत्यं दक्षिणपश्चिमे दक्षिणमथैनमन्तर्वेदि इध्माचितिं चिनोति यां जानाति तस्मिन् बर्हिरास्तीर्य कृष्णाजिनं चोत्तरलोम तस्मिन् प्रेतं संवेशयन्ति उत्तरेण गार्हपत्यं हृत्वाऽऽहवनीयमभिमुखशिरसम् । उत्तरतः पत्नीम् । धनुश्च क्षत्रियाय । तामुत्थापयद्देवरः पतिस्थानीयः अन्तेवासी जरद्दासो वोदीर्ष्व नार्यभि जीवलोकमिति । कर्त्ता वृषले जपेत् । धनुर्हस्तादाददानो मृतस्येति धनुरुक्तं वृषलञ्चाधिज्यं कृत्वा सञ्चितिमाचित्वा संशीर्यानुप्रहरेत्। अथैतानि पात्राणि योजयेत् । दक्षिणे हस्ते जुहूं सव्य उपभृतं दक्षिणपार्श्वे स्फ्यं सव्येऽग्निहोत्रहवणीमुरसि ध्रुवां शिरसि कपालानि दत्सु ग्राव्णो नासिकयोः स्रुवौ भित्त्वा चैकम् । कर्णयोः प्राशित्रहरणे, भित्त्वा चैकमुदरे पात्रीं समवत्तधानं च चमसं, उपस्थे शम्यामरणीमूर्वोरुलूखलमुसले जङ्घयोः पादयोः शूर्पे भित्त्वा चैकम् । आसेचनवन्ति पृषदाज्यस्य पूरयन्ति । अमापुत्रो दृषदुपले कुर्वीत लौहायसं कौलालमनुस्तरण्या वपामुत्खिद्य शिरोमुखं प्रच्छादयेत् अग्नेर्वर्मपरिगोभिर्व्ययस्वेति । वृक्कावुद्धृत्य पाण्योरादधाति । अतिद्रव सारमेयौ श्वानाविति दक्षिणं दक्षिणे सव्ये सव्यं हृदये हृदयं पिण्डौ चैके वृक्कापचार इत्येके। सर्वां यथाङ्गं विनिक्षिप्य चर्मणा प्रच्छाद्येममग्ने चमसं माविजिह्वर इति प्रणीताप्रणयनमनुमन्त्रयते । सव्यं जान्वाच्य दक्षिणाग्नावाज्याहुतीर्जुहुयादग्नये स्वाहा, सोमाय स्वाहा, (१)लोकाय स्वाहा, अनुमत्यै स्वाहा इति पञ्चमीमुरसि प्रेतस्यास्माद्वै त्वमजायथा अयं त्वद-

(१) कामाय स्वाहा इत्यादर्शपुस्तके पाठः

धिजायतामसौ स्वर्गाय लोकाय स्वाहेति प्रेष्यति युगपदग्नीन् प्रज्वालयतेति तं दह्यमानमनुमन्त्रयत प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति समानमुत्तरपुरस्तादाहवनीयस्य जानुमात्रं गर्त्तं खात्वाऽग्निः पूरीयत्वाऽवका शीपालमित्यवधापयेत् ।

अस्यार्थः । उपतपेत् । व्याधिभिरिति शेषः । अपराजितायाम्=ऐशान्याम् । उदवस्येत्=मुमुर्षुरेव ग्रामाद्बहिर्गच्छेदित्यर्थः । यदि अगदो रोगरहितः स्यात् तदा सामादिभिरिष्ट्वा अनिष्ट्वा वा ग्रामं प्रविशेत् । सामाऽत्र ज्योतिष्टोमः पशुर्निरूढः । प्रकृतत्वात् । इष्टिराग्निदैवत्यैवात वृत्तिकृत् । अथ यदि संस्थितो मृतस्तदाग्नेय्या नैर्ऋत्या वा भूप्रदेशं खानयत । दक्षिणाप्रवणमाग्नेयीप्रवणं वेत्यर्थः । अर्वाक्-अधस्तः । श्मशानं दहनदेशोऽस्थिसञ्चयनदेशश्चेति द्विविधम् । तदुभयमपि अभित आकाशं वृक्षादावरणशून्यमित्यर्थः । कण्टकी क्षीरिणी उद्वासयेदिति शेषः । पुरस्ताद्व्याख्यातु परीक्षायाम् । प्रध्वंसेरन्=गच्छेरन् । एतद्दहनाख्यस्यैव श्मशानस्य लक्षणं वास्थिसञ्चयनाख्यस्य । केशश्मश्रुलोमनखानीति यत्पुरस्तात्षष्ठे(१) उक्तं तदिहापि कुर्यादित्यर्थः । तत्र चैवमुक्तं संस्थितं तीर्थेनानिहृत्य । अभूते प्रेतालङ्कारान् कुर्वन्ति केशश्मश्रुलोमनखानि वापयन्ति नलदेनानुलिम्पन्ति नलदमाला प्रतिमुञ्चन्ति निष्पुरीषमके कृत्वा पृषदाज्यं पूरयन्ति । अहतस्य वाससः पाशतः पादमात्रमवच्छिद्य प्रोर्णुवन्ति प्रत्यक्दशेनाविःपादमवच्छेदं प्रेतस्य पुत्रा अमाकुर्वीरन्निति । पाशतः मूले । पादमात्रं चतुर्थांशमात्रम् । अवच्छिद्य छित्त्वा प्राक्शिरस्कं प्रेतं शाययित्वा वाससोऽग्रं यथा पादपर्यन्तं भवेत्तथा छादयेत् । अवच्छेदं=छिन्नवस्त्रम् । पुत्रा अमाकुर्वीरन्=संगृह्णीयुरित्यर्थः । द्विगुल्फं प्रभूतम् । उपकल्पयेदिति शेषः । एतदिति । एतत् प्रेतकार्यार्थमित्यर्थः । अमिथुनाः स्त्रियः पुरुषाश्च न मिश्रा इत्यर्थः । पीठचक्रेण शकटादिना । अमात्याः=बान्धवाः । अधोनिवीताः=अनुपरिकृतवाससः । गर्तोदकेनेति । खननकाले उत्तरपुरस्तादाहवनीयस्य जानुमात्रं गर्त्तं खात्वा तत्रापो निषिच्यावका शीपालं चावधापयेदुक्तेनेति वृत्तिकृत् । कर्तोदकेनेति पाठे तु कर्त्ता उदकेनोत्तिष्ठेत् । अत्राचारात्प्रथमं कर्त्ता और्ध्वदेहिकं करिष्य इति सङ्कल्प्योपसर्प मातरमिति मन्त्रेण भूमिमनुमन्त्र्य द्विविज्ञात । अजातेति मन्त्रेण ता प्रोक्ष्य पश्चाच्छमीशाखादिनाऽऽयतनप्रोक्षणं कुर्यादिति सम्प्रदायविदः । प्रसव्यम्=अप्रदक्षिणम् । त्रिमन्त्रावृत्तिः । अत्र यमाय दहनपतये चाहिलखामीत्यादिभिर्मन्त्रैः शलाकया रेखात्रयमुल्लिखेत्, इति केचित् । दक्षिणपूर्वे उक्तानित्यनुक्तखानस-

(१) आश्वलायनश्रौतसूत्रस्य षष्ठाध्याये ।

मीपे आहवनीयं निदधाति। अथैनमन्तर्वेदीति। अत्राथशब्दबलादनुमन्त्रणस्याग्रे दर्शनादस्मिन्काले चमसेन प्रणीताप्रणयनं कार्यमिति वृत्तिकृत्। चितिश्च खाते हिरण्यशकलं निधाय तिलानवकीर्य कार्या। यो जानातीति कर्तुरनियमार्थम्। तस्मिन् बर्हिरास्तीर्येत्यादि तु कर्त्तैव कुर्यात्। क्त्वाप्रत्ययस्य पूर्वकालतामात्रपरत्वात्। उत्तरत इति प्रेतस्योत्तरतश्चितावेव पत्नीं संवेशयन्ति शाययन्ति। क्षत्रियस्य विशेषमाह। धनुश्चेति चकारात्पत्नीमपि। पतिस्थानीय इति हेतुगर्भं विशेषणम्। पतिस्थानीयत्वादित्यर्थः। अन्तेवासी=शिष्यः। जरद्दासो=बहुकालं कृतदास्यः। स वा तां पत्नीमुत्थापयेदित्यनुषङ्गः। वृषले जरद्दासे उत्थापयितरि सति कर्त्ता मन्त्रं जपेत्। अर्थादन्यपक्षे उत्थापयितैव जपेत्। धनुष उत्थापने मन्त्रमाह। धनुर्हस्तादित्यादिना। वृषले उक्तं यत्तस्य न मन्त्रजप इति। संचितिं=प्रेतापरिचितिं अचित्वा अकृत्वा प्रागिति यावत्। तद्धनुरधिज्यमुपरिज्यं प्रेतस्योत्तरतः स्थापयेत्। अथैतानीति। अत्राथशब्दः शाखान्तरोक्तकर्मोपसंग्रहार्थः। तेन मुखे नासिकाद्वयेऽक्षिद्वये कर्णद्वये च हिरण्यशकलप्रक्षेपः। प्रेतशरीरे घृताक्ततिलप्रक्षेपः कार्य इति वृत्तिकृत्। एतानि=प्राकृतानि। प्राकृतानामेवाऽऽधानकालोत्पन्नानां सर्वकर्मशेषत्वेनसमासे प्येकस्मिन् कर्मण्युत्तरकर्मार्थं स्थापितत्वात् वैकृतानां तु तत्तत्काले स्वीकृतानां तत्तत्कर्मापवर्गेऽप्रयुक्तत्वेनास्थापितत्वात्। न च प्रतिपत्तेर्धारणप्रयोजकत्वस्येष्टत्वात्प्रतिपत्त्यनुरोधेनैव वैकृतानि स्थाप्यन्तामिति वाच्यम्। सत्यपि प्रतिपत्तेर्धारणप्रयोजकत्वे प्रकृते परप्रयुक्तधारणोपजीवित्वेन धारणप्रयोजकत्वाभावात्। अत एवावघानकालीनतुषोपवापस्य कपालधारणप्रयोजकत्वमुक्तं तन्त्ररत्ने। अत एव विकृतिमध्ये मरणे तेषामपि योजनं भवत्येवाविशेषादिति वृत्तिकृदनुसारिणः।

अन्ये तु वैकृतानामपि न विकृत्यपवर्गे अपवर्गः। प्रयोगान्तरार्थं स्थापनस्यावश्यकत्वात्। अथ तत्रान्यानि ग्रहीष्यन्ते। तदा प्राकृतेष्वपि समानम्। अथ प्रतिपत्तिबलादेव लाघवात्तानि स्थाप्येरन् तदा वैकृतानामपि आतिदेशिकप्रतिपत्तिबलात्स्थाप्यत्वेन भवत्येव योजनमित्याहुः। तन्न। न हि वयं प्रतिपत्तिविधिबलात्प्राकृतानां स्थापनमिति ब्रूमः। किन्तु स्वतन्त्रकालोत्पत्तेः। अत एवाधानमङ्गमिति कृत्वाचिन्तायां नाधानं प्रतिकर्मभेदनानुष्ठेयं स्वतन्त्रकालत्वादित्युक्तं तृतीये। तस्माद्यथोक्ते दक्षिणे हस्ते जुहूं योजयेदिति सर्वत्र सम्बध्यते। दत्सु=दन्तेषु ग्रावाणः। इदं च सोममध्ये मरणे। अन्यथा तु तेषामवभृथनयनप्रतिपत्तेरुक्तत्वात् नेयं प्रतिपत्तिः। स्रुवाविति द्विवचनं विकृत्यभिप्रायम्। पात्रीं=

दारुपात्रीम्, समवत्तधानं चमस इडापात्रीम् । येषां तु पात्राणि योजयेदिति सामान्यविधिनैव योजनस्य विहितत्वादनियतदेशमनियतकालं च योजनं ज्ञेयम् । आसिञ्चनवन्ति=बिलवन्ति । अमापुत्रइति । अमाकुर्वीतेत्यन्वयः, आत्मन उपयोगार्थं गृह्णीयादित्यर्थः । कौलायसं=लोहविकारं शस्त्रादि । कौलालं=मृन्मयादि तदपि पुत्रो गृह्णीयादित्यर्थः । अत्र "गौरनुस्तरणी प्रोक्ता न पक्षोऽयं कलौ भवे"दिति वचनेन कलौ अनुस्तरणीपक्षस्य निषिद्धत्वादथ यदानुस्तरणी नास्ति तदा सक्तुहर्वीषि तत्स्थाने न तदभावे सक्त्वादेर्विहितत्वात्सक्तुपिण्डा एव तत्स्थाने देयाः । तत्र द्वौ पिण्डौ कृत्वा अतिद्रवसारमेयाविति मन्त्रेण पाण्योरादध्यात् । इत्येकः पक्षः । अथवा अपूपाकृतिसक्तुपिण्डं कृत्वा ललाटे मुखे चाग्नेर्वर्मेति मन्त्रं सकृत् पठित्वा दद्यात् । ततः पिण्डद्वयं कृत्वा "अतिद्रव"इति मन्त्रं सकृदेव पठित्वा पाण्योर्दद्यात् । तथा हृदयाकारं सक्तु पिण्डं कृत्वा हृदयं तूष्णीं दद्यात् । ततो अन्येऽपि तत्तदङ्गसदृशाः पिण्डास्तत्तदङ्गे देया इत्यपरपक्षः । अत्र पिण्डानां पृषदाज्येनाभिघारणं केचिदिच्छन्ति । अनयोश्च शक्त्यनुरोधेन व्यवस्था प्रणीताप्रणयनपूर्वं विहितमाज्याहुतिचतुष्टयं तन्त्रनिवृत्त्यर्थमिति वृत्तिकृत् । तेन प्रेतोपासनं करिष्य इति संकल्प्य समिद्द्वयमादाय अग्निं कामं लोकमनुमतिम् । एताः प्रधानदेवता एवाग्न्याद्याज्यद्रव्येण प्रेतं प्रेतस्योरासि आज्येन यक्ष्ये इति सङ्कल्प्य व्याहृतिभिः समिद्द्वयं हुत्वा चितिसहिताग्नीन् परिस्तीर्य पर्युक्ष्य तूष्णीमाज्यं संस्कृत्य स्रुवं संमृज्य प्राचीनावीति स्रुवेण होमं कुर्यादित्येवेति सम्प्रदायविदः । उद्देशत्यागस्तु यथालिङ्गं पञ्चम्याः प्रेतायेति त्यागः । पञ्चम्या पृषदाज्येन होम इति केचित् । स्रुवोऽन्नान्य इति वृत्तिकृत् । असाविति स्थाने प्रेतस्य नाम गृह्णीयात् । अत्र प्रेतस्योरासि होमविधानादर्थात्पूर्वं होमं कृत्वा पश्चात्सक्तुपिण्डदानं कार्यमित्यपि केचित् । प्रेहि पथिभिः पूर्व्येभिरिति समानमिति समानं प्रागुक्तेनानुद्रवणेन । अनुद्रवणे हि एताश्चतुर्विंशतिर्ऋचो विहितास्ता अत्रापि ज्ञेया इत्यर्थः । गर्भोदककरणं त्वर्थात्पूर्वं ज्ञेयम् ।

अथास्वलायनानाहिताग्नेर्दाहप्रकारः कथ्यते ।

तत्र वृत्तिकृत् ।

तत्र त्वनाहिताग्न्यादेर्विशेषो वक्ष्यतेऽधुना ।
विगुल्फं बर्हिराज्यं चेत्येवमन्तं समं भवेत् ॥
नास्त्यानुस्तरणी कार्या पात्राणां योजनं तथा ।
पृषदाज्यं तथाचार्यादिति गृह्यविदां मतम् ॥

तां दिशं तु नयेदग्निं प्रेतं चापि ततः परम् ।
अयुजो मिथुना वृद्धाः पीठचक्रेण वा भवेत् ॥
प्रेतस्य स्पृष्टतोऽमात्या इयुः पूर्ववदेव च ।
भूमिभागं ततः प्राप्य कर्ता प्रोक्षति पूर्ववत् ।
उद्धतान्ते निधेयोऽग्निर्देशे तूत्तरपश्चिमे ।
तथा शाखान्तरे दर्भाः प्रणीताः प्रणयेत्ततः ।
खाते हिरण्यशकलं तिलांश्चापि विनिक्षिपेत् ।
तस्मिं बर्हिपुरैवास्मामध्मा चेत्यादि पूर्ववत् ।
यत्तूपस्थानपर्यन्तं धनुर्हरणमथापि वा ।
ततो हिरण्यशकलैः छिद्राण्यपि दधाति वै ।
घृताक्तांस्तिलांश्चापि किरेत्प्रेतकलेवरे ।
अथ प्रमग्नं चमसं पूर्णपात्रानुमन्त्रणम् ।
सव्यं जानु निपात्याथ चतस्रोऽग्नौ जुहोति वै ।
तथाभूतश्च जुहुयात्पञ्चमीं हृदये ततः ।
ततः प्रज्वालयन्नग्निं प्रैषो नात्र भवेदिति ।
तं दहाम्यग्निमित्यादि सर्वं पूर्ववदेव तु ।
अस्थिसंचयनाद्यन्तु सत्रमाख्याम कथ्यते ।

अत्र पात्रचयनाभावो नानाहिताग्नेः पात्राणि विद्यन्त इति बौधायनवचनाज्ज्ञायत इति ध्येयम् । पृषदाज्यं तथाचार्यादिरत्र भवतीति शेषः । तथाभूत इति सव्यं जानु निपात्येत्यर्थः ।

अथ छन्दोगानां पात्रचयनविशेष उच्यते ।

तत्र तत्सूत्रम् ।

मध्ये देवयजनस्य चितां चिनुयुः पश्चाद्गार्हपत्यमुपदध्युः । पुरस्तादाहवनीयं तं दक्षिणाग्निं चितावाहृतं यज्ञपात्रैः कल्पयेत् । शिरसि कपालानि युञ्ज्यात् । सप्रशाव्यं च चमसं ललाटे प्राशित्रहरणं नासिकयोः स्रुवौ आस्ये हिरण्यमवधायानुस्तरणिक्या गोर्मुखं वपया प्रच्छाद्य नसोर्विलापनहवण्यौ निखनी दक्षिणे पाणौ जुहूमुदरे पात्रीमुपस्थे कृष्णाजिनं अन्तरेण सक्थिनी शम्यां दृषदुपले वृषणे नाद्क्षामो दक्षिणस्योपस्थ दक्षिणेन उलूखलमनुसक्थं मुसलं पादयोः शूर्पं सर्वाण्युत्तानानि पृषदाज्यवन्ति कृत्वा सर्वेभ्योऽग्निभ्य उल्मुकराजीस्तृणुयुः । यथास्मिन्नवनये समवेक्ष्यन्तीति च्छन्दोगा यज्ञपात्रेषु इतः छन्दोगः पारगायेत् आकेसुपर्णामिति धूम उदिते त्वं पक्वं जुहुकृणवतीति प्रज्वालितेऽग्नौ भूपमहांअसीत्येतयोरन्यतरेण ।

यच्च नादेक्ष्याम इति । यन्नादिश्यत विशिष्य नापदिश्यते यथा अरण्यादि तदध्वनैव स्थापयेदित्यर्थः । ऊरुस्य कटिसन्धिकपृष्ठजघनप्रदेशस्य । नाके सुपर्णमिति साम त्रिः पठेत् । अथ छन्दोगानाहिताग्नेर्विशेष उच्यते ।

छन्दोगपरिशिष्टे ।

अथ पुत्रादिराप्लुत्य कुर्याद् दारुचयं महत् ।
भूप्रदेशे शुचौ शुक्ले पश्चाद्दिग्यादिलक्षणे ।
तत्रोत्तानं निपात्यैनं दक्षिणाशिरसं मुखे ।
आज्यपूर्णां स्रुचं दद्याद्दक्षिणाग्रां नासि स्रुवम् ।
पादयोरधरां प्राचीमरणीमुरसीतराम् ।
पार्श्वयोः शूर्पचमसे सव्यदक्षिणयोः क्रमात् ।
मुसलेन सह न्युब्जमन्तरोर्वोरुलूखलम् ।
चात्रोविलीकमत्रैवाहानश्रुतयनो विभोः ।
अपसव्येन कृत्वा तु वाग्यतः पितृदिङ्मुखः ।
अथाग्निं सव्यजानुक्नो दद्याद्दक्षिणतः शनैः ।
अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः ॥
असौ स्वर्गाय लोकाय स्वाहेति यजुरुदीरयन् ।
एवं गृहपतिर्दग्धः सर्वं तरति दुष्कृतम् ॥

चात्रोविलीकं=पात्रविशेषः । अनाहिताग्निस्त्रीविषये विशेषस्तेनैवोक्तः ।

अनयैवावृता नारी दग्धव्या या व्यवस्थिता ।
अग्निप्रदानमन्त्रोऽस्या न प्रयोज्य इति स्थितिः ॥

अथ सर्वसाधारण्येन निरग्नेर्विशेष उच्यते । तत्र—

गृह्यकारिका ।

एवमेवागृहीताग्नेः प्रेतस्य विधिरिष्यते ।
तत्र तूष्णीं भवेत्सर्वं पात्रविन्यासमन्तरा ।

केचित्तु–इदं तूष्णींविधानं कात्यायनविषयम् । अन्येषां तु समन्त्रकमेवेत्याहुः । अन्योऽपि विशेषस्तत्रैव ।

सगोत्रजैर्गृहीत्वा तु चितामारोप्यते शवः ।
अधोमुखो दक्षिणादिक्चरणस्तु पुमानिति ॥
उत्तानदेहा नारी च सपिण्डैरपि बन्धुभिः ।

अथ सूतिकादिमरणे ।

मिताक्षरायाम्—

स्मृतिः ।

सूतिकायां मृतायां तु कथं कुर्वन्ति याज्ञिकाः ।

कुम्भे सलिलमादाय पञ्चगव्यं क्षिपेत्ततः ॥
पुण्याभिरभिमन्त्र्यापो वाचा शुद्धिं लभेन्नरः ।
तेनैव स्नापयित्वा तु दाहं कुर्याद्यथाविधि ॥

गृह्यकारिकायाम् ।

सूतिकामरणे प्राप्ते सर्वौषध्यनुलेपनम् ।
असूतकी तु संस्पृष्ट्वा शूर्पाणां तु शतं क्षिपेत् ॥

स्मृत्यन्तरे ।

उदक्या सूतिका वापि मृता स्याद्यदि तां तदा ।
आशौचे त्वनतिक्रान्ते दाहयेदन्तरा यदि ॥
उद्धृतेन तु तोयेन स्नापयित्वा तु मन्त्रतः ।
आपोहिष्ठेति तिसृभिर्हिरण्यवर्णाश्चतसृभिः ॥
पवमानानुवाकेन यदन्तीति च सप्तभिः ॥
ततो यज्ञपवित्रेण(१) गोमूत्रेणाथ च द्विजाः ।
स्नापयित्वाऽन्यवसनेनाच्छाद्य शवधर्मतः ॥
दाहादिकं ततः कुर्यात् प्रजापतिवचो यथा ।
रजस्वलाविषये मिताक्षरायाम्—

स्मृतिः ।

पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम् ।
वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकम् ॥
रजस्वलायाः प्रेतायाः संस्कारादीनि नाचरेत् ।
ऊर्ध्वं त्रिरात्रात्स्नातां तां शवधर्मेण दाहयेत् ॥

गर्भिणीमरणे ।

शौनकः ।

गर्भिणीमरणे प्राप्ते गोमूत्रेण जलैः सह ।
आपोहिष्ठादिभिर्मन्त्रैः प्रोक्ष्य कर्त्ता समाश्रितः ॥
प्रेतं श्मशाने नीत्वाथोल्लिख्य सव्योदरं ततः ।
पुत्रमादाय जीवेंश्चेत् स्तनं दत्त्वा सुताय तु ॥
यस्ते स्तनः शशय इत्यृचा ग्रामे निधाय च ।
उदरं चाव्रणं कृत्वा पृषदाज्येन पूर्य च ॥
मृद्भस्मकुशगोमूत्रैरापोहिष्ठादिभिस्त्रिभिः ।
स्नाप्य चाच्छाद्य वासोभिः शवधर्मेण दाहयेत् ॥
षडशीतिमते गद्यानि ।

(१) यज्ञपवित्रम्=आपो अस्मानिति विज्ञानेश्वरः ।

गर्भिण्यां मृतायां दक्षिणाशिरसं निधाय तस्या नाभेरधस्तात्सव्य-मुदरं चतुरङ्गुलं "हिरण्यगर्भः समवर्तत" इति छित्वा गर्भश्चेदप्राणस्तं प्रक्षाल्य निखनेत्, स यदि जीवन् "जीव त्वं मम पुत्रक" इत्युक्त्वा क्षेत्रियैत्वेति पञ्चभिः स्नापयित्वा हिरण्यमन्तर्धाय भूमौ निधाय व्याहृतिभिरभिमन्त्र्य यस्ते स्तनः शशय इति स्तनं पाययित्वा शिशुं ग्रामं प्रापयेद्गर्भच्छेदस्थले शतायुधेति पञ्चाहुतीर्हुत्वा प्राणाय स्वाहा, पूष्णे स्वाहेत्यनुवाकाभ्यां व्याहृत्या चाज्यं हुत्वाग्निसूत्रेण सङ्कुच्य घृतेनानुलिप्य ब्राह्मणाय तिलान् गां भूमिं सुवर्णं दद्यात् । अथ यथोक्तेन कल्पेन दहेत् । अत्र च "सगर्भदहने तस्या वर्णजं वधपातकम्" इत्यादिवचनेषु वधपदश्रवणात्प्राणवियोगस्यैव च वधत्वात्प्राणसंक्रमणोत्तरमेवायं विधिर्न प्रथमादिमासेषु इति केचित् ।

अथ सहगमनानुगमनप्रकारः ।

तत्र—

स्मृतिः ।

> अथान्वारोहणं स्त्रीणामात्मनो भर्तुरेव च ।
> सर्वपापक्षयकरं निरयोत्तारणाय च ॥
> अनेकस्वर्गफलदं मुक्तिदं च तथैव च ।
> जन्मान्तरे च सौभाग्यं धनधान्यविवृद्धिदम् ॥

अन्वारोहणं द्विविधं सहगमनमनुगमनं चेति । तत्र भर्तृसंस्कारकचितारोहणं सहगमनं तद्भिन्नचितारोहणमनुगमनं तस्य द्विविधस्यापीदं फलम् । अत्र च सर्वेषां स्वर्गपुत्रादीनामेकस्मृत्युपात्तानामेकस्मिन् प्रयोगेऽप्युत्पत्तिः । लाघवेनानेकेषु स्वर्गपुत्रादिष्वेकस्यैव कामशब्दस्य कल्पनेन फलभेदाभावात् । अत एव नायं योगसिद्ध्यधिकरणस्य विषयः ।

स्मृत्यन्तरोपात्तानि तु कामशब्दभेदाद्भिन्नानि फलानीति न तेषामेकस्मिन् प्रयोगे उत्पत्तिः । अत्राचाराद्धरिद्राकुङ्कुमाञ्जनादियुतशूर्पाणि सुवासिनीभ्यो दद्यात् । तत्र—

मन्त्रः ।

> लक्ष्मीनारायणो देवो बलसत्त्वगुणाश्रयः ।
> गाढं सत्त्वं च मे देयाद्वायनैः(१) परितोषितः ॥
> सोपस्कराणि शूर्पाणि वायनैः संयुतानि च ।
> लक्ष्मीनारायणप्रीत्यै सत्त्वकामा ददाम्यहम् ।

अग्निमकृत्यमुक्तम् ।

---

(१) वाणकैरिति निर्णयसिन्धौ पाठः ।

स्मृत्यन्तरे ।

अग्नेः समीपमागत्य पञ्चरत्नानि पल्लवान् ।
नीलाञ्जनं तथा बध्वा मुखे मुक्ताफलं न्यसेत् ॥
ततोऽग्निप्रार्थनं कुर्यान्मन्त्रेणानेन निश्चितम् ।
स्वाहासंश्लेषनिर्विघ्नसर्वगोत्र हुताशन ॥
स्वर्गमार्गप्रदानेन नय मां पत्युरन्तिकम् ।

तत आचारादग्नावाज्येनाग्नये तेजोधिपतये, विष्णवे सत्त्वाधिपतये, कालाय धर्माधिपतये, पृथिव्यै लोकाधिष्ठात्र्यै, अद्भ्यो रसाधिष्ठात्रीभ्यः, वायवे बलाधिपतये, आकाशाय सर्वाधिपतये, कालाय धर्माधिष्ठात्रे, अद्भ्यः सर्वसाक्षिणीभ्यः, ब्रह्मणो वेदाधिपतये, रुद्राय श्मशानाधिपतये च हुत्वाग्निं प्रदक्षिणीकृत्य दृषदुपले सम्पूज्य पुष्पाञ्जलिं गृहीत्वाग्निं प्रार्थयेत् ।

त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेव देव जानीषे न विदुर्यानि मानुषाः ॥
अनुगच्छामि भर्तारं वैधव्यभयपीडिता ।
स त्वं मार्गप्रदानेन नय मां भर्तुरन्तिकम् ॥
मन्त्रमुच्चार्य शनकैः प्रविशेच्च हुताशनम् ।

अङ्गिराः ।

मृते भर्तरि या नारी समारोहेद् हुताशनम् ।
साऽरुन्धती समाचारा स्वर्गलोके महीयते ॥

यत्त्वङ्गिराः ।

या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत् ।
सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेत् ॥

यच्च व्याघ्रपात् ।

न म्रियेत समं भर्त्रा ब्राह्मणी शोककर्षिता ।
न ब्रह्मगतिमाप्नोति मरणादात्मघातिनी ॥ इति ।

तत्पृथक्चित्यारोहणविषयम् ।

पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति ॥
अन्यासां चैव नारीणां स्त्रीधर्मोऽयं परं स्मृतः ।

इत्युशनसोक्तेः । अतश्च पृथक्चितिः क्षत्रियादिपरा । अत्र केचित् क्षत्रियादेः पृथक्चितिरेवेत्याहुः । तन्न । अन्यासां चैवेत्यनेन तासामेवायं धर्म इत्यवधारणप्रतीतेर्धर्मान्तरस्याप्रतिषेधात् । अन्यथा हि तासामयमेव धर्म इत्यवधारणापत्तिः । तस्मात्क्षत्रियादेः पृथक्चितिरपृथक्चितिश्चेति सिद्धम् । पृथक्चितिविधिश्च—

ब्राह्मे ।

देशान्तरमृते पत्यौ साध्वी तत्पादुकाद्वयम् ।
निधायोरसि संशुद्धा प्रविशेज्जातवेदसम् ॥

अत्र पादुकाद्वयाभावेऽप्यनुगमनं भवत्येवेति केचित् ।

यत्त्वत्र केचिद् ब्राह्मण्या मरणनिषेधकान्यङ्गिरसादिवचनानि तानि प्रायश्चित्तार्थमृतेन पतितावस्थायां वा मृतेन सह मरणनिषेधपराणीत्याहुः । तन्न । पतितादीनां दाहाद्यभावेनैव सहगमनाप्राप्तेर्निषेधवैयर्थ्यापत्तेः । क्षत्रियादीनां पतितादिना सहगमनप्राप्तेः ब्राह्मणीग्रहणवैयर्थ्यापत्तेश्च ।

यत्तु—

ब्रह्मघ्ना वा कृतघ्नो वा मित्रघ्नो वा भवेत्पतिः ।
पुनात्यविधवा नारी तमादाय मृता तु या ॥

इति हारीतीयं पतितादिनापि सहगमनबोधकं, तत्पतितादीनां दाहादिनिषेधेनैव सहगमनस्य दूरापास्तत्वात् सहगमनविधिप्रशंसार्थमेवेति पृथ्वीचन्द्रः । जन्मान्तरीयपापवतः सहमरणेनोद्धार इति तु स्मार्त्तादयो गौडाः । सहगमनादौ अनधिकारिण्य उक्ताः—

सङ्ग्रहे—

स्वैरिणीनां गर्भिणीनां पतितानां च योषिताम् ।
नास्ति पत्याग्निसंवेशः पतितौ तु तथा उभौ ॥

बृहस्पतिरप्याह ।

बालसंवर्धनं त्यक्त्वा बालापत्या न गच्छति ।
व्रतोपवासनियता रक्षेद्गर्भं च गर्भिणी ।
तृतीयपादे रजस्वलासूतिका चेति क्वचित्पाठः ॥

नारदीये ।

बालापत्या च गर्भिण्यो ह्यदृष्टऋतवस्तथा ।
रजस्वलाराजसुते नारोहन्ति चितां तु ताः ॥

रजस्वलाविषयविशेषो ।

भविष्ये ।

तृतीयेऽह्नि उदक्यायाा मृते भर्तरि वै द्विजाः ।
तस्यानुमरणायाथ स्थापयेदेकरात्रकम् ॥

अनुमरणं सहमरणस्याप्युपलक्षणम् । तृतीयेह्नीति श्रवणादाद्ययोरह्नोर्भर्तृमरणे सहगमनाभाव इति गम्यते । यदा तु देशकालव्यवधानयोरप्यह्नोगन्तुमिच्छति तदा तत्र विधिर्दैवयाज्ञिकानिबन्धोदाहृते वचने ।

यदा स्त्रियामुदक्यायां पतिः प्राणान् समुत्सृजेत् ।
द्रोणमेकं तण्डुलानामवहन्याद्विशुद्धये ॥

असृक् तन्मुसलाघातैः स्रवते योनिमण्डलात् ।
विरजस्कां मन्यमाना स्वे चित्ते तदसृक्क्षयम् ॥
कृष्णाशौचं प्रकुर्वीत पञ्चमृत्तिकया पृथक् ।
त्रिंशद्विंशतिर्दश च गवां दत्वा त्र्यहःक्रमात् ॥
विप्राणां वचनाच्छुद्धा समारोहेद् धुताशनम् ।
नारीणां सरजस्कानामियं शुद्धिरुदाहृता ।

अत्राहःक्रमादित्यनेन तृतीयेऽपि दिने यदि देशकालवशाद्गन्तुमिच्छति न तु शुद्धिदिनं प्रतीक्षते तदाऽयं विधिर्भवतीति गम्यते । एकदिनगम्यदेशान्तरस्थे मृते तु विशेषमाह—

व्यासः ।

दिनैकगम्यदेशस्था साध्वी च कृतनिश्चया ।
न दहेत् स्वामिनं तस्या यावदागमनं भवेत् । अत्र—

"पतिव्रतासम्प्रदीप्तं प्रविशेच्च हुताशनम् । ऋग्वेदवादात्साध्वी स्त्री"-

इत्यादिवचनेषु च साध्वीपतिव्रतादिशब्दश्रवणात्तासामेव सहगमनादौ अधिकारो नान्यासामिति केचित् । अन्ये तु—

अवमत्य च याः पूर्वं पतिं दुष्टेन चेतसा ।
वर्तन्ते याश्च सततं भर्तृणां प्रतिकूलतः ॥
तत्रानुमरणं काले याः कुर्वन्ति तथाविधाः ।
कामात्क्रोधाद्भयान्मोहात्सर्वाः पूता भवन्त्युत ॥

इति भारतवचनेनान्यासामपि सहगमनादिप्रतीतेः पतिव्रतादिश्रवणमुपलक्षणार्थमित्याहुः ।

अत्र क्षत्रियादीनां पृथक्चितौ त्र्यहाशौचमध्य एव दशपिण्डदानमित्याहानुगमनं प्रक्रम्य ।

ब्राह्मे ।

ऋग्वेदवादात्साध्वी स्त्री न भवेदात्मघातिनी ।
त्र्यहाशौचे तु निर्वृत्ते श्राद्धं प्राप्नोति शाश्वतम् ॥

इमा नारी अविधवा इति ऋग्वेदवादः । श्राद्धम्=एकोद्दिष्टम् । अत्र भर्त्राशौचमध्ये तदूर्ध्वं वानुगमने त्रिरात्रमध्य एव दशपिण्डाः । एकोद्दिष्टं तु भर्त्राशौचोत्तरमनुगमने चतुर्थेऽह्नि कार्यम् । तदशौचमध्येऽनुगमने तु विशेषमाह ।

व्यासः ।

संस्थितं पतिमालिङ्ग्य प्रविशेद्या हुताशनम् ।
तस्याः पिण्डोदकं कार्यं क्रमशः पितृपिण्डवत् ॥

भविष्ये ।

एकां चितां समारुह्य भर्त्तारं यानुगच्छति ।
तद्भर्त्तुर्यः क्रियाकर्त्ता स तस्याश्च क्रियां चरेत् ॥

इदं च दशाहान्तमेव । पश्चादग्निदाता प्रेतस्य पिण्डं दद्यात् । स एव हीति सहगमनं प्रक्रम्य वायवीयोक्तेः । अत्र प्रेतस्येत्युपादानाद्दशाहान्तत्वप्रतीतिः तेनैकेनैव कर्त्रा दाशाहिकपिण्डदानं कार्यम् । तदपि पृथक् पृथक् कार्यम् । "क्रमशः पितृपिण्डव"दिति पूर्वोदाहृतवचनात् ।

भर्त्रा सह मृता या तु नाकलोकमभीप्सती ।
साहिंच्छ्राद्धं पृथक्पिण्डाश्चैकत्वं तु स्मृतं तयोः ॥
पृथगेव हि कर्त्तव्यं श्राद्धमैकादशाहिकम् ।
यानि श्राद्धानि सर्वाणि तान्युक्तानि पृथक् पृथक् ॥

इति वृद्धपाराशरवचनाच्च ।

यत्तु ।

अन्वारोहे तु नारीणां पत्युश्चैकोदकक्रिया ।
पिण्डदानक्रिया तद्वच्छ्राद्धं प्रत्याब्दिकं तथा ॥

इति वचनं तदापाद्विषयम् ।

एकचित्यां समारुह्य मृतयोरेकबर्हिषि ।
पित्रोः पिण्डान् पृथक् दद्यात् पिण्डस्त्वापस्तु तस्सुतः ॥

इत्याग्निस्मृतेः । एकपिण्डपक्षेऽपि नवश्राद्धे पृथगेव पिण्डदानम् ।

तथा च—

लौगाक्षिः ।

मृताहानि समासेन पिण्डनिर्वपणं पृथक् ।
नवश्राद्धं च दम्पत्योरन्वारोहण एव तु ॥

अत्र पृथक् नवश्राद्धमित्यन्वयः । तद्व्यतिरिक्तं तु पिण्डनिर्वपणं समासेन कार्यम् । समासश्च द्विपितृकश्राद्धवत् द्वयोरेकस्मिन्पिण्डे क्षेपे चोद्देशरूपः ।

एकचित्याधिरोहे तु तिथिरेकैव जायते ।
एकपाकेन पिण्डैक्ये द्वयोर्गृह्णीत नामनी ॥

इति स्मृत्यन्तरात् । अत्र तिथिरेकैवेति श्रवणात् तिथिभेदे आपद्यपि पिण्डैक्यपक्षो न भवतीति गम्यते । किं तु श्राद्धभेद एव तत्तिथौ ।

केचित्तु ।

अग्रतः पृष्ठतो वापि तद्भक्त्या म्रियते यदा ।
तस्याः श्राद्धं सुतैः कार्यं पत्युरेव मृतेऽहनि ॥

इति पुराणसमुच्चयवचनात्भर्तृतिथावेव तस्याः श्राद्धमित्याहुः । अत्र

पृथक्पिण्डदानपक्षे दर्शे वर्गद्वयश्राद्धवत्प्रधानस्यैव पृथगनुष्ठानम् । अङ्गानां तु तन्त्रेणैव ।

या समारोहणं कुर्याद्भर्तुश्चित्यां पतिव्रता ।
तां मृताहनि सम्प्राप्ते पृथक्पिण्डे नियोजयेत् ॥
प्रत्यब्दं च नवश्राद्धं युगपत्तु समापयेत् ।

इति भृगूक्तेः । एकदेशकालकर्तृत्वेन तन्त्रत्वस्यैव न्यायप्राप्तत्वाच्च । अत एव प्रत्यब्दनवश्राद्धग्रहणं पृथक्कर्त्तव्यश्राद्धमात्रोपलक्षणम् । समापनग्रहणं चोपक्रमस्याप्युपलक्षणम् । पृथ्वीचन्द्रचन्द्रिकादयोऽप्येवम् । हेमाद्र्यादयस्तु—नवश्राद्धव्यतिरिक्तश्राद्धेषु लौगाक्ष्यादिवचनादेकपिण्डस्वरूपः समास एव मुख्यः ।

नवश्राद्धेषु पृथक्पिण्डत्वमेव । अत एव यानि—

एकचित्यां समारूढौ दम्पती निधनं गतौ ।
पृथक् श्राद्धं तयोः कुर्यादोदनं तु पृथक् पृथक् ॥

इत्यादीनि गार्ग्यादिवचनानि नवश्राद्धविषयाणीत्याहुः ।

वृषोत्सर्गस्तु सर्वमतेऽप्येक एव ।

एक एव वृषोत्सर्गो गौरेका तत्र दीयते ॥

इति वचनात् । एवं दाहोऽपि एकचित्यधिरोहणादेक एव । तत्र यदि देशकालानुरोधेनाऽविधिपूर्वकं महाग्निना दह्यमाने भर्त्तरि सहगमनं कृतं तदा तस्य यदा पर्णनरदाहादिना विधिपूर्वं दाहः क्रियते तदाऽस्यापि भेदेनैव पर्णनरं कृत्वा तन्त्रेण दाहः कार्य इति केचित् । यदि तु पर्णनरविधिनैव दह्यमाने भर्त्तरि सहगमनं तदा तु दाहपार्थक्यमनाशङ्क्यमेव । न च तत्र सहगमने मानाभावः । पर्णनरस्य स्थानापत्त्या शरीरतुल्यत्वात् । अत एव भर्तृसंस्कारकचितारोहणं सहगमनं सहगमनमात्रमित्युक्तम् । न चैवमविधिपूर्वकं महाग्निना दाहे समन्त्रकसंस्काराभावात्सहगमनानापत्तिः । संस्कारसामान्यस्यैव लक्षणे प्रवेशेन सहगमनोपपत्तेः ।

अथ प्रोषितमृते दाहप्रकारनिर्णयः ।

तत्र—

कारिका ।

प्रोषितश्चेन्मृतस्तस्य विशेषः प्रतिपाद्यते ।
मृताग्निहोत्रं होतव्यं प्राग्दाहात्तत्र कथ्यते ॥
प्राचीनावीतकृत्सर्वं शस्यमेवोद्धरेश्वरे ॥
सादनाभावतः कूर्चं स्थापनं न भवेदिह ।
प्रागग्रैर्दक्षिणाग्रैश्च तृणैः शस्यपरिस्तृतिः ॥

पर्युक्षणं च तस्यैव कार्यमत्राप्रदक्षिणम् ।
नयाद्दक्षिणतो भस्म निदध्याच्च सन्धिनीम् ॥
दुग्ध्वा भस्मन्यधिश्रित्यावघोऽयालेक्ष्यवर्जितम् ।
उद्वास्य सकृदासाद्य दक्षिणास्रुक् स्रुवं ततः ॥
प्रताप्य प्रैषरहितं तत्पयः सकृदुन्नयेत् ।
धारयेत्समिधं चाधो नयाद्दक्षिणतो नयेत् ।
तूष्णीं समिधमाधाय सव्यं जानु निपात्य च ॥
अपसव्यं स्रुचं कृत्वा स तत्सर्वं विनिक्षिपेत् ।

इदं च प्रेताग्निहोत्रं यावद्देशान्तरात् प्रेतशरीरमानीय प्रेतदेशे वा यावदग्निभिस्त्वा प्रेतो दह्यते तावद्धोतव्यः । तावत्पर्यन्तं चाहिताग्नेः शरीरं स्थाप्यम् ।

आहिताग्नौ विदेशस्थे मृते सति कलेवरम् ।
निधेयं नाग्निभिर्यावत्तदीयैरपि दह्यते ॥

इति श्राद्धोक्तेः । तत्स्थापनासम्भवे तु—

कात्यायनः ।

विदेशमरणेऽस्थीनि आहृत्याभ्यज्य सर्पिषा ।
दाहयेदूर्णयाच्छाद्य पात्रन्यासादि पूर्ववत् ॥

कारिकापि ।

ततः कृष्णाजिनेऽस्थीनि पुरुषाकारवन् न्यसेत् ।
ऊर्णाभिश्छादयेत्तानि घृतेनाभ्यज्य दाहयेत् ॥
पात्राणि योजयित्वा तं दहेत्सन्तापजाग्निभिः ।
अनाहिताग्निमप्येवं निरग्निं च दहेदपि ॥

अत्र शरीरस्थापनस्याहिताग्निविषयत्वं पूर्वोदाहृतब्रह्मपुराणादस्थिदाहस्यानाहिताग्निविषयेऽतिदेशाच्चावगम्यते । अस्थ्नामलाभे त्वाहिताग्नेः प्रोषितस्य मरणे पर्णशराख्यं विधिमाह—

मनुः ।

आहिताग्निर्द्विजः कश्चित् प्रवसन् कालचोदितः ।
देहनाशमनुप्राप्तो यस्याग्निर्वर्तते गृहे ॥
प्रेताग्निहोत्रसंस्कारः श्रूयतामृषिपुङ्गवाः ।
कृष्णाजिनं समास्तीर्य कुशैस्तु पुरुषाकृतिम् ॥
षट्शतानि शतं चैव पलाशानां च वृन्ततः ।
चत्वारिंशच्छिरे दद्यात् शतं कण्ठे तु विन्यसेत् ॥
बाहुभ्यां शतकं दद्यादङ्गुलीषु दशैव तु ।

शतं तु जङ्घयोर्दद्याद्द्विशतं तूदरे तथा ॥
दद्यादष्टौ वृषणयोः पञ्च मेढ्रे तु विन्यसेत् ।
एकविंशतिं तूरुभ्यां द्विशतं जानुजङ्घयोः ॥
पादाङ्गुष्ठेषु षट् दद्याद्यज्ञपात्रं ततो न्यसेत् ।

वैकल्पिकं वृन्तसङ्ख्यान्तरमाह ।

हारीतः ।

देशान्तरगते विप्रे विपन्ने कालपर्ययात् ।
शरीरनाशे कल्पः स्याद्दाहिताग्नेर्विशेषतः ॥
कृष्णाजिनं समास्तीर्य पुरुषाकृतिमेव च ।
त्रीणि षष्टिशतं वृन्तान्पलाशांस्तु समाहितः ॥
अशीत्यर्द्धं शिर दद्याद्ग्रीवायां दश एव च ।
बाहुभ्यां च शतं दद्यादङ्गुल्योर्दश एव च ॥
उरसि त्रिंशतं दद्याज्जठरे विंशतिं तथा ।
अष्टौ वृषणयोर्दद्यात्पञ्च मेढ्रे तु कल्पयेत् ॥
ऊरुभ्यां च शतं दद्यात्त्रिशतं जानुजङ्घयोः ।
पादाङ्गुल्योर्दश दद्यादेतत्प्रेतस्य कल्पना ॥

ब्रह्मपार्श्वे ।

मस्तके नारिकेलं तु अलाबुं तालुके तथा ।
पञ्चरत्नं मुखे न्यस्य जिह्वायां कदलीफलम् ॥
चक्षुषोस्तु कपर्दौ द्वौ नासिकायां तु कालकम् ।
कर्णयोर्ब्रह्मपत्राणि केशे वटप्ररोहकाः ॥
नालकं कमलानां तु अन्त्रस्थाने निवेशयेत् ।
मृत्तिका तु वसाधातुर्हरितालकगन्धकौ ॥
शुक्रे तु पारदं दद्यात् पुरीषे पित्तलं तथा ।
सन्धीषु तिलपिष्टं तु मांसं स्याद्यवपिष्टकम् ॥
मधु स्याल्लोहितस्थाने त्वचः स्थाने मृगत्वचम् ॥
स्तनयोर्जर्जके (१)दद्यान्नासायां शतपत्रकम् ।
कमलं नाभिदेशे स्याद्वृन्ताकं वृषणाश्रिते ॥
लिङ्गे च रक्तमूलं तु परिधाने दुकूलकम् ।
गोमूत्रं गोमयं गन्धं सर्वौषध्यादि सर्वतः ॥

अयं च निरग्नेरपि ।

---

(१) जम्बीरे इति निर्णयसिन्धौ पाठः ।

अत एव—

ब्रह्मपुराणम् ।

अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना स्वयम् ।
तदलाभे पलाशानां वृन्तैः कार्यः पुमानपि ॥
वेष्टितव्यस्तथा यत्नात्कृष्णसारस्य चर्मणा ।
ऊर्णासूत्रेण बध्वा तु प्रलेप्तव्यो यवैस्तथा ॥
सुपिष्टैर्जलसम्मिश्रैर्दग्धव्यश्च तथाग्निना ।
असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा सबान्धवैः ॥
एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ।

अत्रास्थ्नां देहावयवत्वेनाभिन्नत्वाद्देहपदेन तेषामपि ग्रहणात्तदभावे पर्णनरविधिर्बोध्यः । त्रिरात्रं चेदं न दशाहमध्ये तद्विधिना दाहे, तत्र प्रोषिते कालशेषः स्यादित्यादिनाऽवशिष्टदिनपर्यन्तमेवाशौचविधानात्, किं तु तदूर्ध्वं, तदप्यनाहिताग्नेः । आहिताग्नेस्तु सर्वत्र दाहादेव दशाहाद्याशौचमिति न तद्विषयमिदं त्रिरात्रविधानम् । तथा च—

बह्वृचगृह्यपरिशिष्टे ।

अथातीतसंस्कारः । स चेदन्तर्दशाहं स्यात्तत्रैव सर्वं समापयेत् । ऊर्ध्वमाहिताग्नेर्दाहात्सर्वमाशौचं कुर्यात् । अन्येषु पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः सर्वमाशौचं गृहीताशौचयोः कर्माङ्गं त्रिरात्रम् ।

अन्येषु=अनाहिताग्न्यादिषु । कर्म=पर्णनरविधिः, तदङ्गम्=तन्निमित्तम् । अनाहिताग्निविषयं सपिण्डानां तु पर्णनरदाह एव त्रिरात्रमन्यत्र तु स्नानमात्रमित्याद्युक्तं प्राक् । अस्य च विधेर्यदैव मरणनिश्चयस्तदैव करणं यदि तु न मरणनिश्चयो न वा जीवनवार्ताश्रवणं तदा किञ्चित्कालं प्रतीक्षाकरणमाह—

मनुः ।

प्रोषितस्य तथा कालो गतश्चेद् द्वादशाब्दिकः ।
प्राप्ते त्रयोदशे वर्षे प्रेतकार्याणि कारयेत् ॥

बृहस्पतिः ।

यस्य न श्रूयते वार्ता यावद्द्वादशवत्सरान् ।
कुशपुत्तलदाहेन तस्य स्यादवधारणम् ॥

यत्तु—

पितरि प्रोषिते यस्य न वार्ता नैव चागमः ।
ऊर्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम् ॥
कुर्यात्तु तस्य संस्कारं यथोक्तविधिना ततः ।

तदादीन्येव सर्वाणि प्रेतकर्माणि कारयेत् ॥

इति भविष्यपुराणम्। तत्पितृविषयं पितरीत्युपक्रमानुरोधात्। अतः पितुः पञ्चदशवर्षप्रतीक्षा। अन्येषां तु द्वादशवर्षप्रतीक्षा कार्या। गृह्यकारिकायां त्वन्यथा व्यवस्थोक्ता।

तस्य पूर्ववयस्कस्य विंशत्यब्दोर्ध्वतः क्रिया।
ऊर्द्ध्वं पञ्चदशाब्दात्तु मध्यमे वयसि स्मृता।
द्वादशाद्वत्सरादूर्ध्वमुत्तरे वयसि स्मृता ॥
चान्द्रायणत्रयं कृत्वा त्रिंशत्कृच्छ्राणि वा सुतैः।
कुशैः प्रतिकृतिं दग्ध्वा कार्याः शौचादिकाः क्रियाः ॥

यस्य तु द्वादशाब्दादिवर्षप्रतीक्षां कृत्वौर्ध्वदेहिकं कृतं पश्चाच्च स आगतस्तद्विषये आह—

वृद्धमनुः।

असृतं मृतमाकर्ण्य कृतं यस्यौर्ध्वदेहिकम्।
प्रायश्चित्तमसौ स्मार्त्तं कृत्वाऽग्नीनादधीत च।
जीवन् यदि समागच्छेत् घृतकुम्भे निमज्य तम् ॥
उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत्।
द्वादशाहं व्रतचर्या त्रिरात्रमथवास्य तु।
स्नात्वोद्वहेत तां भार्यामन्यां वा तदभावतः ॥
अग्नीनाधाय विधिवद् व्रात्यस्तोमेन वा यजेत्।
अथैन्द्राग्नेन पशुना गिरिं गत्वा च तत्र तु ॥
इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः।

यस्य तु जीवत एव मृतवार्त्तां श्रुत्वा स्त्रिया सहगमनादि कृतम्। तत्र तस्य सहगमनादेर्न वैधत्वं भर्तुर्वैधदाहाभावेन सहत्वाभावात्। भर्त्तुर्वैधदाहाभावेनैव च तदनुगमनाभावाच्च। सहगमनादौ निमित्तभूतस्य प्रमारूपभर्तृमरणज्ञानस्याभावाच्च। न च लाघवेन मरणज्ञानस्यैव निमित्तत्वं न प्रमारूपज्ञानस्येति वाच्यम्। पुरुषान्तरमरणे भर्तृसम्बन्धिमरणभ्रमेऽपि सहगमनापत्तेः। तस्मात्प्रमारूपभर्तृमरणज्ञानस्यैव निमित्तत्वात्। प्रकृते च तदभावादात्महननदोषोऽस्यैवेति सिद्धम्। प्रोषितमृतस्य दाहे पर्णनरविधौ च कालमाह।

पराशरः।

देशान्तरगतो नष्टस्तिथिर्न ज्ञायते यदि।
कृष्णाष्टमी ह्यमावास्या कृष्णा चैकादशी तिथिः ॥
उदकं पर्णदाहं च तत्र श्राद्धं च कारयेत्।

अत्र तिथिर्न ज्ञायते इति श्राद्धमात्रेण सम्बध्यते । तस्यैव मृततिथिसमानजातीयतिथ्यन्तरे विहितत्वात् ।

गार्ग्यः ।

अशौचविनिवृत्तौ चेत्पुनः संस्क्रियते मृतः ।
संशोध्यैव दिनं ग्राह्यमूर्ध्वं संवत्सराद्यदि ॥
प्रेतकृत्यं प्रकुर्वीत श्रेष्ठं तत्रोत्तरायणम् ।
कृष्णपक्षस्य तत्रापि वर्जयेत्तु दिनक्षयम् ॥

कृष्णपक्षश्च प्रशस्त इत्यर्थः ।

वर्ज्या उक्ता—

वाराहे ।

चतुर्थाष्टमगे चन्द्रे द्वादशे च विवर्जयेत् ।
प्रेतकृत्यं व्यतीपाते वैधृतौ परिघे तथा ॥
त्रयोदश्यां विशेषेण जन्मताराऽत्रये तथा ।

भारते ।

नक्षत्रे तु न कुर्वीत यस्मिन् जातो भवेन्नरः ।
न प्रोष्ठपदयोः कार्यं तथाग्नेये च भारत ॥
दारुणेषु च सर्वेषु प्रत्यरे च विवर्जयेत् ।

ज्योतिर्नारदीये ।

चतुर्दशीतिथिं नन्दां भद्रां शुक्रारवासरौ ।
आषाढे द्वे विशाखा च भानि द्विचरणानि च ।
सितेज्ययोरस्तमयं व्यङ्घ्रिभं विषमाङ्घ्रिभम् ॥
शुक्लपक्षं च संत्यज्य पुनर्दहनमुत्तमम् ।
वसूत्तरार्धतः पञ्चनक्षत्रेषु त्रिजन्मसु ॥
पौष्णब्रह्मर्क्षयोश्चैव दहनात् कुलनाशनम् ।

काश्यपः ।

भरण्यार्द्रा मघाश्लेषा मूलं द्विचरणानि च ।
प्रेतकृत्येऽतिदुष्टानि धनिष्ठाद्यं च पञ्चकम् ॥
फल्गुनीद्वितीयं रोहिण्यनुराधापुनर्वसुः ।

अत्र दारुणादीनां लक्षणानि ज्योतिःशास्त्रे ज्ञेयानि । अस्यापवादमाह—

बैजवापः ।

युगमन्वादिसंक्रान्तिदर्शे प्रेतक्रिया यदि ।
दैवादापतिता तत्र नक्षत्रादि न शोधयेत् ॥

अपवादान्तरमाह ।

गार्ग्यः ।

प्रत्यक्षशवसंस्कारे दिनं नैव विशोधयेत् ।
अशौचमध्ये संस्कारे दिनं शोध्यं तु सम्भवे ॥

अस्यैव विषयविशेषेऽपवादान्तरमाह ।

बैजवापः ।

प्रेतस्य साक्षाद्दग्धस्य प्राप्ते त्वेकादशेऽहनि ।
नक्षत्रतिथिवारादिशोधनीयं न किञ्चन ॥

देशविशेषेऽपवादमाह—

विश्वप्रकाशः ।

गुरुभार्गवयोर्मौढ्ये पौषमासे मलिम्लुचे ।
नातीतः पितृमेधः स्यात् गयां गोदावरीं विना ॥

अथ मरणविशेषे कृत्यविशेषः ।

तत्र तावत्पूर्वोक्तपतितादीनां मरणविशेषे नारायणबलिः कार्य इति पूर्वमेवोक्तं तत्प्रकारमाह ।

बौधायनः ।

अथातो नारायणबलिं व्याख्यास्यामो दक्षिणायने वोत्तरायणे वा परपक्षस्य द्वादश्यां क्रियेत । तत्पूर्वेद्युरेव श्रोत्रियान् ब्राह्मणान्निमन्त्रयीत योनिगोत्रश्रुतवृत्तसम्पन्नान्। अथापरेद्युरेव देवगृहे नदीतीरे वाग्निमुपसमाधाय सम्परिस्तीर्याप्रणीताभ्यः कृत्वोत्थायाग्रेणाग्निं दैवतमावाहयति पुरुषसूक्तेन । द्वे ऋचौ जपित्वाद्यया च तमावाहयति । अथैनं स्नापयति पुरुषसूक्तेनाथैनं गन्धपुष्पधूपदीपैरष्टाक्षरेणार्चयित्वाद्भिस्तर्पयति केशवं तर्पयामीति। द्वादशनामधेयैः परिधानप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति विष्णोर्नुकमिति पुरोनुवाक्यामनूच्य परोमात्रयेति याज्यया जुहोति । आवाहाहुतीरुपजुहोति केशवाय स्वाहेत्येतैरेव नामधेयैर्गुडपायसघृतमिश्रमन्नं निवेदयति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां विष्णवे निवेदयामीति महाव्याहृतिभिः स्वाहाकारेण यजति । व्याहृतिभिराचमनीयमथ ब्राह्मणानाहूय सदर्भोपक्लृप्तेष्वासनेषूपवेश्याथैनान् वस्त्रगन्धपुष्पधूपदीपमाल्यैरभ्यर्च्यानुज्ञाप्य मधुघृतमिश्रं हविः समुदायुत्य हस्तेन जुहोति पितृभ्यः स्वधा नमो नारायणाय स्वाहा पितामहेभ्य; स्वधा नमो नारायणाय स्वाहा अग्नये कव्यवाहनाय स्विष्टकृते स्वाहा नमो नारायणाय स्वाहेति ब्राह्मणानन्नेन परितोषयित्वाचमनान्ते तेषां यथाशक्ति दक्षिणां ददाति प्रदक्षिणीकृत्य शेषमनुज्ञाप्य दक्षिणेनाग्निं प्रागग्रान् दर्भान्संस्तीर्य तेषु

बलिं ददाति । विश्वेभ्यो देवेभ्यो नमः, साध्येभ्यो देवेभ्यो नमः, सर्वेभ्यो देवेभ्यो नमः, सर्वाभ्यो देवताभ्यो नमः, विष्णवे नारायणाय नमः, यज्ञात्मने नमः, यज्ञपुरुषाय नमः, सर्वेश्वरायनम इति स्विष्टकृत्प्रभृति आधेनुवरप्रदानात् सर्वान् पितॄन् समधिगच्छति ब्रह्मलोके महीयते ब्रह्मलोके महीयत इत्याह भगवान् बौधायन इति । अत्र विशेषो—
भविष्योत्तर उक्तः ।

पूर्णे संवत्सरे तेषामथ कार्यं दयालुभिः । तेषां=दुर्मरणमृतानाम् ।

एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिम् ।
विष्णुं यमं च सम्पूज्य गन्धपुष्पादिभिस्तथा ॥
दश पिण्डान् घृताभ्यक्तान् दर्भेषु मधुसंयुतान् ।
यज्ञोपवीती सांतलान् मत्वं विष्णुं यमं तथा ॥
दक्षिणाभिमुखस्तूष्णीमेकैकं निर्वपेत्तु तान् ।
उद्धृत्य नियतान्पिण्डांस्तीर्थाम्भसि निक्षिपेत् ॥
क्षिपंस्तत्कीर्तयेन्नाम विष्णावै प्रेतकस्य तु ।
पुनरभ्यर्चयेद्विष्णुं यमं कुसुमचन्दनैः ॥
धूपदीपैः सनैवेद्यैर्भक्ष्यभोज्यसमन्वितैः ।
तस्मिन्नेवोषितो ह्यह्नि विप्रांश्चैव निमन्त्रयेत् ॥
कुलविद्यातपोयुक्तान् रूपशीलसमन्वितान् ।
नव सप्ताथवा पञ्च स्वसामर्थ्यानुसारतः ॥
अपरेऽहनि सम्प्राप्ते मध्याह्ने सुसमाहितः ।
विष्णुं यमं च सम्पूज्य ब्राह्मणानुपवेशयेत् ॥
उदङ्मुखान्यथाज्येष्ठं पितृरूपमनुस्मरन् ।
आवाहनार्घ्यदानादीन् विष्णुशौरिसमन्वितान् ॥
प्रेतं स्थाने स्मरन् प्रेतं विष्णावै नाम कीर्त्तयेत् ।
प्रेतं यमं च विष्णुं च स्मरन् श्राद्धं समापयेत् ॥
तृप्तान् ज्ञात्वा ततो विप्रान् तृप्तिं पृष्ट्वा यथाविधि ।
यमेभ्यस्त्वथ सर्वेभ्यः पिण्डदानार्थमुद्धरेत् ॥
पृथग्दर्भेषु पिण्डांस्तु पञ्च दद्यात्क्रमेण तु ।
प्रथमं विष्णवे दद्याद्ब्रह्मणे च शिवाय च ॥
सभृत्याय यमायाथ प्रेतायापि च पञ्चमम् ।
नाम गोत्रं स्मरेत्तस्य विष्णुशब्दं च कीर्त्तयेत् ॥
नमस्कारशिरस्कं तु पञ्चमं पिण्डमुद्धरेत् ।
दद्यादाचमनं पश्चात्ताम्बूलं दक्षिणां तथा ॥

एकं विप्रं शिष्टतमं हिरण्येन प्रपूजयेत् ।
गोभूमिवस्त्रपानाद्यैर्भक्त्या प्रेतं स्मरंश्च तम् ॥
दद्यात्तिलांस्तु विप्राणां दर्भयुक्तेषु पाणिषु ।
नाम गोत्रं स्मरन् दद्याद्विष्णुः प्रीतोऽस्त्विति ब्रुवन् ॥
अनुव्रज्य द्विजान् पश्चात्तिलाम्भो दक्षिणामुखः ।
कीर्त्तयन्नामगोत्रे तु भुवि प्रीतोऽस्त्विति क्षिपेत् ॥
मित्रैर्बन्धुजनैः सार्धं शेषं भुञ्जीत वाग्यतः ॥ इति ।

विष्णुरपि नारायणबलिस्वरूपमाह ।
एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिम् ।
विष्णुं समर्चयेद्देवं यमं वैवस्वतं तथा ॥
दश पिण्डान् घृताभ्यक्तान् दर्भेषु मधुसंयुतान् ।
तिलमिश्रान् प्रदद्याद्वै संयतो दक्षिणामुखः ।
विष्णुं बुद्धौ समासाद्य नद्यम्भसि ततः क्षिपेत् ॥
नामगोत्रग्रहं तत्र पुष्पैरभ्यर्चनं तथा ।
धूपदीपप्रदानं च भक्ष्यं भोज्यं तथा परम् ॥
निमन्त्रयीत विप्रान्वै पञ्च सप्त नवापि वा ।
विद्यातपःसमृद्धान् वै कुलोत्पन्नान् समाहितान् ॥
अपरेऽहनि सम्प्राप्ते मध्याह्ने समुपोषितः ।
विष्णोरभ्यर्चनं कृत्वा विप्रांस्तानुपवेशयेत् ॥
उदङ्मुखान्यथाज्येष्ठं पितृरूपमनुस्मरन् ।
मनो निवेश्य विष्णौ वै सर्वं कुर्यादतन्द्रितः ।
आवाहनादि यत्प्रोक्तं देवपूर्वं तदाचरेत् ॥
तृप्तान् ज्ञात्वा ततो विप्रान् तृप्तिं पृष्ट्वा यथाविधि ।
हविष्यव्यञ्जनेनैव तिलादिसहितेन च ।
पञ्चपिण्डान् प्रदद्याच्च देवरूपमनुस्मरन् ॥
प्रथमं विष्णवे दद्याद् ब्रह्मणे च शिवाय च ।
यमाय सानुचराय चतुर्थं पिण्डमुत्सृजेत् ॥
मृतं सङ्कीर्त्य मनसा गोत्रपूर्वमतः परम् ।
विष्णोर्नाम गृहीत्वैव पञ्चमं पूर्ववत् क्षिपेत् ॥
विप्रानाचाम्य विधिवद्दक्षिणाभिः समर्चयेत् ।
गवा वस्त्रेण भूम्या च प्रेतं तं मनसा स्मरन् ॥
ततास्तिलाम्भो विप्रास्ते हस्तैर्दर्भसमन्वितैः ।
क्षिपेयुर्गोत्रपूर्वं तु नामबुद्धौ निवेश्य च ॥

हविर्गन्धतिलाम्भस्तु तस्मै दद्युः समाहिताः ।
मित्रभृत्यजनैः सार्धं पश्चाद् भुञ्जीत वाग्यतः ॥
एवं विष्णुमते स्थित्वा यो दद्यादात्मघातिने ।
समुद्धरति तं क्षिप्रं नात्र कार्या विचारणा ॥ इति ।

सर्पहते विशेषो—
भविष्योत्तरे ।

प्रमादादिच्छया चापि नागाद्वै सर्पतो मृतः ।
पक्षयोरुभयोर्नागान्पञ्चमीषु प्रपूजयेत् ।
कुर्यात्पिष्टमयीं लेखां नागप्रतिकृतिं भुवि ॥
अर्चयेत्तां सितैः पुष्पैः सगन्धैश्चन्दनेन तु ।
प्रदद्याद् धूपदीपं च तण्डुलांश्च सितान् क्षिपेत् ॥
आमपिष्टं तथैवान्नं क्षीरं च विनिवेदयेत् ।
उपस्थाय वदेदेवं मुञ्चमुञ्चामुकं त्विति ॥
मधुरं तद्दिने खाद्येदम्लं समाचरेत् ।
सौवर्णं शक्तितो नागं ततो दद्याद् द्विजोत्तमे ॥
गां सवत्सां ततो दद्यात्प्रीयतां नागराडिति ।
यथा विभागं कुर्वीत कर्माणि प्राकृतान्यपि ।
कर्माणि=नारायणबल्यादिरूपाणि ।

अथ पञ्चकमरणे दाहप्रकारः ।

तत्रादौ पञ्चकमरणादावनिष्टमित्युक्तं—
गर्गेण ।

पञ्चके पञ्चगुणितं त्रिगुणं च त्रिपुष्करे ।
यमले द्विगुणं सर्वं हानिवृद्ध्यादिकं भवेत् ॥

तथा—
ब्राह्मे ।

धनिष्ठापञ्चके जीवो मृतो यदि कथञ्चन ।
त्रिपुष्करे च याम्ये च कुलजान् मारयेद् ध्रुवम् ॥

अत्र पञ्चकपदं नक्षत्रपञ्चकमध्यन्धाद्धनिष्ठोत्तरार्द्धमारभ्य सार्धन-
क्षत्रचतुष्टयस्यैव वाचकम् । तथा च—
रत्नमालायाम् ।

वासवोत्तरदलादिपञ्चके याम्यदिग्गमनगेहगोपनम् । इत्यादि ।
देवज्ञमनोहरे तु धनिष्ठाद्यदलेऽप्यनिष्टफलत्वमुक्तम् ।

कुर्याच्च दारुतृणसङ्ग्रहमन्तकाशा
यानं मृतस्य दहनं गृहगोपनं च ।

शय्यावितानमिह वासवपञ्चकञ्चेत्
केचिद्वदन्ति परतो वसुदैवतार्द्धात् ॥ इति ।

अत्र च दाहो निषिद्धः ।

तदुक्तं—

ब्राह्मे ।

कुम्भमीनस्थिते चन्द्रे मरणं यस्य जायते ।
पञ्चकानन्तरं कार्यं तस्य दाहादिकं खलु ॥
अथवा तद्दिने कार्यो दाहस्तु विधिपूर्वकम् ॥ इति ।
विधिः पञ्चकविधिः । विधिश्च मदनरत्ने—

गरुडपुराणे ।

आदौ कृत्वा धनिष्ठार्धमेतन्नक्षत्रपञ्चकम् ।
रेवत्यन्तं सदा दुष्यमशुभं दाहकर्मणि ॥
शवस्य च समीपे तु क्षेप्तव्याः पुत्तलास्तदा ।
दर्भमय्यास्तु चत्वार ऋक्षमन्त्राभिमान्त्रिताः ॥
ततो दाहः प्रकर्त्तव्यस्तैश्च पुत्तलकैः सह ।
सूतकान्ते ततः पुत्रैः कार्यं शान्तिकपौष्टिकम् ॥
पञ्चकेषु मृतो यो वै न गतिं लभते नरः ।
तिलांश्चैव हिरण्यं च तमुद्दिश्य घृतं ददेत् ॥

आश्वलायनकारिकायामपि ।

सूतकान्ते तु पुत्राद्यैः कार्यं शान्तिकमुक्तवत् ।
कांस्यपात्रं घृतं दद्यात्कुर्याद् ब्राह्मणतर्पणम् ॥

ब्राह्मेऽपि ।

दर्भाणां प्रतिमाः कार्याः पञ्चोर्णासूत्रवेष्टिताः ।
यवपिष्टेनानुलिप्तास्ताभिः सह शवं दहेत् ॥
प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः ।
प्रेतहर्त्ता पञ्चमस्तु नामान्येतानि च क्रमात् ॥

अत्र प्रतिमा गन्धादिभिरलंकृत्य शिरश्चक्षुर्वामकुक्षिनाभिपादयोः क्रमेण स्थापयित्वा तदुपरि तत्तन्नाम्ना घृतं हुत्वा यमाय सोमं त्र्यम्बकमिति मन्त्राभ्यां जुहुयात्, ततो दहेदित्याचारः । तथा—

कांस्यपात्रस्थितं तैलं वीक्ष्य दद्याद् द्विजन्मने ।
ब्रह्मविष्णुमहेशेन्द्रवरुणप्रीतये ततः ।
माषमुद्गयवव्रीहिप्रियंग्वादि प्रयच्छति ।
स्वर्णदानं रुद्रजाप्यं लक्षहोमो द्विजार्चनम् ।

गोभूदानं यथांशेन कुर्याद्दोषोपशान्तये ॥

आहिताग्निमरणे तु विशेषः ।

धनिष्ठापञ्चकमृते पञ्चरत्नानि तन्मुखे ।
प्रास्याहुतित्रयं तत्र हुनेद्धुवपामिति ।
ततो निर्हरणं कुर्याद्देष एव विधिः स्मृतः ।
इतरं निखनेदेव जले वा प्रतिपादयेत् ॥

पञ्चरत्नाभावे तत्रैव—

रत्नानां चाप्यभावे तु स्वर्णकर्षार्धमेव वा ।
सुवर्णस्याप्यभावे तु आज्यं ज्ञेयं विचक्षणैः ॥

धनिष्ठामरणे तु विशेषमाह—

बौधायनः ।

वासवे मरणं चेत् स्याद् गृहे वापि पुनर्मृतिः ।
सुवर्णं दक्षिणां दद्यात्कृष्णवस्त्रमथापि वा ॥

पूर्वार्धे वाशब्दोऽवधारणार्थे ।

अत्र केचित् ।

स्वगृह्योक्तविधिनाऽग्निप्रणयनहविर्निर्वपणाद्याज्यभागान्ते

यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै क्रमात् ॥

एकामाहुतिं जुहोति । कृष्णां गां कृष्णं वस्त्रं हेमदक्षिणेत्येवं शान्तिकं सूतकान्ते कुर्वन्ति । इति पञ्चके दाहप्रकारः ।

अथ त्रिपुष्करमृते ।

गर्गः ।

द्वित्रिपुष्करयोगे तु मृतिर्मृत्यन्तरावहा ।
दहने मरणे चैव त्रिगुणं स्यात् त्रिपुष्करे ॥
खननेऽप्येवमेव स्याद्तद्दोषोपशान्तये ।
तिलपिष्टैर्यवैर्वापि शरीरं तस्य कारयेत् ॥
शूर्पं निधायालंकृत्य दाहयेत्प्रेतकोपरि ।

मन्त्रस्तु बौधायनेनोक्तः ।

अदनत्वामिति मन्त्रेण तिलपिष्टं प्रदाहयेत् ।
द्वित्रिपुष्करयोर्दोषं त्रिभिः कृच्छ्रैर्व्यपोहति ॥

दैवज्ञमनोहरे गरुडपुराणे तु ।

त्रिपुष्करे त्रयः कार्याः पुत्तलौ द्वौ द्विपुष्करे ।
मृतस्य च समीपे तु स्थाप्याः पिष्टमयास्ततः ।
कार्यो दाहस्तु नरसार्द्धं सूतकान्ते तु शान्तिकम् ।
कृत्वा गाश्च हिरण्यं च दद्यादन्नं च शक्तितः ॥

प्रेतखण्डे ।

त्रिपुष्करमृते दद्याद्गोत्रयं मूल्यमेव वा ।
द्विपुष्करे गोद्वयं शान्तिस्ततो दाहे न दोषकृत् ॥

त्रिपुष्करलक्षणं चोक्तम्—

भूपालवल्लभेन ।

रविभौममन्दवारे भद्रातिथिषु त्रिपादके धिष्ण्ये ।
योगः पुष्कराख्यो द्विपादके यमलनामा स्यात् ॥ इति ।

इति पुष्करे प्रकारः ।

अथ त्रिपादे ।

त्रिपादर्क्षमृते तद्वद्धिरण्यशकलं मुखे ।
तस्य पिष्टमयं कुर्यात्पुरुषत्रितयान्ततः ॥
होमं प्रतिमुखं कुर्यात्तथा वहवपामिति ।
कार्ष्णायसं च कार्पासं कुसुमं प्रतिपाद्य च ।
निर्यात्य साग्निं संस्कुर्याद्यथाग्नौ वान्यमुत्सृजेत् ॥ इति ।

त्रिपादर्क्षाणि च तत्रैव ।

पुनर्वसूत्तराषाढाकृत्तिकोत्तरफल्गुनी ।
पूर्वाभाद्रा विशाखा च ज्ञेयमेतत्त्रिपादभम् ॥ इति ।

इति त्रिपादे ।

अथ व्याघ्रादिहते दानाद्युक्तं—

शातातपेन ।

व्याघ्रेण निहते विप्रे विप्रकन्यां विवाहयेत् ।
सर्पदष्टे नागबलिर्देयः सर्पश्च काञ्चनः ॥
चतुर्निष्कमितं हैमगजं दद्याद् गजैर्हते ।
राज्ञा विनिहते दद्यात्पुरुषं तु हिरण्मयम् ॥
चौरेण निहते धेनुं वैरिणा निहते वृषम् ।
वृषेण निहते दद्याद्यथाशक्त्या च काञ्चनम् ॥
शय्यामृते प्रदातव्या शय्या तूलीसमन्विता ।
निष्कमात्रसुवर्णस्य विष्णुना समधिष्ठिता ॥
शौचहीने मृते चैव द्विनिष्कस्वर्णजं हरिम् ।

संस्कारहीने च मृते कुमारमुपनाययेत् ॥
निष्कत्रयसुवर्णमितं दद्याद्दश्वं हयाहते ।
शुना हते क्षेत्रपालं स्थापयेन्निजशक्तितः ॥
शूकरेण हते दद्यान्माहिषं दक्षिणान्वितम् ।
कृमिभिश्च मृते दद्याद्गोधूमान्पञ्च खारिकाः ॥
वृक्षं वृक्षहते दद्यात्सौवर्णं वस्त्रसंयुतम् ।
शृङ्गिणा निहते दद्याद् वृषभं वस्त्रसंयुतम् ॥
शकटेन हते दद्याद्धयं सोपस्करान्वितम् ।
भृगुपातमृते चैव प्रदद्याद् धान्यपर्वतम् ॥
अग्निना निहते कार्यमुदपानं स्वशक्तितः ।
दारुणा निहते चैव कर्तव्या सदने सभा ।
शस्त्रेण निहते दद्यान्माहिषीं दक्षिणान्विताम् ।
अश्मनाभिहते दद्यात् सवत्सां गां पयस्विनीम् ॥
विषेण च मृते दद्यान्मेदिनीं हेमनिर्मिताम् ।
उद्बन्धनमृते चैव कपिं कनकनिर्मितम् ॥
मृते जले तु वरुणं हैमं दद्याद्विनिष्कजम् ।
विषूचिकामृते स्वादु भोजयेच्च शतं द्विजान् ॥
घृतधेनुः प्रदातव्या कण्ठाक्षफले मृते ।
कासरोगेण च मृते अष्टकृच्छ्रमतं चरेत् ।
अतिसारमृते लक्षं गायत्र्याः प्रयतो जपेत् ।
शाकिन्यादिग्रहग्रस्ते जपेद्रुद्रं यथोदितम् ॥
विद्युत्पातेन निहते विद्यादानं समाचरेत् ।
अन्तरिक्षमृते कार्यं वेदपारायणं तथा ॥
सकलशास्त्रपुस्तकं दद्यादस्पृश्यस्पर्शतो मृते ।
पतिते च मृते कुर्यात्प्राजापत्यांस्तु षोडश ॥
मृते चापत्यरहिते कृच्छ्राणां नवतिं चरेत् ।
एवं कृते विधाने तु विदध्यादौर्ध्वदेहिकम् ।

अथ कुष्ठिमृतौ ।

यमः ।

मृतस्य कुष्ठिनो देहं निखनेद्गोष्ठभूमिषु ।
वासरं त्रितयं पश्चादुद्धृत्यान्यत्र तं दहेत् ॥
न गङ्गाप्लवनं कार्यं निक्षेपे विधिरुच्यते ।
षडब्दव्रतपूर्णेन विधिनाल्पयक्रतुं चरेत् ॥

ततोऽस्थिसञ्चयं तस्य गङ्गायां प्रक्षिपेत्सुधीः ।
मासि मासि ततः कुर्यान्मासश्राद्धानि पार्वणात् ॥
इत्येतत्कथितं कुष्ठिमरणे शास्त्रकोविदैः ।
पार्वणात् पार्वणविधानेनेत्यर्थः ।

भविष्येऽपि ।

शृणु कुष्ठिगणं विप्र उत्तरोत्तरतो गुरुम् ।
विचर्चिका तु दुश्चर्मा वर्वरीयस्तृतीयकः ॥
विकर्दुर्व्रणताम्रौ च कृष्णश्वेते तथाष्टकम् ।

इत्युक्त्वा—

मृते च प्रापयेत्तीर्थमथवा तरुमूलकम् ।
नापिण्डं नोदकं कार्यं न च दानक्रियां चरेत् ॥
षण्मासीयस्त्रिमासीयो मृतः कुष्ठी कदाचन ।
यदि स्नेहाच्चरेद्दाहं यतिचान्द्रायणं चरेत् ॥

अथ वैधदाहापवादः ।

तत्र पतितादौ दाहापवादः पूर्वमेवाशौचप्रसङ्गेनोक्तः । बालादावपवादान्तरमाह—

मनुः ।

ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः ।
अलङ्कृत्य शुचौ भूमावस्थिसञ्चयनादृते ॥
नास्य कार्योऽग्निसंस्कारो नापि कार्योदकक्रिया ।
अरण्ये काष्ठवत्त्यक्त्वा क्षपेयुस्त्र्यहमेव च ।

अरण्ये काष्ठवदिति । काष्ठत्यागेन यथा तद्विषय औदासीन्यं तथास्यापि त्यागेनौदासीन्यं न त्वग्निसंस्कारादिकरणमित्यर्थः । निखननं चाज्यलिप्तस्य कार्यम् ।

ऊनद्विवार्षिकं प्रेतं घृताक्तं निखनेद् भुवि ।
यमगाथां गायमानो यमसूक्तमनुस्मरन् ॥

इति यमोक्तेः ।

लौगाक्षिणा चात्र विशेषो दर्शितः—

तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च ॥
सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम् ।

द्वयमग्न्युदकदानात्मकमित्यर्थः । तेन यदा कदाचित्कृतचूडस्य तूष्णीमग्न्युदकदानं नियतम् । अकृतचूडस्य तु निखननं वा तूष्णीमग्न्युदकदानं वेति विकल्पः । अयं विकल्पो नामकरणोत्तरमेव ।

नात्रिवर्षस्य कर्त्तव्या बान्धवैरुदकक्रिया ।
जातदन्तस्य वा कुर्युर्नाम्नि वापि कृते सति ॥

इति मनुना कृतनाम्न एवोदकक्रियाया वैकल्पिकत्वोक्तेः । अतश्च नामकरणात्पूर्वं निखननमेव । ऊनद्विवार्षिकमिति सामान्यवचनात् ।

तदपि जातारण्यभावे, तत्सद्भावे तु दाह एवेति केचित् । वस्तुतो यत्र दाहप्रसक्तिस्तत्रैव जातारणिनियमो युक्तः ।

अतश्च नामकरणोत्तरमेव दाहपक्षे जातारणिनियम इति पूर्वमेवोक्तम् ।

अत्र च नात्रिवर्षस्येति वचनात् त्रिवर्षस्याकृतचूडस्यापि तूष्णीमभ्युदकदानं नियतं गम्यते इति मिताक्षराकारः । अत्राग्निदानोदकदानादेस्तूष्णीं करणेऽपि मन्त्रविशेषपाठमाह—

याज्ञवल्क्यः ।

यमसूक्तं तथा गाथां जपद्भिर्लौकिकाग्निना ।
स दग्धव्यो उपेतश्चेदाहिताग्न्यावृतार्थवत् ॥

इति दाहनिर्णयः ।

अथोदकदाननिर्णयः ॥

तत्र याज्ञवल्क्यः ।

सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयन्त्यपः ।
अप नः शोशुचदघमनेन पितृदिङ्मुखाः ॥

सप्तमाद्दशमाद्वा दिवसादर्वाक् ज्ञातयः समानगोत्राः सपिण्डाः सोदकाश्च अप नः शोशुचदघमित्यनेन मन्त्रेणापोऽभ्युपयन्ति निनयन्ति । अस्य च दाहान्तरं कर्त्तव्यतामाह—

शातातपः ।

शरीरमग्नौ संयोज्यानवेक्षमाणा अपोऽभ्युपयन्ति ।

स्नानादौ विशेषः ।

छन्दोगपरिशिष्टे ।

अथानवेक्षयेत्यापः सर्व एव शवस्पृशः ।
स्नात्वा सचैलमाचम्य दद्युरस्योदकं स्थले ॥
गोत्रनामानुवादान्ते तर्पयामीत्यनन्तरम् ।
दक्षिणाग्रान् कुशान् कृत्वा सतिलं तु पृथक् पृथक् ॥

पारस्करीयेऽपि ।

संयुक्तं मैथुनं वोदकं याचेरन्नुदकं करिष्यामह इति ।
कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते । कुरुध्वमित्येवेतरस्मिन् सर्वे

ज्ञातयोऽपोऽभ्यवयन्त्यासप्तमात्पुरुषाद्दशमाद्वा। समानग्रामवासे वा यावत्सम्बन्धमनुस्मरेयुः। एकवस्त्राः प्राचीनावीतिनः। सव्यस्यानामिकयाऽपनोधापनः शोशुचदघमिति। दक्षिणमुखा निमज्जन्ति। प्रेतायोदकं प्रसिञ्चन्त्यञ्जलिनासावेतत्त उदकमिति।

संयुक्तः सम्बन्धयुक्तरदानाभिज्ञो वा, मैथुनः श्यालः। तमुदकं याचेरन्, उदकं करिष्याम इत्यनेन मन्त्रेण। पृष्टप्रतिवचनम्, कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते। शतवर्षप्रभृति तु कुरुध्वमित्येव प्रतिवचनम्। ज्ञातयः=सपिण्डाः समानोदकाश्च सर्व एवापोऽभ्यवयन्ति। तत्र सपिण्डस्वरूपमाह। सप्तमादिति। सप्तमपुरुषपर्यन्तमित्यर्थः। दशमाद्वेति समानोदकस्वरूपमुक्तमिति हरिहरः। एकग्राम इति। एकग्रामनिवासे तु यावतां सपिण्डत्वेन गोत्रत्वेन वा स्मरणम् तावन्तोऽप्सु निमज्जन्तीत्यर्थः। वस्त्रं परिधानीयं सव्यस्य पाणेरनामिकया उपकनिष्ठिकयाङ्गुल्या जलाशयवासिनस्य वा तृणाद्यपनोधापसार्य अपनः शोशुचदघमिति मन्त्रेणापनोदकं कार्यमिति कर्कहरिहरौ। स्नानेऽयं मन्त्र इति देवयाज्ञिकः। अयं च स्त्रीभिर्न पठनीयः, अमन्त्रा हि स्त्रियो मता इति बौधायनात्। निमज्जनं सकृदिति हरिहरः।

विष्णुरपि।

सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया।
सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत्॥

इत्युक्त्वाह निर्हृत्य बान्धवाः प्रेतं संस्कृत्याप्रदक्षिणेन चितामभिगम्याप्सु सवाससो निमज्जनं कुर्युः। प्रेतस्योदकनिर्वपणं कृत्वैकं च पिण्डं कुशेषु दद्युः।

उदकदाने आधारविशेषं मन्त्रं चाह—

बैजवापायनः।

उदकान्तं गत्वा सकृदुन्मज्याप्सु सव्यपाणेः कनिष्ठिकयावलिखति कनिष्ठं पापमिति। तस्मिंस्त्वेकमुदकाञ्जलिं प्रेताय दद्युरमुष्मै स्वधेति। अस्य च कात्यायनाद्युक्तमन्त्राधारापेक्षया विकल्पः, स च शाखाभेदेन व्यवस्थितः।

एवमग्रेऽपि द्रष्टव्यम्। मन्त्रान्तरञ्चाह—

हारीतः।

निष्क्रम्य संस्कृत्यापो गत्वाप्लाव्यासौ तृप्यतामित्युदकाञ्जलिं निनयन्ति।

अञ्जलिसङ्ख्यान्तरमाह—

पैठीनसिः ।

मनसा ध्यायन् दक्षिणामुखस्त्रीनुदकाञ्जलीन्निनयेत् ।

शावप्रभृत्येकादशाहं विरमेत् । शावप्रभृति=मरणप्रभृतीत्यर्थः ।
उदकदाने विशेषान्तरमाह—

प्रचेताः ।

प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य नोद्धर्षयेयुरुदकान्ते प्रसिञ्चेयुरपसव्ययज्ञोपवीतवाससो दक्षिणाभिमुखा ब्राह्मणस्योदङ्मुखाः प्राङ्मुखा राजन्यवैश्ययोः ।

उदकान्ते उदकसमीपे प्रसिञ्चेयुरुदकं दद्युः । अपसव्यं यज्ञोपवीतं वासश्च येषां ते तथा । ब्राह्मणस्य मृतस्येत्यर्थः ।

सर्वेषां प्राग्दक्षिणाभिमुखत्वमिति पक्षान्तरमाह ।

शङ्खः ।

प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य नोद्धर्षयेयुस्ते प्रसिञ्चेरन् सकृत्प्राग्दक्षिणामुखाः, राजन्यवैश्यावप्येवमेवापसव्यं वासो यज्ञोपवीतं कृत्वाञ्जलिना जलेन सप्त उदकमभ्युक्ष्य तस्मादुत्तीर्य प्रेत संस्पृष्टानि वासांसि परित्यज्य पादप्रक्षालनमाचामेयुः ।

वासश्च यज्ञोपवीतं चेत्युभयमपसव्यं कृत्वेत्यर्थः । अत्र चोत्तरीयं क्षत्रियादिविषयं सन्निधानात् । अतश्च पारस्करोक्तमेकवस्त्रत्वं ब्राह्मणविषयमिति देवयाज्ञिकः । अत्र विशेषः—

ब्रह्मपुराणे ।

कर्तव्यं तु सचैलं तु स्नानं सर्वमलापहम् ।
ततः पाषाणपृष्ठे तु सर्वं देयं तिलोदकम् ॥
एकैकेन च देयास्तु विप्रायाञ्जलयो दश ।
राज्ञे द्वादश देयास्तु वैश्याय दश पञ्च च ।
त्रिंशच्छूद्राय देयास्तु प्रेतभूयङ्गताय वै ॥

उदकदाने दिनविशेषमाह ।

गौतमः ।

सपिण्डानां प्रथमतृतीयसप्तमनवमेषूदकक्रियेति । तथा—

भरद्वाजः ।

दक्षिणाभिमुखोन्मज्य प्रदद्याद्दर्भसंस्तरे ।
आशौचाद्दञ्जलिं पिण्डं प्रत्यहं च सकृत् सकृत् ॥

प्रचेताः ।

नदीकूलं ततो गत्वा शौचं कृत्वा यथार्थवत् ।

वस्त्रं संशोधयेदादौ ततः स्नानं समाचरेत् ।
सचैलस्तु ततः स्नात्वा शुचिः प्रयतमानसः ।
पाषाणं तत आदाय विप्रे दद्याद्दशाञ्जलीन् ॥
द्वादश क्षत्रिये दद्याद्वैश्ये पञ्चदश स्मृताः ।
त्रिंशच्छूद्राय दातव्या स्ततः संप्रविशेद् गृहम् ॥
ततः स्नानं पुनः कार्यं गृहशौचं च कारयेत् ।

अत्राञ्जलिसंख्या तत्तद्वर्णाशौचादिनेषु प्रत्यहमेकैकाञ्जलिदानेना-शौचदिनसमा द्रष्टव्या ।

पञ्चपञ्चाशदञ्जलिपक्षमपि स एवाह ।

दिने दिनेऽञ्जलीन् पूर्णान् प्रदद्यात्प्रेतकारणात् ।
तावद्वृद्धिश्च कर्त्तव्या यावत्पिण्डः समाप्यते ।

प्रथमदिन एकोऽञ्जलिः, द्वितीये द्वौ, तृतीये त्रय इत्यादि क्रमेण वृद्धिः कर्त्तव्या । एवं च दशसु दिनेषु पञ्चपञ्चाशदञ्जलयो भवन्ति ।

शताञ्जलिपक्षमाह—

गृह्यपरिशिष्टकारः ।

आशौचान्तं प्रदद्यात्तु प्रेतपूतस्तिलाञ्जलीन् ।
प्रथमेऽह्नि सकृद्दद्यात् पिण्डयज्ञावृता भुवि ।
त्रींश्च दद्याद्द्वितीयेऽह्नि तृतीये पञ्च चैव हि ।
चतुर्थे सप्तसंख्याकान् पञ्चमे नव चोत्सृजेत् ।
षष्ठेऽह्नि चैकादशकाः सप्तमे तु त्रयोदश ।
अष्टमे पञ्चदशका नवमे दश सप्त च ॥
एकोनविंशतिश्चान्ते शताञ्जलीरिति स्मृता ।
केचित् दशाञ्जलीन् प्राहुः केचिदाहुः शताञ्जलीन् ।
पञ्चपञ्चाशतं चान्ये स्वशाखोक्तव्यवस्थया ॥ इति ।

पिण्डयज्ञावृता=प्राचीनावीतित्वदक्षिणामुखत्वादिना पिण्डपितृयज्ञप्रकारेण । अत्र च प्रत्यहमञ्जलिदानं पूरकस्यैव तत्रैव च शताञ्जल्यादिपक्षाः शाखाभेदेन व्यवस्थिताः । सपिण्डानां तु विषमेष्वेव दिनेषु, उक्तगौतमवचनात् ।

यत्रापि याज्ञवल्क्येनोदकदाने ज्ञातीनां दशमदिनावधिकत्वमुक्तम् । तत्रापि गौतमवचनानुसाराद्दशमादिनादर्वाक् विषमेषु दिनेष्विति व्याख्येयम् । अत्रातिक्रान्तिदशमाह—

याज्ञवल्क्यः ।

एवं मातामहाचार्यप्रेतानां चोदकक्रिया ।

कामोदकं सखिप्रत्तास्वस्रीयश्वशुरर्त्विजि ॥

मातामहादीनां दौहित्रादिभिः पूर्वोक्तप्रकारेणोदकदानं कार्यम् । सखा=मित्रम् । प्रत्ताः=परिणीता दुहितृभागिन्यादयः । स्वस्रीयः=भागिनेयः । श्वशुरः प्रसिद्धः । ऋत्विजो=याजकाः । एषा सख्यादीनां कामोदकं कार्यम् । प्रेतस्योदककामनायां सत्यामुदकं देयमसत्यां न देयम्, अकरणे प्रत्यवायो नास्तीत्यर्थः ।

पारस्करः ।

कामोदकसख्यृत्विक्श्वशुरसखिमातुलभागिनेयानाम् ।

सपिण्डानां मध्ये केषाश्चिदुदकदाने कर्तृत्वप्रतिषेधमाह ।

याज्ञवल्क्यः ।

न ब्रह्मचारिणः कुर्युरुदकं पतिता न च ।

उदकग्रहणमौर्ध्वदैहिकमात्रोपलक्षणम् । ब्रह्मचर्योत्तरकाले पूर्वमृतानां सपिण्डानामुदकदानमाशौचं च कुर्यादेव । यथाह—

मनुः ।

आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् ।

समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत् ॥

आदिष्टी=ब्रह्मचार्यस्य पोशानं कर्म कुरु दिवा मा स्वाप्सीराचार्याधीनो वेदमधीष्वेति व्रतादेशयोगाद्ब्रह्मचार्युच्यते । अयं च ब्रह्मचारिण उदकदानप्रतिषेध आचार्यादिव्यतिरेकेण ।

आचार्यपित्र्युपाध्यायान्निर्हृत्यापि व्रती व्रती ।

सकटान्नं च नाश्नीयान्न च तैः सह संविशेत् ॥

इतिस्मरणात् । आदिष्टी=प्रक्रान्तप्रायश्चित्त इति केचित् ।

वृद्धमनुः ।

क्लीबाद्या नोदकं कुर्युः स्तेना व्रात्या विधर्मिणः ।

गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः ॥

तत्प्रदानविशेषणापि प्रतिषेधः श्रूयते ।

पाषण्ड्यनाश्रिताः स्तेना भर्तृघ्न्यः कामगादिकाः ॥

सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः

श्रुतिबाह्यलिङ्गधारणं पाषण्डं तदस्ति येषां ते पाषण्डिनः ॥

अनाश्रिता आश्रमानधिकारे सत्यकृताश्रमविशेषपरिग्रहाः । स्तेनाः—सुवर्णादुत्तमद्रव्यहारिणः । भर्तृघ्न्यः=पतिघातिन्यः । कामगाः—कुलटाः । आदिग्रहणात् स्वगर्भब्राह्मणघातिन्यो गृह्यन्ते । सुराप्यः=याः स्त्रियः सुरां प्रतिविद्धा मद्यपानरताः । आत्मत्यागिन्यः=विषपानादिना आत्मघातिनः ।

या घातयन्ति। एते पाषण्ड्यादयस्त्रिरात्रं दशरात्रं वेत्याशौचस्योदकदानाद्यौर्ध्वदेहिकस्य च भाजना न भवन्ति। सपिण्डादीनामाशौचादिनिमित्ता न भवन्ति। अतस्तन्मरणे सपिण्डैरुदकदानादि न कार्यमित्येतत् प्रतिपादनपरं वचनम्। सुराप्य इत्यादिषु च लिङ्गमविवक्षितमनुपादेयगतत्वात्। अथमुदकदानादिप्रतिषेधो बुद्धिपूर्वकात्मत्यागिविषयः। यथाह—

गौतमः।

प्रायोऽनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छतामिति।

प्रायो=महाप्रस्थानम्। अनाशकमनशनम्। गिरिशिखरादवपातः प्रपतनम्। अत्र चेच्छतामिति विशेषापादानात् प्रमादकृते दोषो नास्तीत्यवगन्तव्यम्। तदाह—

अङ्गिराः।

अथ कश्चित्प्रमादेन म्रियेताग्न्युदकादिभिः।
तस्याशौचं विधातव्यं कर्त्तव्या चोदकक्रिया॥

एवं मृत्युविशेषादप्युदकादिनिषेधः।

चाण्डालादुदकात्सर्पाद्ब्राह्मणाद् वैद्युतादपि।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम्॥
उदकं पिण्डदानं च प्रेतेभ्यो यत्प्रदीयते।
नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति॥

एतदपीच्छापूर्वकहननविषयमेव, गौतमवचन इच्छापूर्वकमेवोदकेन हतस्य निषेधदर्शनात्। अत्रापि चाण्डालादुदकादिति तत्साहचर्यदर्शनाद् बुद्धिपूर्वविषयकत्वनिश्चयः। अतो दर्पादिना चाण्डालादीन् हन्तुं गतो यस्तैर्मारितस्तस्यायमुदकदानादिनिषेधः। अयं चोदकादिप्रतिषेधोऽनुष्ठानसमर्थजीर्णवानप्रस्थादिव्यतिरिक्तविषयस्तेषामभ्यनुज्ञादर्शनात्।

वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः॥
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः।
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत्॥

इति मिताक्षरायां स्मृत्यन्तरोदाहरणात्। एवं येन येनोपायेनात्महननं विहितं तद्व्यतिरिक्तोपायेनेच्छयात्महनने कृते नायमुदकदानप्रकारः। अतस्तद्विषयं प्रकारान्तरमाह—

स्मृतिः।

पतितस्य तु कारुण्याद्यस्तार्क्ष्यं कर्तुमिच्छति।

स च दासीं समाहूय सर्वेषां दत्तवेतनाम् ॥
अशुद्धघटहस्तां तु यथावृत्तं ब्रवीत्यपि ।
हे दासि गच्छ मूल्येन तिलानानय सत्वरम् ॥
तोयपूर्णं घटं चेमं सतिलं दक्षिणामुखम् ।
उपविष्टा तु वामेन चरणेन ततः क्षिप ॥
तृप्तये मृतसञ्ज्ञानं पिबेति च वदेन्मुहुः ।
निशम्य तस्य वाक्यं सा लब्धमूल्या वदेच्च यत् ॥
एवं कृते भवेत्तृप्तिः पतितानां च नान्यथा ।

इति पतितोद्देश्यकतिलोदकदानप्रकारः । एतदनन्तरं कर्त्तव्यमाह- याज्ञवल्क्यः ।

कृतोदकान् समुत्तीर्णान्मृदुशाद्वलसंस्थितान् ।
स्नातानपवदेयुस्तानितिहासैः पुरातनैः ॥

शाद्वले=नवोद्गततृणहरितभूमौ । अवस्थितान्पुत्रादीन् कुलवृद्धा। इतिहासैः शोकनिरसनसमर्थैरपवदेयुः=प्रतिबोधयेयुः । ते च -

मानुष्ये कदलीस्तम्भनिस्सारे सारमार्गणम् ।
करोति यः स सम्मूढो जलबुद्बुदसन्निभे ॥

मानुष्ये=मनुष्यत्वे ।

पञ्चधा सम्भृतः कायो यदि पञ्चत्वमागतः ।
कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥
गन्त्री वसुमती नाशमुदधिर्दैवतानि च ॥
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ।

इत्यादयः ।

कात्यायनोऽपि तानाह—

एवं कृतोदकान् सम्यक् सर्वान् शाद्वलसंस्थितान् ।
आप्लुत्य पुनराचान्तान् वदेयुस्तेऽनुयायिनः ॥
मा शोकं कुरुतानित्ये सर्वस्मिन् प्राणधर्मिणि ।
धर्मं कुरुत यत्नेन यो वः सह गमिष्यति ॥

तथा—

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥
श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
अतो न रोदितव्यं हि क्रियाः कार्याः प्रयत्नतः ॥

महाभारते ।

नायमत्यन्तसंवासः कस्यचित् केनचित् सह ।

अपि नः स्वशरीरेण किमुतान्यैः पृथग्जनैः ॥
देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरं प्राप्य धीरस्तत्र न मुह्यति ॥
यथा काष्ठं च लोष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद् भूतसमागमः ॥

इतीतिहासश्रवणानन्तरं च गृहं गच्छेयुः । तत्र विशेषमाह—

याज्ञवल्क्यः ।

इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः ।
विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः ॥
आचम्याग्न्यादि सलिलं गोमयं गौरसर्षपान् ।
प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः ॥
प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि ।

पूर्वोक्तानीतिहासवचनानि समाकर्ण्य बालानग्रतः कृत्वा गृहं गच्छेयुः । गत्वा च वेश्मद्वारि स्थित्वा निम्बपत्राणि सन्दश्य दशनैः खण्डयित्वाचम्याग्न्युदकगोमयगौरसर्षपानालभ्याश्मनि पदं निधाय शनैरस्खलितं प्रविशेयुः ।

शङ्खस्त्वन्यमपि विशेषमाह ।

दूर्वाप्रवालगोमयमग्निं वृषभं चालभ्य प्रविशन्ति इति । प्रेतस्पर्शिनां प्रवेशे विशेषमाह ।

पारस्करः ।

प्रेतस्पर्शिनो ग्रामं न प्रविशेयुरानक्षत्रदर्शनाद्रात्रौ चेदादित्यस्य । हारीतेन तु ब्राह्मणानुमत्या वेत्यधिकं पठितम् । यदि तत्कालप्रतीक्षायामसामर्थ्यं तदा ब्राह्मणानुमत्या प्रविशेदित्यर्थः । गृहप्रवेशानन्तरकर्तव्यमाह ।

भृगुः ।

गृहं प्रविश्य यत्र कश्चित्प्राणोत्क्रमस्तत्रोपविश्य वस्तमाक्रमय्य यथोदकेनावोक्ष्य स्वस्त्यस्तु गृहाणां शिवं चास्त्विति तिलतण्डुलान् व्रीहीन् प्रकिरन्तीति । वस्तः=छागः ।

पुत्राद्याशौचिकृत्यमाह—

वशिष्ठः ।

गृहान् व्रजित्वाधप्रस्तरे त्र्यहमनश्नन्त आसीरन् क्रीतोत्पन्नेन वा वर्तेरन्निति ।

अधप्रस्तरः=अशौचिनां शयनाद्यर्थं तृणादिनिर्मितः कटः ।

बौधायनः ।

अक्षारलवणाशिनो दशाहं कटमुपासीरन्निति ।

मनुः ।

अक्षारलवणान्नाः स्युर्निमज्जेयुश्च तेऽन्वहम् ।
मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ ॥

बृहस्पतिः ।

अधःशय्यासना दीना मलिना भोगवर्जिताः ।
अक्षारलवणान्नाः स्युर्लब्धक्रीताशनास्तथा ॥

गौतमः ।

अधःशय्यासना ब्रह्मचारिणः सर्वे समासीरन्मांसं न भक्षयेयुराप्रदानादिति । प्रदानम्=एकादशाहश्राद्धम् ।

पारस्करः ।

त्रिरात्रं ब्रह्मचारिणोऽधः शायिनो न किञ्चित्कर्म कुर्युः, पाकं च न कुर्वीरन् क्रीत्वा लब्ध्वा वा दिवाश्नीयुरमांसमिति । अयं च दिवाश्नीयुरिति दिवाशननियमो द्वितीयादिदिवसविषयः । प्रथमदिवसे रात्रावशनस्याप्यनुज्ञानात् । तदाह—

आश्वलायनः ।

यत्रोदकमवहद्भवति तत्प्राप्य सकृदुन्मज्यैकाञ्जलिमुत्सृज्य गोत्रं नाम च गृहीत्वोत्तीर्यान्यानि वासांसि परिधाय सकृदेव तान्यापीड्योदग्दानदशानि विसृज्यासते । आनक्षत्रदर्शनादादित्यस्य वा मण्डले दृश्यमाने प्रविशेयुः । कनिष्ठप्रथमा ज्यष्ठजघन्याः प्राप्यागारमश्मानमग्निं गोमयमक्षारांस्तैलमप उपस्पृशन्ति । ते तस्यां रात्र्यामन्नं पचेरन् क्रीतोत्पन्नेन वा वर्त्तेरन् त्रिरात्रमक्षारालवणाशिनः स्युर्द्वादशरात्रं वा महागुरुषु दानाध्ययने वर्जयेरन्निति ।

उदकमवहत्=स्थिरं भवति । सकृदुन्मज्य=सकृन्निमग्नाः समञ्जलिमुत्सृजेयुः पुरुषाः स्त्रियश्च तस्य प्रेतस्य गोत्रं नाम च गृहीत्वा यथा काश्यप! देवदत्त! एतत्त उदकमिति । आदित्यस्य वा मण्डले रश्मिवर्जिते दृश्यमाने अस्मिन् पक्षे आसने रश्मिमण्डलदर्शनादासनं । एषु च पूर्वोदाहृतवचनेषु त्र्यहैकाहोपवासः शक्ताशक्तविषयः । क्रीतस्य लब्धस्य वा भोजनमत्यशक्तविषयम् । मिताक्षराकारस्तु क्रीतलब्धासम्भवे उपवासमाहुः । अत्र विशेषमाह—

स्मृतिः ।

उपवासो गुरौ प्रेते पत्न्याः पुत्रस्य वा भवेत् ।

तद्दिन इतिशेषः ।

विशेषान्तरं च तत्रैव ।

महागुरुमृतौ तद्वत्क्षारलवणाशनाः ।
ह्यधिकं दशरात्रं स्युर्दानाध्ययनवर्जिताः ॥

अत्र कृतोदकान् समुत्तीर्णानिति पूर्वोदाहृतवचनादुदकदानानन्तरं गृहप्रवेशस्तदुत्तरं च पिण्डदानमिति क्रमो ज्ञेयः ।

मदनरत्नस्तु प्रेतस्योदकनिर्वपणं कृत्वा एकं पिण्डं दद्युरिति विष्णुवचनादुदकदानोत्तरं पिण्डदानं तदनन्तरं गृहप्रवेश इत्याह ।

पिण्डदाने स्थलविशेषमाह—

शङ्खः ।

गृहद्वारे प्रेताय पिण्डं दत्त्वा पश्चात्प्रविशेयुः ।

वृद्धप्रचेतास्त्वाह ।

द्वारदेशे प्रदातव्यो न देवायतने क्वचित् ॥

आदित्यपुराणे ।

द्वारदेशेषु दातव्यो न देवायतने क्वचित् ।

एवं च देवतायतनस्य विहितप्रतिषिद्धत्वाद्विकल्पः । पिण्डो दातव्य इत्यनुवृत्तावाह ।

आदित्यपुराणे ।

शुचौ तु देशे नद्यां वा जीर्णतोये प्रदापयेत् ।

वाराहपुराणे ।

स्थण्डिले प्रेतभागं तु दद्यात् पूर्वाह्ण एव तु ।
कृत्वा तु पिण्डसङ्कल्पं नामगोत्रेण सुन्दरि ॥
पश्चादश्नन्ति गोत्राणि सकुल्यास्त्वेकभोजनाः ।
न दद्यादन्यगोत्राय भुञ्जते यत एकतः ॥
चतुर्णामपि वर्णानां प्रेतकार्येषु माधवि ।
एवं दत्तेन प्रीयन्ते प्रेतलोकगता नराः ॥

ब्रह्माण्डपुराणे ।

प्रेतीभूतस्य सततं भुवि पिण्डं जलं तथा ।
सतिलं सकुशं दद्याद् बहिर्जलसमीपतः ॥

कूर्मपुराणे ।

दशाहं बान्धवाः स्नात्वा सर्वे चैव सुसंयताः ।
पिण्डं प्रतिदिनं दद्युः सायं प्रातर्यथाविधि ॥

अत्र सायमित्यपराह्णे मृतौ प्रथमदिने सायंकाले प्राप्त्यर्थं न तु प्रत्यहं कालद्वये विधानार्थं दद्युरिति बहुवचनं पुत्राभावे पत्न्यादेरपि प्राप्त्यर्थम् ।

ब्रह्मपुराणे ।

ग्रामाद्बहिश्च कर्त्तव्यं जलाशयसमीपतः ।
पिण्डदानं दशाहानि प्रेतायारण्यमाश्रितैः ॥
अरण्ये पिण्डदानं तु मोहाच्च क्रियते यदि ।
तदा रौरवमायाति प्रमीतः प्रथमेऽहनि ।
पुन्नामसंज्ञं त्वपरे महारावं तृतीयके ।
तामिस्राख्यं चतुर्थे तु प्रयात्यपि सुदारुणम् ॥
पञ्चमे चान्धतामिस्रं षष्ठे घोरं च सुप्रभम् ।
अमेध्यभूमिसम्पूर्णं सप्तमेऽहनि घातकम् ॥
असिपत्रवनं घोरमष्टमेऽहनि सर्वथा ।
महारौरवसंज्ञं तु नवमे याति मानवः ।
अवीचिरिति विख्यातं दशमेऽहनि भीषणम् ॥
तण्डुलैः सक्तुभिः शाकैः फलैर्वा अथवा ततः ।
देशकालानुसारेण कुर्यात् प्रेतस्य तर्पणम् ॥
प्रेताय दिवसे पिण्डा देय एकक्रमेण हि ॥ इति ।

अत्र नरकश्रवणं पिण्डदानाकरण एव न त्वरण्ये तदकरणे उपसंहारानुसारात् । दशाहग्रहणं च ब्राह्मणविषयम् । अत एवाह—

विष्णुः ।

यावदाशौचं प्रेतस्योदकं पिण्डमेकं च दद्युः ।
आशौचह्रासे पिण्डदानं संख्यामाह ।

शातातपः ।

आशौचस्य च ह्रासेऽपि पिण्डान् दद्याद्दशैव तु ।

त्र्यहाशौचे दश पिण्डाः कथं दातव्या इत्याकाङ्क्षायामाह—

पारस्करः ।

प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः ।
द्वितीये चतुरो दद्यादस्थिसञ्चयनं तथा ॥
त्रींस्तु दद्यात् तृतीयेऽह्नि वस्त्रादिक्षालनं तथा ।

ब्रह्मपुराणे ।

सद्यः शौचविषये युगपद्दशपिण्डदानं त्र्यहाशौचे च प्रकारान्तरमुक्तम् ।

सद्यः शौचे प्रदातव्याः सर्वेऽपि युगपत्तथा ।
त्र्यहाशौचे प्रदातव्याः प्रथमे त्वेक एव हि ॥
द्वितीयेऽहनि चत्वारस्तृतीये पञ्च चैव हि ।

गर्गः ।

वैवयाज्ञिकेन "पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रय"मिति

वचनात्पिण्डत्रयमेव त्र्यहाशौच इत्युक्तम्। तन्न। उक्तवचनविरोधात्। पिण्डत्रयविधानं स्वशक्तिविषयमिति विज्ञानेश्वरः। सम्पूर्णाशौचे तु यावदाशौचं पिण्डदानमित्युक्तम्। ब्रह्मपुराणे तु यावदाशौचपक्षं निन्दित्वा दशपिण्डदानपक्षमेव प्रसाध्य तत्र दशमपिण्डस्य काल उक्तः।

यथा।

अत्युक्ताशौचतुल्यांस्तु वर्णानां क्वचिदेव हि।
दशधर्मान् पुरस्कृत्य प्रेतपिण्डान् वपन्त्यपि॥
देयस्तु दशमः पिण्डो राज्ञां वै द्वादशेऽहनि।
वैश्यानां पञ्चदशके देयस्तु दशमस्तथा।
शूद्रस्य दशमः पिण्डो मासि पूर्णेऽह्नि दीयते॥

पारस्करोऽपि।

ब्राह्मणे दशपिण्डास्तु क्षत्रिये द्वादश स्मृताः।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत् प्रकीर्तिताः॥

इत्युक्त्वा संख्यान्तरमाह।

प्रेतेभ्यः सर्ववर्णेभ्यः पिण्डान् दद्याद्दशैव तु।
श्राद्धकर्मणि संप्राप्ते पिण्ड एको विधीयते।

श्राद्धकर्माणि महैकोद्दिष्टे संप्राप्ते पूर्वदिन इत्यर्थः। उपनीतानुपनीतभेदेन धर्मविशेषमाह।

प्रचेताः।

असंस्कृतानां भूमौ पिण्डं दद्यात्संस्कृतानां कुशेषु।

पिण्डानां प्रत्यहमेकद्रव्यत्वमाह शुनःपुच्छः।

फलमूलैश्च पयसा शाकेन च गुडेन च।
तिलमिश्रं तु दर्भेषु पिण्डं दक्षिणतो हरेत्॥
तूष्णीं प्रसेकं पुष्पं च धूपं दीपं तथैव च।
शालिना सक्तुभिर्वापि शाकैर्वाप्यथ निर्वपेत्।
प्रथमेऽहनि यद् द्रव्यं तदेव स्याद्दशाहिकम्॥

भविष्योत्तरेऽपि।

ओदनाम्भःसक्तूनां शाकमूलफलादिषु।
प्रथमेऽहनि यद् दद्यात्तद् दद्यादुत्तरेऽहनि॥

प्रत्यहं कर्त्रैक्यमाह—

गृह्यपरिशिष्टे।

असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्।
प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत्॥

वायुपुराणे ।

यश्चाग्निदाता प्रेतस्य पिण्डान् दद्यात्स एव हि ।

ब्रह्मपुराणे ।

प्रथमेऽहनि यो दद्यात्प्रेतायान्नं समाहितः ।
अन्नं नवसु चान्येषु स एव प्रददात्यपि ॥

देशैक्यं भविष्योत्तरे ।

गृहद्वारे श्मशाने च तीर्थे देवगृहे तथा ।
यत्राद्यो दीयते पिण्डस्तत्र सर्वं समापयेत् ।
एतेषामन्येषां च विपर्यये विशेषो ।

गृह्यकारिकायाम् ।

उत्तरीयशिलापात्रकर्तृद्रव्यविपर्यये ।
पूर्वदत्ताञ्जलीन् दत्वा पूर्वपिण्डांस्तथैव च ॥

शिला=अश्म । पात्रं=पाकपात्रम् । अत्र शिलाया नाशे न घटस्फोटावृत्तिः । अक्षाभ्यञ्जनादिपदकर्मण एकहायनीनयनवदप्रयोजकत्वात् । अतश्चात्र लौकिकग्रहणम् ।

प्रत्यहं पात्रभेदपक्षमाह—

प्रचेताः ।

नवान्यादाय भाण्डानि आलुकं चरुकं तथा ।
तोयार्थं तु ततो गच्छेद् गृहीत्वा पुरुषः परः ॥
गृहीत्वा लकुटं मार्गात्सर्वदुष्टनिवारणम् ।
ततो गृहं सम्प्रविशेत्प्रेतस्याहृत्य तण्डुलान् ॥
तेषां प्रसृतिमादाय कर्त्तव्यं पिण्डकर्म तु ।
त्रिः प्रक्षाल्य तु तान् सम्यक् चरुं सम्पादयेत्ततः ।
तं सम्पाद्य समादाय दर्भेषु विनिवेशयेत् ॥
दक्षिणाग्रांश्च दर्भांश्च स च वै दक्षिणामुखः ।
पिण्डं कृत्वा समुद्धृत्य नामगोत्रेण चार्पयेत् ॥

अत्र मन्त्रनिषेधमाह—

आदित्यपुराणे ।

तिलमिश्रेषु दर्भेषु कर्त्ता वै दक्षिणामुखः ।
नामगोत्रप्रमाणेन दद्यात्पिण्डं त्वमन्त्रकम् ॥

मरीचिः ।

प्रेतपिण्डं बहिर्दद्याद्दर्भमन्त्रविवर्जितम् ।
प्रागुदीच्यां चरुं कृत्वा स्नातः प्रयतमानसः ॥

आदित्यपुराणे ।

पितृशब्दं स्वधां चैव न प्रयुञ्जीत कर्हिचित् ।

अनुशब्दं तथा चेह प्रयत्नेन विवर्जयेत् ॥
उपतिष्ठतामयं पिण्डः प्रेतायेति समुद्धरेत् ।
तूष्णीं धूपं प्रसेकं च दीपं पुष्पं तथैव च ॥
अशुद्धास्विषु वर्णेषु दद्यान्न संशयः ।
बाष्पतः प्रयतश्चैव तिष्ठेत्पिण्डस्य सन्निधौ ॥
ततो बाष्पे निवृत्ते तु नद्यां तु प्रक्षिपेत्ततः ।

ब्रह्मपुराणे ।

मृन्मयं भाण्डमादाय नरः स्नातः सुसंयतः ।
लगुडं सर्ववृक्षजं गृहीत्वा तोयमानयेत् ॥
ततश्चात्तरपूर्वस्यामग्निं प्रज्वालयेद्दिशि ।
तण्डुलप्रसृतिं तत्र त्रिः प्रक्षाल्य पचेत्स्वयम् ।
सर्पार्वत्रैस्तिलैर्मिश्रं कृमिकेशविवर्जितम् ॥
द्वारोपान्ते ततः क्षिप्त्वा सुशुद्धां गौरमृत्तिकाम् ।
तत्पृष्ठे प्रस्तरे दर्भान् याम्याग्रान् देशसम्भवान् ॥
ततोऽवनेजनं दद्यात्संस्मरन् गोत्रनामनी ।
तिलसर्पिर्मधुक्षीरैः संसिक्तं तत्समेव हि ॥
दद्यात्प्रेताय पिण्डं तु दक्षिणाभिमुखः स्थितः ।
फलमूलगुडक्षीरतिलैर्मिश्रं तु कुत्रचित् ॥
अर्घ्यैः पुष्पैस्तथा धूपैर्दीपैस्तोयैश्च शीतलैः ।
ऊर्णातन्तुमयैः शुक्लैर्वासोभिः पिण्डमर्चयेत् ।
प्रयाति यावदाकाशं पिण्डाद्बाष्पमयी शिखा ॥
तावत्तत्संमुखं तिष्ठेत्पिण्डं तोये क्षिपेत्ततः ।
एकस्तोयाञ्जलिश्चैव पात्रमेकं च दीयते ॥
द्वितीये द्वौ तृतीये त्रीन् चतुर्थे चतुरस्तथा ।
पञ्चमे पञ्च षट् षष्ठे सप्तमे सप्त एव च ॥
अष्टमेऽष्टौ च नवमे नवैव दशमे दश ।
एवं स्युः पञ्च पञ्चाशत् तोयस्याञ्जलयः क्रमात् ॥
तावद्बाष्पश्च कर्तव्या यावत्पिण्डः समाप्यते ।

ब्रह्मपुराणे ।

प्रेताय पिण्डदानं तु कर्तुं गच्छन्ति ये नराः ।
निष्क्रामन्ति गृहात्ते तु ज्येष्ठं कृत्वा पुरस्सरम् ॥
ह्रस्वान् पुरस्सरान् कृत्वा प्रविशन्ति गृहं तु ते ।

उल्लङ्घ्य शस्त्रपाषाणौ प्रविशन्ति गृहं क्रमात् ॥

एवं पिण्डदानं कृत्वा गृहमागत्य तत्कृत्यमाह ।

ब्रह्मपुराणे ।

एकाहं द्वारदेशे तु जलपात्रं निधाय च ।
क्षीरपात्रं च कारुण्यात्प्रेतायेति विनिश्चयः ॥
प्रेतास्मिन् शीतले तोये स्नाहि दुग्धं ततः पिब ।
इति जल्पंश्चिरात्रे तु भक्तमुष्टिं क्षिपेत्तथा ॥

शातातपः ।

जलमेकाहमाकाशे स्थाप्यं क्षीरं च मृन्मये ।

आकाशे शिक्यादौ प्रेतमुद्दिश्य जलं क्षीरं च पृथक् मृन्मये पात्रे प्रथममहोरात्रं स्थापयेदित्यर्थः ।

अत्र दिनसंख्याधिक्यमुक्तम् ।

गारुडे ।

अपक्के मृन्मये पात्रे दुग्धं दद्याद्दिनत्रयम् ।
काष्ठत्रये गुणैर्बद्धे पुत्रो रात्रौ चतुष्पथे ॥

तथा—

मत्स्यपुराणे ।

सर्वथा तापशान्त्यर्थमध्वश्रमविनाशनम् ।
तस्मान्निधेयमाकाशे दशरात्रं पयस्तथा ॥

पद्मपुराणेऽपि ।

यस्मात्प्रेतपुरीं प्रेतो द्वादशाहेन नीयते ।
गृहपुत्रकलत्रं च स दशाहं प्रपश्यति ॥
तस्मान्निजपितृकुलं वर्जयित्वा नराधमः ।
अस्थीन्यन्यकुलस्थस्य नीत्वा चान्द्रायणं चरेत् ॥

मार्गादौ स्पर्शादिदोषे शुद्धिप्रकारमाह ।

शौनकः ।

अजिनं कम्बला दर्भा गोकेशाः शाणमेव च ।
भूर्जपत्रं ताडपत्रं सप्तधा वेष्टनं स्मृतम् ॥
हेमं च मौक्तिकं रौप्यं प्रवालं नीलकं तथा ।
क्षिपेत्तदस्थिमध्ये तु शुद्धिर्भवति नान्यथा ॥
ततो होमं प्रकुर्वीत तिलाज्येन विचक्षणः ।
उदीरतेति सूक्तेन जुहेदष्टोत्तरं शतम् ॥
ततो गत्वा क्षिपेत्तीर्थे स्पर्शदोषो न विद्यते ।

मूत्रपुरीषाचमने कुर्वन्नस्थीनि धारयेत् ॥

अत्रास्थिसञ्चयने कालः समयप्रकाशे द्रष्टव्यः ।

अथ नवश्राद्धानि ।

तथा चाश्वलायनः ।

नवश्राद्धं दशाहानीति ।

नागरखण्डे ।

त्रीणि सञ्चयनस्यार्थे तानि वै शृणु साम्प्रतम् ।
यत्र स्थाने भवेन्मृत्युस्तत्र श्राद्धं तु कारयेत् ॥
एकोद्दिष्टं ततो मार्गे विश्रामो यत्र कारितः ।
तत्र सञ्चयनस्थाने तृतीयं श्राद्धमिष्यते ॥
पञ्चमे सप्तमे तद्वदष्टमे नवमे तथा ।
दशमैकादशे चैव नवश्राद्धानि तानि वै ।

कात्यायनोऽपि ।

चतुर्थे पञ्चमे चैव नवमैकादशेऽहनि ॥
यत्तु वै दीयते जन्तोस्तन्नवश्राद्धमुच्यते ।

संज्ञाकरणं च "चान्द्रायणं नवश्राद्धे" इति प्रायश्चित्तविशेषविधानार्थम् ।

वृद्धवशिष्ठः ।

प्रथमेऽह्नि तृतीये च सप्तमे नवमे तथा ।
एकादशे पञ्चमे स्युर्नवश्राद्धानि षट् तथा ॥

बौधायनः ।

मरणाद्विषमेषु दिनेष्वेकैकं नवश्राद्धं कुर्यादानवमाद्, यदि नवमं विच्छिद्येत एकादशे तत्कुर्यात् । नवमदिनकर्त्तव्यस्य श्राद्धस्य नवमदिने दैवादलम्भव एकादशदिने तत्कर्त्तव्यमित्यर्थः ।

अत्रिः ।

नवश्राद्धनिमित्तं स्यादेकमेकादशेऽहनि ।

एवमनेकेषु पक्षेषु सत्सु येषां गृह्ये नवश्राद्धान्युक्तानि तैर्यथागृह्यमनुष्ठेयानि स्वगृह्ये नोक्तानि चेत्पुराणाद्युक्तानि यं कञ्चित्पक्षमाश्रित्य कर्त्तव्यानि । एतेषां प्रेतत्वनिवर्त्तकत्वाञ्चित्यत्वमाह ।

वृद्धवशिष्ठः ।

अलब्ध्वा तु नवश्राद्धं प्रेतत्वात्स न मुच्यते ।
अर्वाक्तु द्वादशाहस्य लब्ध्वा तरति दुष्कृतम् ॥

एतानि चैकोद्दिष्टरूपाणि ।

तदुक्तम् ।

ब्रह्माण्डपुराणे ।

नवश्राद्धानि कुर्वीत प्रेतोद्देशेन यत्नतः ।
एकोद्दिष्टविधानेन नान्यथा तु कदाचन ॥

एकोद्दिष्टरूपत्वेऽपि युग्मा ब्राह्मणा भोजयितव्या इत्यर्थः । एकादशाहिके त्वेकोऽपि । "एकमेकादशेऽहनी"त्यादिवचनात् । "अयुग्मान् भोजयेद्विप्रांस्तन्नवश्राद्धमुच्यते" इति शूलपाण्यादिनिबन्धेषु पाठः । अत्र भोजयेदिति वचनादेषां श्राद्धानामन्नद्रव्यकत्वं प्रतीयते । कात्यायनोक्तं चतुर्थाहनवश्राद्धे विशेषमाह—

बृहस्पतिः ।

चतुर्थेऽहनि विप्रेभ्यो देयमन्नं हि बान्धवैः ।
गावः सुवर्णं वित्तं च प्रेतमुद्दिश्य शक्तितः ॥
यदिष्टं जीवतश्चासीद्दद्यात्तस्य प्रयत्नतः ।

अत्र निमन्त्रणादौ विशेष उक्तो—

भविष्ये ।

गतोऽसि दिव्यलोकं त्वं कृतान्तविहितात्पथा ।
मनसा वायुभूतेन विप्रे त्वाहं नियोजये ॥
पूजयिष्यामि भोगैस्त्वामेवं विप्रं निमन्त्रयेत् ।
इहलोकं परित्यज्य गतोऽसि परमां गतिम् ॥
मनसा वायुभूतेन विप्रे त्वावाहयाम्यहम् ।
तत्र नवश्राद्धेषु केषाञ्चित्पदार्थानामननुष्ठानमुक्तम् ।

बह्वृचपरिशिष्टे ।

अनूदकमधूपं च गन्धमाल्यविवर्जितम् ।

अनूदकम्=अनर्घ्यम् । पिण्डोदकमवनेजनप्रत्यवनेजनपरिषेचनरूपं तद्वर्जितमित्यर्थः । तथा—

एकोद्दिष्टेषु सर्वेषु न स्वधा नाभिरम्यताम् ।
नाग्नौकरणमन्त्रश्च एकं पात्रं तिलोदकम् ॥
स्वस्त्यस्तु विसृजेदेवं सङ्क्रमणवर्जनम् ।
एकोद्दिष्टस्य पिण्डे तु अनुशब्दो न विद्यते ॥
पितृशब्दं न कुर्वीत पितृहा चोपजायते ।

अत्र प्रेतशब्दः प्रयोक्तव्यो न पितृशब्दः, "ऊर्ध्वं तूद्दिश्य प्रेताय सर्वत्रैव प्रदीयते" । इति वचनात् ।

तथा स्मृतिरत्नावल्याम् ।

आशिषो द्विगुणा दर्भा जयाशीः स्वस्तिवाचनम् ।

पितृशब्दश्च सम्बन्धः शर्मशब्दस्तथैव च ।
पात्रालम्भोऽवगाहश्च उल्मुकोल्लेखनादिकम् ।
तृप्तिप्रश्नश्च विकरः शेषप्रश्नस्तथैव च ॥
प्रदक्षिणा विसर्गश्च सीमान्तगमनं तथा ।
अष्टादशपदार्थांश्च प्रेतश्राद्धे विवर्जयेत् ॥

क्रियानिबन्धे—

उत्तानं स्थापयेत् पात्रमेकोद्दिष्टे सदा बुधः ।
न्युब्जं तु पार्वणे कुर्यात्तस्योपरि कुशान्न्यसेत् ॥
सपिण्डीकरणान्तानि प्रेतश्राद्धानि यानि वै ।
तानि स्युर्लौकिके वह्नावित्याह स्वाश्वलायनः ॥

अत्र लौकिकाग्निः सपिण्डीकरणान्तश्राद्धेषु, अन्ये तु धर्माः सपिण्डीकरणप्राक्तनैकोद्दिष्टेष्वेव बोध्याः । नवश्राद्धशेषमन्नं यजमानेनान्येन वा न भोक्तव्यमित्याह—

अङ्गिराः ।

नवश्राद्धेषु यच्छिष्टं गृहे पर्युषितं च यत् ।
दम्पत्योर्भुक्तशेषं च तन्न भुञ्जीत कर्हिचित् ।

नवश्राद्धशेषप्रतिपादनमाह—

देवलः ।

एकोद्दिष्टेषु शेषं तु ब्राह्मणेभ्यः समुत्सृजेत् ।
ततः कामं तु भुञ्जीत स्वयं मङ्गलभोजने ॥

नवसंज्ञकेष्वेकोद्दिष्टश्राद्धेषु शेषमन्नं श्राद्धभोक्तृभ्यः समर्पयेत्तदनुज्ञया जलादौ वा प्रक्षिपन्न भुञ्जीत नवान्यं कमपि भोजयेत् ।

ततस्तदनन्तरं क्रियमाणे मङ्गलभोजने नवातिरिक्ते श्राद्धे शेषं स्वयं भुञ्जीत, ज्ञात्यादींश्च भोजयेत् । श्राद्धशेषादन्येनान्नेन ज्ञातिदीनानाथादयो भोजनीयाः । अत एव श्राद्धान्यभिधायोक्तं—

ब्रह्मपुराणे ।

कर्त्तव्यं तु नरैः श्राद्धं देशकालानुरोधतः ।
सपिण्डाश्च सजातीयास्तथान्येऽपि बुभुक्षिताः ।
दीनानाथाश्च कृपणास्तथान्नमुपभुञ्जते ॥

इति नवश्राद्धानि ।

अथाशौचान्तदिनकृत्यम् ।

कारिकायाम्—

गत्वा ग्रामाद् बहिः सर्वे पिण्डशेषं समाप्य तु ।
अत्र नैमित्तिकं क्षौरं निषेधेऽपि हि दर्शवत् ॥

त्यक्त्वैव वाससी पूर्वं स्पृष्ट्वा स्नायुर्निमित्ततः ।
अत्र पिण्डत्रयं दद्युस्तत्सपिण्ड्यस्तथादिमम् ॥
प्रेताय मध्यमं पिण्डं तृतीयं च यमाय च ।
गौरसर्षपकल्केन तिलकल्केन संयुतम् ॥
शिरः स्नानं ततः कृत्वा तोयेनाचम्य वाग्यतः ।
वासोयुग्मं नवं शुक्लमक्षतं शुभ्रमेव च ।
गृहीत्वा गां सुवर्णं च मङ्गलानि शुभान्यपि ॥
स्पृष्ट्वा सङ्कीर्तयेद्वाचं पश्चाच्छुद्धो भवेन्नरः ।
विप्रो जलाग्नी संस्पृश्य राजा वाहनमायुधम् ॥
वैश्यः प्रतोदं रश्मीन् वा शूद्रो यष्टिं च शुद्ध्यति ।
तैलाभ्यङ्गो बान्धवानामङ्गसंवाहनं च यत् ॥
तेन चाप्यायते जन्तुर्यच्चश्नन्ति स्वबान्धवाः ।
पत्नी च वपनं कुर्यादिति व्यासेन भाषितम् ॥
कर्त्रात्र प्रार्थिताः सर्वे ज्ञातिसम्बन्धिबान्धवाः ।
दद्युरभ्यङ्गतः पूर्वं स्त्रीस्त्रीन् धर्मोदकाञ्जलीन् ॥
पूर्ववन्नामगोत्राभ्यां नियमो नेह वेश्मनः(१) ।
प्रविशेयुः सुवासिन्योऽभ्यङ्गस्नाताः सिताशुकाः ॥
बालपूर्वाः पूर्णघटाः स्वगृहं तु विशोभितम् ।
शमो मित्रैश्चतुर्भिश्च कुर्याच्छान्त्युदकं गृहे ।
जपो प्रतिरथादेः स्यादिति पैठीनसेर्वचः ॥
दानं स्वस्त्ययनं शान्तिर्ब्राह्मणानां च पूजनम् ।
उत्तीर्णदुःखस्तु ततः कुरुते शाठ्यवर्जितः ॥
इदानीमुद्धृतैस्तोयैः पाकं कुर्युरतन्द्रिताः ।

इत्याशौचान्त्यदिनकृत्यम् ।

अथैकादशाहिकश्राद्धानि ।

तत्र—

कूर्मपुराणे ।

एकादशेऽह्नि कुर्वीत प्रेतमुद्दिश्य भावतः ।
द्वादशे वाह्नि कर्तव्यमनिन्द्येऽप्यथवाहनि ॥
एकं पवित्रमेकोऽर्घः पिण्डमात्रं तथैव च ।
एवं मृताहे कर्तव्यं प्रतिमासं तु वत्सरम् ॥

(१) कश्चन इत्यन्यत्र पाठः ।

अत्र द्वादशादिदिनानि यद्येकादशेऽह्नि अन्याशौचादिना विघ्न-स्तदा द्रष्टव्यानीति कश्चित् । तन्न—

आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।
कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥

इति शङ्खेनान्याशौचेऽप्येतस्य विधानात् ।

मत्स्यपुराणे ।

ततस्त्वेकादशाहे तु द्विजानेकादशैव तु ।
क्षत्रादिः सूतकान्ते तु भोजयेदयुजो द्विजान् ॥
आवाहनाग्नौकरणं दैवहीनं विधानतः ।
एकं पवित्रमेकोऽर्घ एकः पिण्डो विधीयते ।
उपतिष्ठतामिति च पश्चाद्देयं तिलोदकम् ।
स्वदितं विकिरे ब्रूयाद्विसर्गे चाभिरम्यताम् ॥
शेषं पूर्ववदत्रापि कार्यं वेदविदो विदुः ।
अनेन विधिना सर्वमनुमासं समाचरेत् ॥

अत्र चावाहनबाधेऽपि कात्यायनोक्त आयान्तु न इत्यावाहनोत्तरं विहितो जपो भवत्येव । गोभिलेन त्वावाहन एव तस्य मन्त्रस्य विहित-त्वाच्छन्दोगानामेकोद्दिष्टे स निवर्त्तत इति मैथिलाः । अग्नौकरणपर्युदासे च हुतशेषदानबाधे तदङ्गपात्रालम्भनस्य समन्त्रस्य बाधः । अङ्गत्वं च तस्य हुतशेषं दत्वेति क्त्वाश्रुतेः । अमृतं जुहोमीति मन्त्रलिङ्गाच्चेति गौडाः । मैथिलास्त्वेकोद्दिष्टे पात्रालम्भनं भवत्येवेत्याहुः ।

ब्रह्मपुराणे ।

सूतकान्ते गृहे श्राद्धमेकोद्दिष्टं प्रचक्षते ।

मार्कण्डेयपुराणे ।

मृताहनि तु कर्त्तव्यमेकोद्दिष्टं शृणुष्व तत् ।
दैवहीनं तथैकार्घ्यं तथैवैकपवित्रकम् ॥
आवाहनं न कर्त्तव्यमग्नौकरणवर्जितम् ।
प्रेतस्य पिण्डमेकं च दद्यादुच्छिष्टसन्निधौ ॥
तिलोदकं चापसव्यं तन्नामस्मरणान्वितम् ।
अक्षय्यममुकस्येति स्थाने चैवोपतिष्ठताम् ॥
इति ब्रूयात् प्रयत्नेन कर्ता विप्रविसर्जने ।
अभिरम्यतामिति वदेद् ब्रूयुस्तेऽभिरताः स्म ह ॥
प्रतिमासं भवेदेतत् कार्यमावत्सरान्नरैः ।

बौधायनः ।

एकोद्दिष्टं च एवं स्याद् द्वादशेऽहनि वा पुनः ।

अथवोर्ध्वमयुग्मेषु कुर्यात्ताहस्सु शक्तितः ॥
अर्धमासेऽथवा मासे ऋतौ सम्वत्सरेऽपि वा ।
निमन्त्रणे तु पूर्वेद्युर्दैवममौक्तानिस्तथा ॥
न स्वधा श्रावणायूपधूपदीपनमस्कृतिः ? ।
साग्निं समिध्य पर्युक्ष्य परिस्तीर्य च सादयेत् ॥
दर्वीमौदुम्बरीमाज्यस्थालीं च श्रुवमेव च ।
पात्रं च प्रोक्षणीं चैव तिलोदकघरं तथा ॥
प्रोक्ष्यैतत्सविशेषान्नमानीयाज्यं निरूप्य च ।
अधिश्रित्य च पर्यग्निं कृत्वा ततुभयं ततः ॥
स्रुवं दर्वीं च संमृज्य त्वन्नमुद्वास्य धारितम् ।
कृत्वा तिलोदकं पुंसां स्त्रीणां चोदितमन्त्रवत् ॥
पितृशब्दे क्षिपेत्प्रेतं स्वधावर्जं तु सर्वतः ।
प्रेतमावाह्य विप्रांश्चाप्युपवेश्य निमन्त्र्य च ॥
अमुष्मै तृप्तिरस्त्वेवं तिलोदकमिहार्पयेत् ।
तृप्तिरस्त्विति चान्योऽपि ब्रूयाद्दत्वाप्यलङ्कृते ॥
करिष्यामीत्यनुज्ञाय कुरुष्वेति वचोदितः ।
उपस्तीर्याथ दर्व्यां तु सर्वाभ्यः सकृत्सकृत् ॥
अभिघार्याथ जुहुयादङ्गारान् भस्ममिश्रितान् ।
पृथक् दक्षिणतः कृत्वा प्रेतायेत्यादि नामतः ॥
अभिमृश्यान्नमूहित्वा निक्षिप्यानुदिशेत्ततः ।
अमुष्या उपतिष्ठन्त्विस्यथ मन्त्रैः समीक्ष्य तान् ॥
भुक्त्याचान्तेषु कृत्वा च स्वदितं च तिलोदकम् ।
विकीर्योत्तिसक्य दत्वा च दक्षिणामुदिते क्षये ॥
अभिवाद्य तु तान् ब्रूयात्तृप्तिरस्त्विति तेऽपि च ।
अस्तु तृप्तिरिति ब्रूयुरनुज्ञानान्तमाचरेत् ॥
अनुज्ञातोऽन्नशेषेण पिण्डं दत्वा प्रसिच्य च ।
तृप्ता स्थेत्येतमादाय पिण्डमुच्छिष्टमेव च ॥

अपामन्ते तदुत्सृज्य स्नात्वा गच्छेद् गृहान् प्रति ।
पुण्याहशुक्लदीपं च पूर्णकुम्भादिमङ्गलम् ॥
गृहद्वारे स दृष्ट्वान्नं शेषं भुञ्जीत कामतः ।
क्षत्रियः स्नातमात्रस्तु स्पृशेद्वाहनमाहितम् ॥
वैश्यः प्रतोदं रश्मिं वा यष्टिं शूद्रः कृतक्रियः ।

एकोद्दिष्टान्त एवायं संस्कर्त्ता मुच्यते त्वघात् ॥
तृतीयपक्ष आयाते कुर्यादेव द्वितीयकम् ।
मासि मासि च कामन्तु नष्टे पूर्णे कथंचन ॥
वत्सरे वत्सरे केचित् कुर्वतेऽस्य मृताहनि ।

अत्र च साग्निकेनापि वैश्वदेवः पश्चात्कार्यः । तथा च—

गृह्यपरिशिष्टम् ।

संप्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च ।
अग्रतो वैश्वदेवः स्यात्पश्चादेकादशेऽहनि ॥

एतच्छ्राद्धं च न केवलं ब्राह्मणस्यैकादशेऽह्नि अपि तु क्षत्रियादेरपि ।

अस्य श्राद्धस्यैकादशाह एव कालः । तथा च—

पैठीनसिः ।

एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम् ।
चतुर्णामपि वर्णानां सूतकं तु पृथक् पृथक् ॥ इति ।

तथा च शङ्खः ।

आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।
कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥ इति ।

तथा ।

ऽप्येकाहाद्याशौचयोरप्यैकादशाह एव सर्वैराद्यमेकोद्दिष्टं कर्त्तव्यम् ।

सद्यः शौचेऽपि दातव्यं प्रेतस्यैकादशेऽहनि ।
स एव दिवसस्तस्य श्राद्धशय्यासनादिषु ॥

इति शङ्खवचनात् ।

अत्र च सद्यः शौचग्रहणं स्वाल्पकालिकाशौचसङ्कोचोपलक्षणम् । न च "अथाशौचव्यपगम" इति विष्णुवचनविरोधः । तस्य ब्राह्मणाभिप्रायेणाप्युपपत्तेः । एवं हि सति सङ्कोचमात्रं स्यान्न कस्य चित्पदस्य लक्षणा । कुर्यादेकादशेऽहनीत्यत्रैकादशपदस्योपलक्षणत्वे विधौ लक्षणा स्यात् । न च—

ततस्तेषां दशाहे तु द्विजानेकादशैव तु ।
क्षत्रादिः सूतकान्ते तु भोजयेदयुजो द्विजान् ॥

इति मात्स्यवचनविरोधः ।

ब्राह्मण एकादशाह आद्यश्राद्ध एकादश ब्राह्मणान् पक्वेनान्नेन भोजयेत् । क्षत्रियादिस्त्वेकादशाह आमेनाद्यश्राद्धं कृत्वा सूतकान्ते पक्वेनान्नेन ब्राह्मणान् भोजयेदेवमर्थकेन मात्स्यवचनेनास्यैव पक्षस्य समर्थ-

नात् । एवं च सत्येकादशाहसूतकान्तकालद्वयोपेतं ब्राह्मणक्षत्रियादि-विषयं विधिद्वयमर्थवद्भवति । अन्यथा विष्णुवचनवत् सूतकान्तरूप-कालोपेतेनैव विधिना सर्ववर्णसाधारणाद्यश्राद्धविधिसिद्धौ विधिद्व-यमनर्थकं स्यादिति विज्ञानेश्वरहेमाद्रिप्रभृतयः ।

शूलपाणिप्रभृतयस्तु ।

एकादशाहे यच्छ्राद्धं तत्सामान्यमुदाहृतम् ।
एकादशभ्यो विप्रेभ्यो दद्यादेकादशेऽहनि ॥

इति भविष्योत्तरे,

एकादशाहे कर्त्तव्यं श्राद्धं प्रेताय यत्नतः ।

इति वाराहपुराणे, पूर्वोदाहृतसत्यव्रतपैठीनसिशङ्खादिवचनेष्वपि एकादशाहपदमाशौचोत्तरदिनोपलक्षणम् । यथाशौचव्यपगम इति वि-ष्णुवचनात् , क्षत्रादिः सूतकान्ते तु भोजयेदयुजो द्विजानिति मत्स्य-पुराणाच्च । तेन क्षत्रियादिभिः स्वस्वाशौचान्ते ऽप्येकाहाशौचिभिश्च दशाहमध्य एव दशाहकृत्यानुष्ठानान्त एकादशाहश्राद्धं कर्त्तव्यमि-त्याहुः ।

अन्योऽपि विशेषो हेमाद्रयुदाहृतपरिशिष्टे—

आशिषो द्विगुणा दर्भा जपाशीः स्वस्तिवाचनम् ।
पितृशब्दः स्वसम्बन्धः शर्मशब्दस्तथैव च ॥
पात्रालम्भोऽवगाहश्च उल्मुकोल्लेखनादिकम् ।
तृप्तिप्रश्नश्च विकरः शेषप्रश्नस्तथैव च ॥
प्रदक्षिणाविसर्गश्च सीमान्तगमनं तथा ।
अष्टादश पदार्थांस्तु प्रेतश्राद्धे विवर्जयेत् ।

मनुरपि प्रेतश्राद्धमधिकृत्य—

अदैवं भोजयेच्छ्राद्धं पिण्डमेकं तु निर्वपेत् ।

याज्ञवल्क्यः ।

एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥
उपतिष्ठतामक्षय्यस्थाने विप्रविसर्जने ।
अभिरम्यतामिति वदेद् ब्रूयुस्तेऽभिरताः स्म ह ॥

कात्यायनः ।

एकोद्दिष्टमेकार्घमेकं पवित्रमेकः पिण्डो नावाहनं नाग्नौकरणम्, नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्नः सुस्वदितमितीतरे ब्रूयुः, उप-

पतिष्ठतामित्यक्षय्यस्थाने अभिरम्यतामिति विसर्गोऽभिरताः स्म इतीतरे।

शाङ्ख्यायनः।

अथातः एकोद्दिष्टमेकपवित्रमेकार्घ्यमेकपिण्डं नावाहनं, नाग्नौकरणं, नात्र विश्वेदेवाः स्वदितिमिति तृप्तिप्रश्नः, उपतिष्ठतामित्यक्षय्यस्थाने अभिरम्यतामिति विसर्गः। संवत्सरमेव प्रेते एकं पवित्रमेकशिखं पवित्रमेकोद्दिष्टे शलाकेकेतिवचनात्। द्विशिखं चोक्तं—

नागरखण्डे।

एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम्।
अच्छिन्नाग्रमभिन्नाग्रं कुर्याद्दर्भतृणद्वयम्॥
पवित्रं तद्विजानीयादेकोद्दिष्टं विधीयते। इति

सत्यव्रतः।

प्रातरुत्थाय प्रेतब्राह्मणानेकादशाम्नस्य मध्याह्ने(१) नानाभक्ष्यान्नरसविन्यासैरेकैकमुद्दिश्य विधिवत्पिण्डदानम्। वासोहिरण्यदास्युपानच्छत्रोदककुम्भदक्षिणाः। गुणवति पात्रे शय्याप्रदानम्। ततः स्वस्त्ययनादिधर्माः प्रवर्त्तन्ते। दशम्यामतीतायामेकैकमुद्दिश्य भोजयेत्तेषामेवैकस्मै गुणवते शय्या देया।

अत्र ब्राह्मणाभावे शुचौ देशे व्याहृतिभिरग्निं प्रतिष्ठाप्य परिसमूहनपर्युक्षणपरिस्तरणानि कृत्वा द्विजवदग्निसमीपे क्षणादि दत्वा प्रेताय स्वाहेत्येकामग्नौकरणस्थानीयामाहुतिं हुत्वा परिवेषणादिसङ्कल्पान्तं कृत्वा उदीरतेत्यष्टाभिः स्वाहाकारान्तैश्चतुर्वारावृत्त्या हुत्वा पिण्डदानादिशेषं समापयेदिति विधिः कार्य इति केचित्।

एकोद्दिष्टे धर्मविशेषानाह—

विष्णुः।

अथाशौचव्यपगमे प्रातः सुप्रक्षालितपाणिपादः स्वाचान्तस्त्वेवं विधानेव ब्राह्मणान् यथा शक्त्युदङ्मुखान् गन्धमाल्यवस्त्रालङ्कारादिभिः पूजितान् भोजयेदेकवन्मन्त्रानूहेतैकादिष्ट उच्छिष्टसन्निधावेकमेव तन्नामगोत्राभ्यां पिण्डं निर्वपेत्। भुक्तवत्सु ब्राह्मणेषु दक्षिणाभिपूजितेषु प्रेतनामगोत्राभ्यां दत्ताक्षय्योदकेषु चतुरङ्गुलपृथ्वीस्तावदन्तरास्तावदधः खाता वितस्त्यायतास्तिस्रः कर्षूः कुर्यात्। कर्षूणां समीपे चाग्नित्रयमुपसमाधाय परिस्तीर्य तत्रैकैकस्मिन्नाहुतित्रयं जुहुयात्। सोमाय पितृमते स्वधा नमः। अग्नये कव्यवाहनाय स्वधा

(१) अपराह्ने इति अपरार्के पाठः।

नमः । यमायाङ्गिरस्वते स्वधा नमः । स्थानत्रये च प्राग्वत्पिण्डनिर्वपणं कुर्यात् । ततो दधिघृतमांसैः कर्षूत्रयं पूरयित्वा एतत्त इति जपेत् ।

लघुहारीतः ।

एकोद्दिष्टं प्रकुर्वीत पाकेनैव सदा स्वयम् ।
अभावे पाकपात्राणां तदहः समुपोषणम् ॥

अथ च विशिष्य पदार्थविचारः श्राद्धप्रकाशे द्रष्टव्यः । इत्यैकादशाहिकश्राद्धप्रयोगः ।

अथ मृतशय्यादानविधिः ।

तत्र जीवदवस्थायां शय्यादानमुक्त्वा तद्धर्मातिदेशपूर्वकमेकादशाहे शय्यादानविधिमाह—

भविष्योत्तरे ।

शय्यादानं प्रवक्ष्यामि तुभ्यं पाण्डुकुलोद्वह ।
यां दत्त्वा शिवभागी स्यादिहलोके परत्र च ॥
शय्यादानं प्रशंसन्ति सर्वे देवद्विजोत्तमाः ।
अनित्यं जीवितं यस्मात्पश्चात्कोऽन्यः प्रदास्यति ॥
तावत्स बन्धुः स पिता यावज्जीवति भारत ।
मृते मृत इति ज्ञात्वा क्षणात्स्नेहो निवर्त्तते ॥
तस्मात्स्वयं प्रदातव्यं शय्याभोज्यजलादिकम् ।
आत्मैव ह्यात्मनो बन्धुरिति सञ्चिन्त्य चेतसि ॥
आत्मैव यदि नात्मानं दानैर्भोगैः प्रपूजयेत् ।
कोऽन्यो हिततरः स्वस्माद्यः पश्चात्पूजयिष्यति ॥
तस्माच्छय्यां समासाद्य सारदारुमयीं दृढाम् ।
दन्तपत्रचितां रम्यां हेमपट्टैरलङ्कृताम् ॥
हंसतूलीप्रतिच्छन्नां शुभगण्डोपधानिकाम् ।
प्रच्छादनपटीयुक्तां गन्धधूपादिवासिताम् ॥
तस्यां संस्थापयेद्धैमं हरिं लक्ष्म्या समन्वितम् ।
उच्छीर्षके घृतभृतं कलशं परिकल्पयेत् ॥
विज्ञेयः पाण्डवश्रेष्ठ ! सनिद्राकलशो बुधैः ।
ताम्बूलकुङ्कुमक्षोदकर्पूरागुरुचन्दनम् ॥
दीपकोपानहौ छत्रचामरासनभाजनम् ।
पार्श्वेषु स्थापयेद्भक्त्या सप्तधान्यानि चैव हि ॥
शयनस्थस्य भवति यदन्यदुपकारकम् ।
भृङ्गारकरकाद्यं तु पञ्चवर्णं वितानकम् ॥

शय्यामेवंविधां कृत्वा ब्राह्मणायोपपादयेत् ।
सपत्नीकाय सम्पूज्य पुण्येऽह्नि विधिपूर्वकम् ॥
यथा न कृष्णशयनं शून्यं सागरजातया ।
शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि ॥
दत्त्वैवं सकलं तस्य प्रणिपत्य विसर्जयेत् ।
एवं शय्याप्रदाने तु विधिरेष प्रकीर्त्तितः ॥
एकादशाहेऽपि तथा विधिरेष प्रकीर्तितः ।
ददाति यदि धर्मार्थं बान्धवो बान्धवे मृते ।
विशेषं चात्र राजेन्द्र ! कथ्यमानं निशामय ॥
तेनोपभुक्तं यत्किञ्चित्किञ्चित्पूर्वं गृहे स्थितम् ।
तद्वाप्यलङ्कं च तथा वस्त्रवाहनभाजनम् ॥
यद्यदिष्टं च तस्य स्यात्तत्सर्वं परिकल्पयेत् ।
तमेव पुरुषं हैमं तस्यां संस्थापयेत्तदा ॥
पूजयित्वा प्रदातव्या मृतशय्या यथोदिता ॥

पद्मपुराणे ।

मृतकान्ते द्वितीयेऽह्नि शय्यां दद्याद्विलक्षणाम्(१) ।
काञ्चनं पुरुषं तद्वत्फलवस्त्रसमान्वितम् ॥
उपवेश्य तु शय्यायां मधुपर्कं ततो ददेत् ॥
रजतस्य तु पात्रेण दधिदुग्धसमान्वितम् ।
अस्थि लालाटं संगृह्य सूक्ष्मं कृत्वा सवस्त्रजम् ।
पाययेद्द्विजदाम्पत्यं नानाभरणभूषितम् ॥
भोजयेत् प्रयतः प्राज्ञो विधिरेष सनातनः ।
एष एव विधिर्दृष्टः पार्वतीयैर्द्विजोत्तमैः ॥

शय्यादिकमेकोद्दिष्टश्राद्धभोक्त्रे देयम् ।

एकोद्दिष्टविधानेन यदेकस्या प्रदीयते ॥
वस्त्रालङ्कारशय्याद्यं पितुर्यद्वाहनादिकम् ।
गन्धमाल्यैस्तदभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत् ॥

इति वचनात् ।

एकोद्दिष्टे ब्राह्मणानेकत्वपक्षे तु गुणवते देयम् । तेषामेवैकस्मै गुणवते शय्या देयेति प्रागुदाहृतसत्यव्रतवचनात् ।

वाराहपुराणे ।

संगृह्य पाणिना पाणौ मन्त्रेणोत्थापयेद् द्विजम् ।

---

( १ ) सुलक्षणामित्येन्यत्र पाठः ।

दद्यात्छत्रं ब्यासनं चैव तथैवाञ्जनकङ्कतीम् ॥
अञ्जनकङ्कतीं गृह्य शय्यामाक्रम्य स द्विजः ।
मुहूर्तं तत्र विश्रम्य निवापस्थानमागतम् ॥
गवां लाङ्गूलमाधृत्य ब्राह्मं हस्तं समादधेत् ।

अस्य च फलमुक्तं—

भविष्योत्तरे ।

स्वर्गे पुरन्दरगृहे सूर्यपुत्रालये तथा ।
सुखं वसत्ययं जन्तुः शय्यादानप्रभावतः ॥

सूर्यपुत्रालयेऽयमपुरे ।

पीडयन्ति न ते याम्याः पुरुषा भीषणाननाः ।
न घर्मेण न शीतेन बाध्यते स नरः क्वचित् ॥
अपि पापसमायुक्तः सूर्यलोकं स गच्छति ।
विमानवरमारूढः सेव्यमानोऽप्सरोगणैः ॥
आभूतसंप्लवं यावत्तिष्ठत्यातङ्कवर्जितः ।
शय्याप्रदानममलं तव पाण्डुपुत्र !
संकीर्तितं सकलसौख्यनिदानभूतम् ।
यो वै ददाति विधिवत्स्वयमेव नाके
कल्पं विकल्परहितः स विभाति मर्त्यः । इति शय्यादानविधिः ।

अथ वृषोत्सर्गः ।

षट्त्रिंशन्मते—

एकादशेऽह्नि प्रेतस्य यस्य नोत्सृज्यते वृषः ।
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥

भविष्योत्तरे ।

कार्तिक्यामथवा माघ्यामयने वा युधिष्ठिर ।
चैत्र्यां वापि तृतीयायां वैशाख्यां द्वादशेऽह्नि वा ॥

विष्णुधर्मोत्तरे ।

अश्वयुक्शुक्लपक्षस्य पञ्चदश्यां नराधिप ।
कार्त्तिकेऽप्यथवा मासि वृषोत्सर्गं तु कारयेत् ॥
ग्रहणे द्वे महापुण्ये तथा चैवायनद्वये ।
विषुवद्द्वितीये चैव मृताहे बान्धवस्य च ॥
उत्सृजेन्नीलकण्ठं वै कौमुद्याः समुपागमे ।

नीलकण्ठो=नीलवृषः । कौमुदी=आश्विनकार्त्तिकयोः पौर्णमासी ।

वृषोत्सर्गमकुर्वाणस्य निन्दा मत्स्यपुराणे ।

न करोति वृषोत्सर्गं सुतीर्थे वा जलाञ्जलिम् ।
न ददाति सुतो यस्तु पितुरुच्चार एव सः ॥

उच्चारः=पुरीषम् । वृषोत्सर्गप्रदेशो—

देवीपुराणे ।

स त्वरण्ये भवेत्तीर्थे उत्सर्गो गोकुलेऽपि वा ।

ब्रह्मपुराणे ।

प्रागुदक्प्रवणे देशे मनोज्ञे निर्जने वने ।

वृषमुत्सृजेदिति शेषः ।

कालिकापुराणे ।

अरण्ये चत्वरे वापि गोष्ठे वा मोचयेद्वृषम् ।
न गृहे मोचयेद्विद्वान् कामयन् पुष्कलं फलम् ॥

वृषलक्षणमपि—

कालिकापुराणे ।

नीलोत्पलदलप्रख्यः श्वेताङ्घ्रिश्चन्द्रमस्तकः ।
सुभ्रूर्युवा लोहिताक्षो वृषभो नील उच्यते ॥

ब्रह्माण्डपुराणे ।

लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥

मत्स्यपुराणे ।

चरणाश्च मुखं पुच्छं यस्य श्वेतानि गोपतेः ।
लाक्षारससवर्णश्च तं नीलमिति निर्दिशेत् ॥
वृष एव स मोक्तव्यो न स धार्यो गृहे भवेत् ।
तदर्थमेषा चरति लोके गाथा पुरातनी ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
गौरीं वाप्युद्वहेद्भार्यां नीलं वा वृषमुत्सृजेत् ॥

उत्सर्गविधिरुक्तो—

भविष्योत्तरे ।

साण्डं नीलं शङ्कुपादं सपौण्ड्रं श्वेतपुच्छकम् ।
गोभिश्चतुर्भिः सहितमुत्सृजेत्तं विधिं शृणु ॥
यथोवाच पुरा गर्गो गोकुलेष्वथ पाण्डव ।
तं ते सम्पादयिष्यामि विधिं ब्रह्मप्रचोदितम् ॥
मातरः स्थापयित्वा च पूजयेत् कुसुमाक्षतैः ।
मातृश्राद्धं ततः कुर्यात् सदभ्युदयकारकम् ॥

अर्कमूले तु कलशमश्वत्थदलसेवितम् ।
तत्र रुद्राञ्जपित्वा तु स्थापयेद्रुद्रदैवतम् ।
सुसमिद्धं ततः कृत्वा वह्निं मन्त्रपुरस्सरम् ॥
आज्येन जुहुयात् षड्भिः पृथगाहुतिसंस्कृतैः ।
पौष्णमन्त्रैस्ततः पश्चाद्धुत्वा वह्निं यथाविधि ॥
एकवर्णं द्विवर्णं वा लोहितं श्वेतमेव वा ।
जीववत्सपयस्विन्याः पुत्रं सर्वाङ्गसुन्दरम् ॥
चतस्रो वत्सतर्यश्च ताभिः सार्द्धमलङ्कृतम् ।
तासां कर्णे जपेद्विप्रः पतिं वो बलिनं शुभम् ॥
ददामि तेन सहिताः क्रीडध्वं हृष्टमानसाः ।
ततो वामे त्रिशूलं च दक्षिणे चक्रमालिखेत् ॥
अङ्कितं शूलचक्राभ्यां चर्चितं कुङ्कुमादिना ।
पुष्पमालावृतग्रीवं सितवस्त्रैश्च छादितम् ॥
विमुञ्चेद्वत्सिकाभिश्चतसृभिर्बलिनं वृषम् ।
देवालये गोकुले वा नदीनां सङ्गमे तथा ॥
इत्युक्तं गर्गमुनिना विधानं वृषमोक्षणे ।

अत्र मातृपूजापूर्वकं मातृश्राद्धं कुर्यादित्यनेन वृद्धिश्राद्धं कर्त्तव्यमित्युक्तं भवति । श्राद्धं कृत्वा श्राद्धभोक्तृव्यतिरिक्तानामपि भोजनादिना प्रीणनं कृत्वा तिलोदकदानपूर्वकं पिण्डदानं कर्त्तव्यमित्युक्तम् ।

वाराहपुराणे ।

श्राद्धं कृत्वा तु सुश्रोणि ! तर्पणीया द्विजातयः ।
दत्त्वा तिलोदकं पिण्डं पितृपैतामहेषु च ॥

कलशे रुद्रजपानन्तरं पुरुषसूक्तकूष्माण्डमन्त्रजपोऽप्युक्तो विष्णुधर्मोत्तरे ।

तत्र रुद्रं जपित्वा तु स्थापयेद्रुद्रदेवताम् ।
तथैव पौरुषं सूक्तं कूष्माण्डानि तथैव च ॥

सौरपुराणे ।

रुद्रमावाह्य कलशे गन्धपुष्पाक्षतादिभिः ।
सम्पूज्य संस्पृशन् कुम्भं रुद्राध्यायं जपेत् ततः ॥
जपेच्च पौरुषं सूक्तं गायेद्रौद्रीं च संहिताम् ।

रौद्री संहितोक्ता सामविधानाख्ये ब्राह्मणे ।

आद्यो राजा तद्वोघर्ष आज्यदोहानि देवव्रतानि चैषा रौद्री नाम संहितैतां प्रयुञ्जन् रुद्रं प्रीणातीति ।

आवोराजेत्येकम्, तद्व इति चत्वारि, आज्यदोहानि त्रीणि, द्वे व्रतानि त्रीणि, एतान्येकादशसामानि रौद्री संहिता।

विष्णुधर्मोत्तरे।

सुसमिद्धं गवां मध्ये सुविस्तीर्य हुताशनम्।
पयसा श्रपयेद्विद्वान् चरुं पौष्णं समाहितः॥

विष्णुः।

गवां मध्ये सुसमिद्धमग्निं परिस्तीर्य पौष्णं चरुं श्रपयित्वा पूषगा अन्वेतु त इहरतिरिति च हुत्वा वृषभमानीयायस्करमाकारयेत्।

अयस्करो=लोहकारः।

इहरतिरित्यादिभिः स्वाहान्तैः षड्भिर्मन्त्रैराज्यहोमः।

सौरपुराणे।

ततोवृषभमानीय अग्नेरुत्तरतः स्थितम्।
सव्यास्फिजि लिखेच्चक्रं शूलं वाहौ तु दक्षिणे॥

सव्यस्फिजि=वामकटिभागे।

कुङ्कुमेनाङ्कयित्वादौ ब्राह्मणः सुसमाहितः।
तप्तेन धातुना पश्चादयस्कारोऽङ्कयेद् वृषम्॥

देवीपुराणे।

तप्तेन वामतश्चक्रं याम्ये शूलं समालिखेत्।
धातुना हेमतारेण आयसेनाथवाङ्कयेत्।

हेमं=सुवर्णम्। तारं=रूप्यम्। आयसं=लोहम्।

विष्णुः।

एकस्मिन् पार्श्वे चक्रेणापरस्मिन् शूलेनाङ्कितं च हिरण्यवर्णा इति चतसृभिः शन्नोदेवीरिति च स्नापयेत्।

विष्णुधर्मोत्तरे।

अङ्कितं स्नापयेत्पश्चात्स्नाते तस्य तथा पठेत्।
हिरण्यवर्णेति ऋचश्चतस्रो मनुजेश्वर॥
आपो हिष्ठेति तिस्रश्च शन्नोदेवीति चाप्यथ।

पारस्करः।

अथात्र मूलान्कलशानष्टौ स्रग्दामभूषितान्।
सरत्नाँश्च सवस्त्रांश्च चूतपल्लवशोभितान्॥
स्थापयित्वा चतुर्भिस्तु संस्नाप्यो वृषभः पुरः।
चतुर्भिर्वत्सिकाः स्नाप्यास्ततः सर्वान् विभूषयेत्॥
ऋचः समुद्रज्येष्ठाद्याः कीर्त्तयेदभिषेचने।

देवीपुराणे।

चतस्रो वत्सिका भद्रा द्वे चासम्भवतोऽपि वा।

वत्सः सर्वाङ्गसम्पूर्णः कन्यका वत्सिका भवेत् ॥
अलङ्कृत्य यथाशोभमुत्सर्गङ्कारयेन्मुने ।
विवाहस्त्वेकवत्सर्या नीलेन भवते सदा ॥

एकवत्सरी=एकवर्षवयस्का ।

तथा ।

अष्टाभिर्धेनुभिर्युक्तश्चतुर्भिरथवा क्रमात् ।
त्रिहायनीभिर्धन्याभिः सुरूपाभिश्च शोभिभिः ॥

त्रिहायन्यः=त्रिवर्षाः ।

सर्वोपकरणोपेतः स सर्वस्य वरो महान् ।
उत्स्रष्टव्यो विधानेन अपिस्मृतिनिदर्शनात् ॥

आदित्यपुराणे ।

विसृज्य चाप्यगुर्विण्यो देया गावो वृषस्य च ।
अष्टौ वाथ चतस्रो वा यथालाभमथापि वा ॥

विष्णुधर्मोत्तरे ।

वत्सतर्यश्चतस्रश्च तं वृषं च नराधिप ।
अलं कुर्यात्ततः पश्चाद्गन्धमाल्यैश्च शक्तितः ॥
किङ्किणीभिश्च रम्याभिस्तथाचीनांशुकैः शुभैः ।

पारस्करः ।

अथालङ्कृत्य तान् सर्वान् रुद्राध्यायं समाहितः ।
श्रावयेत्पौरुषं सूक्तं तथाप्रतिरथानि च ॥
आशुः शिशान इत्यादि द्वादशर्चमप्रतिरथम् ।

विष्णुः ।

स्नातालङ्कृतं स्नाताभिश्चतसृभिर्वत्सतरीभिः सार्धमानीय रुद्रान्पुरुषसूक्तं कुष्माण्डीश्च जपेत् । पितावत्सेति च मन्त्रं वृषभस्य दक्षिणे कर्णे । पितावत्सेति मन्त्रोऽथर्ववेदे प्रसिद्धः ।

विष्णुधर्मोत्तरे ।

ततोऽङ्किते जपेन्मन्त्रमिमं प्रयतमानसः ।
वृषो हि भगवान् धर्मश्चतुष्पादः प्रकीर्तितः ।
वृणोमि तमहं भक्त्या स मां रक्षतु सर्वतः ॥

पारस्कर इमं मन्त्रमभिधायाह—

इति प्रार्थ्य वृषेन्द्रं तं गृहीतकुसुमाञ्जलिः ।
त्रिःप्रदक्षिणमावृत्य नमस्कुर्याद्यथाविधि ॥
प्रत्यङ्मुखानां तु गवामेतावान्विधिरिष्यते ।
अथैशान्याभिमुखतः कुर्याद्धोमो वृषं तथा ॥

गावो वृषस्योभयतो वृषं मध्ये निवेश्य च ।
सर्वेषां कण्ठवस्त्राणि श्लेषयेत्तु परस्परम् ॥
अयं हि वो मया दत्तः सर्वासां पतिरुत्तमः ।
तुभ्यं चैता मया दत्ताः पत्न्यः सर्वा मनोरमाः ॥
संयोज्येति वृषं गोभिः(१) पितृभ्यस्तं निवेदयेत् ।
सव्येन पाणिना पुच्छं समालभ्य वृषस्य तु ॥
दक्षिणेनापि आदाय सतिलाः सकुशास्तथा ।
ततो गोत्रं समुच्चार्यामुकस्मा इति ब्रुवन् ॥
वृष एष मयादत्तस्तं तारयतु सर्वदा ।
सहेम सतिलं भूमावित्युच्चार्य विनिक्षिपेत् ॥

अनेकप्रमीतोद्देशेन तु वृषोत्सर्गे मन्त्र उक्तो—

वाराहपुराणे ।

नरा ये चात्र तिष्ठन्ति पतिताः पितृबान्धवाः ।
तेषां भवत्वयं त्राता नीलो मुक्तो यथाविधि ॥
गृहीत्वौदुम्बरं पात्रं कृत्वा कृष्णतिलोदकम् ।
करेण पुच्छमादाय पितृणामुत्सृजेद् वृषम् ॥

औदुम्बरं=ताम्रमयम् । स्त्रीषु विशेषः ।

सङ्ग्रहे ।

पतिपुत्रवती नारी भर्तुरग्रे मृता यदि ।
वृषोत्सर्गं न कुर्वीत गां दद्याच्च पयस्विनीम् ॥

अत्र च पतिपुत्रयोः साहित्यं विवक्षितम् । पतिपुत्रवत्या अपि वृषोत्सर्गो भवत्येवेत्यापस्तम्बीयाः । इति वृषोत्सर्गविधिः ।

अथ षोडशश्राद्धानि ।

ब्रह्मपुराणे ।

नृणां तु त्यक्तदेहानां श्राद्धाः षोडशसंख्यया ।
चतुर्थे पञ्चमे चैव नवमैकादशे तथा ॥
तथा द्वादशभिर्मासैः श्राद्धा द्वादशसंख्यया ।
कर्त्तव्याः शुचिभिस्तेषां तत्र विप्रांस्तु भोजयेत् ॥

भविष्यत्पुराणे ।

अस्थिसञ्चयने श्राद्धं त्रिपक्षे मासिकानि च ।
द्विकषोढश तथा तिथ्याः प्रेतश्राद्धानि षोडश ।

---

(१) ताभिरिति गौडश्राद्धनिबन्धे पाठः ।

रिक्तयोस्तिथ्योरेकतिथ्या न्यूने षष्ठे द्वादशे च मासे।

छन्दोगपरिशिष्टे।

द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा।
सपिण्डीकरणं चैव इत्येतच्छ्राद्धषोडश॥

आद्यम्=एकादशाहिकम्। षाण्मासिके=ऊनषाण्मासिके। एकं पूर्वषट्कान्तर्गतषष्ठमासे। अपरमुत्तरषट्कान्तर्गतषष्ठमासे। कियत्तिथिन्यूनयोः षष्ठमासयोस्ते इत्यपेक्षायामुक्तं तत्रैव—

एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः।
न्यूना संवत्सरश्चैव स्यातां षाण्मासिके तदा॥

एते च षाण्मासिके एकाहन्यूनतापक्षे मृततिथिसहितत्रिंशत्तिथ्यात्मकषष्ठमासद्वादशमासान्त्यदिनयोः कार्ये।

षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वद्युरेव ते।
मासिकानि स्वकीये तु दिवसे द्वादशेऽपि च॥

इति हेमाद्रिमाधवाद्युदाहृतपैठीनसिवचनात्। पूर्वोदाहृतछन्दोगपरिशिष्टवचनद्वयम्—हेमाद्रौ जातूकर्ण्यवचनत्वेन पठितम्। कालादर्शमदनरत्नादिषु जातूकर्ण्यवचनमेवं पठितम्।

द्वादश प्रतिमास्यान्याद्यषाण्मासिके तथा।
त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश॥ इति।

अत्राद्यषाण्मासिकाब्दिकशब्दा ऊनमासिकोनषाण्मासिकोनाब्दिकपराः। द्वादशानामपि मासिकानां पृथग्ग्रहणादिति व्याख्यातं च। द्वादशमासिकानि च मृततिथिसहितत्रिंशत्तिथ्यात्मकमासाद्यमृततिथावेव कर्तव्यानि। "मृताहनि तु कर्तव्यं प्रतिमासं तु वत्सरम्" इतिवचनात्। अत एवाद्यमेकादशेऽहनीत्यनेनाद्यनवश्राद्धवत्कर्तव्यत्वेनप्राप्तं प्रथममासिकमेकादश उत्कृष्यते। एवं च प्रथममासिकोनमासिकद्वितीयमासिकत्रैपाक्षिकतृतीयमासिकचतुर्थपञ्चषाण्मासिकोनषाण्मासिकसप्तमाष्टमनवमदशमैकादशद्वादशमासिकोनाब्दिकानि षोडशश्राद्धानि क्रमेण दद्यादिति हेमाद्र्युदाहृतसूत्रबोधितः श्राद्धक्रमोऽप्युपपद्यते।

इति षोडशश्राद्धानि।

एकादशाहादारभ्य संवत्सरपर्यन्तं प्रतिदिनं प्रेतायोदकुम्भो दातव्यः।

पद्मपुराणे।

उदकुम्भश्च दातव्यो भक्ष्यभोज्यसमन्वितः।

यावद्वर्षं नरश्रेष्ठ सतिलोदकपूर्वकम् ॥

स्मृतिसमुच्चयेऽपि ।

एकादशाहात्प्रभृति घटस्तोयान्नसंयुतः ।
दिने दिने प्रदातव्यो यावत्संवत्सरं सुतैः ॥

लौगाक्षिः ।

यस्य सम्वत्सरादर्वाक् सपिण्डीकरणं भवेत् ।
मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम् ।

इत्युदकुम्भश्राद्धम् । अत्र मासिके उदकुम्भश्राद्धे च विशेषः समयप्रकाशेऽवगन्तव्यः ।

अथ सपिण्डीकरणम् ।

तत्र तत्स्वरूपं केचिदेवमाहुः ॥

प्रेतार्घोदकस्य पित्राद्यर्घपात्रेषु प्रेतपिण्डस्य च पित्रादिपिण्डेषु त्रिधा विभज्य संयोजनं सपिण्डीकरणं, न तु पार्वणैकोद्दिष्टश्राद्धसमुदायः ।

मातुः सपिण्डीकरणं पितामह्या सहोदितम् ।

तथा ।

मातुः सपिण्डीकरणं कथं कार्यं भवेत्सुतैः ।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं स्मृतम् ॥

तथा ।

अपुत्रायां मृतायां तु पतिः कुर्यात् सपिण्डताम् ।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत् ॥

इत्यादिस्मृतिषु संयोजन एव तच्छब्दप्रयोगात् ।

स्त्रियश्च व्यभिचारिण्य आरूढपतितास्तथा ।
न तेषां स्नानसंस्कारो न श्राद्धं न सपिण्डनम् ॥

इति श्राद्धाद्भेदेन सपिण्डननिषेधाच्च । पापकर्मिणो न संसृजेरन् स्त्रियश्चातिचारिणीरिति गौतमेन संसर्गस्यैव निषेधोक्तेश्च ।

गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।
अर्घार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥
ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् ।
एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥

इति प्रसेचने सपिण्डीकरणपदशक्तिग्राहकयाज्ञवल्क्यस्मृतेश्च । श्राद्धद्वयमुपक्रम्य "कुर्वीत सह पिण्डताम्" इति श्राद्धद्वयाद्भेदेन सपिण्डीकरणनिर्देशाच्च ।

गन्धोदकतिलैर्युक्तं कुर्यात् पात्रचतुष्टयम् ।
अर्घार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥

ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिण्डनम् ।

इति स्पष्टोक्तिग्राहकभविष्यत्पुराणाच्च ।

किं च ।

कृते सपिण्डीकरणे नरः संवत्सरात्परम् ।
प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते ॥

इति विष्णुवाक्यात्संयोजनरूपस्य सपिण्डीकरणस्य प्रधानत्वाव-गतेः संयोजनं विनैव समाप्ते श्राद्धप्रयोगे पश्चात्संयोजनलोपे स्मृते-

प्रधानस्याक्रियायां तु साङ्गं तत् क्रियते पुनः ।

इति वचनात्साङ्गाऽऽवृत्तिरुपपद्यते । श्राद्धप्राधान्ये तु प्रधानमिति नावृत्तिः स्यादिष्यते च सा शिष्टैः, तस्मात्संयोजनमेव प्रधानं श्राद्धद्वयं त्वङ्गभूतम्, सपिण्डीकरणमुपक्रम्य-

सपिण्डीकरणे श्राद्धं दैवपूर्वं विधीयते ।
पितॄनावाहयेत्तत्र पुनः प्रेतं न निर्दिशेत् ॥

इति कूर्मपुराणाद्वाक्यप्रकरणाभ्यामङ्गत्वावगतेः । यत्तु-

मात्स्ये ।

सपिण्डीकरणं श्राद्धमिति सामानाधिकरण्यं, तत्पूर्वोत्तरयुक्त्या तयोर्भेदाज्जघन्यम्, श्राद्धशब्दे लक्षणाश्रयणेन स्यादैक्यमिति न कश्चि-द्विरोध इति ।

वस्तुतस्तु—

सपिण्डीकरणं श्राद्धं तत्रापि विधिरुच्यते ।
प्रेतोद्देशेन कर्त्तव्यं श्राद्धं तत्र समाहितैः ॥
तत्रापि दैवरहितमेकार्घैकपवित्रकम् ।
नैवाग्नौकरणं तत्र तच्चावाहनवर्जितम् ॥
अपसव्यं च तत्रापि भोजयेदयुजो द्विजान् ।
पितृत्रयार्थमपि च भोजयेच्च तथापरान् ॥

इति श्राद्धरूपं सपिण्डीकरणमभिधाय-

विशेषस्तत्र चान्योऽस्ति प्रतिमासक्रियाधिकः ॥
तं कथ्यमानमेकाग्रयाद् गदतो मे निशामय ।
तिलगन्धोदकैर्युक्तं तत्र पात्रचतुष्टयम् ॥
कुर्यात्पितॄणां त्रितयमेकं प्रेतस्य पुत्रक ।
पात्रत्रये प्रेतपात्रमर्घार्थं च प्रसेचयेत् ॥
ये समाना इति जपन् पूर्ववच्छेषमाचरेत् ।

इत्यादिना प्रतिमासक्रियाङ्गविशेषत्वेन संयोजनस्याभिधानादङ्ग-त्वावगतेः ।

स्त्रीणामप्येवमेवैतदेकोद्दिष्टमुदाहृतम् ।
सपिण्डीकरणं तासां पुत्राभावे न विद्यते ॥

इत्युत्तरवाक्ये "एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपी"ति याज्ञवल्क्यवाक्यस्य मिताक्षरापरार्कयोः श्राद्धप्राधान्यपरतया व्याख्यानाच्च पार्वणमेकोद्दिष्टं च सपिण्डीकरणमुदाहृतमिति श्राद्धस्यैव सपिण्डीकरणत्वेनोपसंहाराच्छ्राद्धमेव प्रधानं संयोजनं त्वङ्गमिति युक्तम् । किं च-

सपिण्डीकरणं चाब्दे सम्पूर्णेऽभ्युदयेऽपि वा ।
द्वादशाहे तु केषाञ्चिन्मतं चैकादशे तथा ॥
पूर्वं कृत्वा नवं प्रेतं उत्तरांश्च पितामहान् ।

नवं प्रेतं पूर्वं कृत्वैकोद्दिष्टरूपेणेष्ट्वा, पितामहानिति बहुवचनं प्रभृत्यर्थं पितामहप्रभृतीन्कृत्वा पार्वणरूपेणेष्ट्वेत्यर्थः ।

चतुर्भिः पितृभिर्युक्तं पार्वणं तु विधीयते ।

संयोजनोत्तरं चतुर्णामपि पितृत्वाच्चतुर्भिः पितृभिरित्युक्तम् । न तु प्रेतस्यापि पितृत्वमनेकस्मृत्यादिविरोधात् ।

चत्वारि चार्घ्यपात्राणि चार्चयेत्पूर्ववच्छुचिः ।
प्रेतपात्रं पितॄणां तु पात्रेषु निनयेद् बुधः ।
मधुवाता तृचं जप्त्वा सङ्गच्छध्वमिति तृचम् ।
ये समाना इति द्वाभ्यां केचिदिच्छन्ति सूरयः ।
एवं पिण्डेषु कर्त्तव्यं परमं तु विसर्जनम् ॥

इति चतुर्विंशतिमतेऽर्घ्यपात्रार्चनश्राद्धविसर्जनरूपाभ्यामङ्गाभ्यां सन्दंशापातान्तरप्रकरणात्संयोजनस्याङ्गत्वम् । किं च-

समाप्तेऽब्दे पशुश्राद्धं विधिवत्प्रतिपादयेत् ।
चतुरो निर्वपेत्पिण्डान् प्रथमं तेषु सन्धयेत् ॥

इत्यत्र न श्राद्धशब्दो लाक्षणिकः, प्रमाणाभावात् । पशोरन्वयानुपपत्तेश्च । एवं च "सपिण्डीकरणं श्राद्ध"मित्यादावपि तत्प्रख्यन्यायेनाग्निहोत्रादिवभिधानवन्नामत्वोपपत्तौ किमर्थं लक्षणाश्रयणम् । किं च संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय तत्प्रपितामहाय च ब्राह्मणान् देवपूर्वान् भोजयेदिति श्राद्धद्वयं प्रकृत्याग्नौकरणमावाहनं पाद्यं च कुर्यात्संसृजतु त्वा पृथिवी समानीव इति प्रेतपात्रं पात्रत्रये योजयेत् । उच्छिष्टसन्निधौ पिण्डं चतुष्टयं कुर्यात् । देवपूर्वान् ब्राह्मणानाचान्तान् दत्तदक्षिणाननुव्रज्य विसर्जयेत् । ततः प्रेतपिण्डमर्घपात्रोदकवत्पितृपिण्डे निदध्यादिति विष्णुवचनेऽत्रेति सप्तमीश्रुत्या "येन कर्मणेर्त्सेत् तत्र जयान् जुहुयात" इतिवत्संयोजनस्य विनियोगात्स्पष्टं श्राद्धस्य प्राधा-

स्यम् । उक्तं च श्राद्धप्रकाशकृता सपिण्डीकरणस्यैकोद्दिष्टपार्वणोभयधर्मग्राहित्वादिति वदता शूलपाणिनापि सपिण्डनस्य पार्वणविधानातिदेशेनापराह्णप्राप्तिरिति । स्मार्त्तेनापि "सहपिण्डक्रियायाम्" इति मनुवचनस्य प्रेतपिण्डेन सह पिण्डस्य क्रिया मिश्रीकरणं यत्रेति समाख्यां प्रदर्शयता हेमाद्रिणापि यत्रैकस्मा एव दीयते तदेकोद्दिष्टं त्रिभ्यो यत्र दीयते तत्पार्वणं यत्र युगपदेकोद्दिष्टपार्वणे स्यातां तत्सपिण्डीकरणमितीति । किं च सम्वत्सरमधिकृत्य—

सपिण्डीकरणं तस्मिन् काले राजेन्द्र ! तच्छृणु ।
एकोद्दिष्टविधानेन कार्यं तदपि पार्थिव ! ॥

इति विष्णुपुराण एकोद्दिष्टधर्मातिदेशोऽप्येवं सङ्गच्छते । किं च पुनः सपिण्डीकरणे "अर्घ्यसंयोजनं नैव पिण्डसंयोजनं तथा" इति संयोजननिषेधोऽङ्गत्व एव घटते, प्राधान्ये तु तल्लोपात्सपिण्डीकरणविधिरुपरुध्येत । संयोजनलोपे पुनः प्रयोगस्तु विनियाश्वत्थमामिल्लीग आधानस्य वचनादाचाराद्वा न विरुद्धः । एवं च तत्र तत्र संयोजने सपिण्डीकरणशब्दो लाक्षणिको व्याख्येयः । अन्ये तु—

समासेऽब्दे पशुश्राद्धं विधिवत्प्रतिपादयेत् ।
चतुरो निर्वपेत्पिण्डान्प्रथमं तेषु सन्धयेत् ॥
वपां पशुवसां चैव ह्यवदानानि यानि च ।
हुत्वा तानि विधानेन शेषान् पिण्डान् समापयेत् ।

इत्युभयं प्रस्तुत्य—

ततः प्रभृति वै प्रेतः पितृसामान्यमाप्नुयात् ।
विन्दते पितृलोकं च—

इत्युत्तरवाक्येन फलसम्बन्धकरणादुभयं प्रधानमित्याहुः ।

नचैवं पिण्डनिर्वापादेरपि प्रकृतत्वात्प्राधान्यं स्यादिति वाच्यम् । पिण्डार्थद्रव्यनिर्वापस्यातिदेशादेवाङ्गत्वात्सौर्ये चरौ निर्वापवत् । यस्तु निर्वपतिस्त्यागार्थस्तदङ्गमेव तत् । नापि पशुतन्त्रहोमस्य प्राधान्यापत्तिः । तस्याङ्गीकरणरूपत्वे कॢप्तमेवाङ्गत्वमतिदेशात् । स्वतन्त्रत्वेऽपि उपयोक्ष्यमाणश्राद्धीयद्रव्यसंस्कारकत्वेनाङ्गत्वमेव पात्नीवतहोमवत् । अस्मिन्पक्षे पुनः सपिण्डीकरणे प्रधानस्यापि संयोजनस्य लोपो वचनादसोमयाजिनं प्रति सान्नाय्यलोपवत् । तस्मादुभयं प्रधानमिति । एतच्च षोडशश्राद्धानि कृत्वा कुर्यात् । "श्राद्धानि षोडशापाद्य विदधीत सपिण्डन"मिति लौगाक्षिवचनात् ।

श्राद्धानि षोडशादत्वा नैव कुर्यात् सपिण्डनम् ।
तद्दानौ तु कृते प्रेतः पितृत्वं न प्रपद्यते ॥

इति वशिष्ठेन षोडशश्राद्धान्यकृत्वा सपिण्डीकरणानुष्ठाने दोषोक्तेश्च। द्वादशाहं ह्यनिकरणं कृते सपिण्डीकरण इति शेषः। लौगाक्षिवचने षोडशश्राद्धसपिण्डीकरणयोः कालार्थः सम्बन्धो "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इतिवत्। न तु वाजपेयबृहस्पतिसवयोरिवाङ्गाङ्गिभावः।

एकादशादिभिः श्राद्धैर्मृतस्याप्यायनं भवेत्।
सम्यक् संवत्सरे पूर्णे पितॄणां स्थानमृच्छति॥
ततः प्रभृति वै प्रेतः पितृसामान्यमाप्नुयात्।
विन्दते पितृलोकं च—

इति देवलहारीतवचनाभ्यां पारार्थ्यावगमान्निर्ज्ञातपारार्थ्ययोश्च सम्बन्धस्य कालार्थत्वात्। आप्यायनं=प्रेतत्वनिवृत्तिः, संवत्सरे पूर्णे इत्यत्र कृतेन सपिण्डीकरणेनेति शेषः। एतानि च "श्राद्धानि षोडशापाद्य" इत्यादीनि वचनानि सम्वत्सरकालादन्यत्र सपिण्डीकरणे षोडशश्राद्धापकर्षार्थानि। संवत्सरान्ते सपिण्डीकरणपक्षे अर्थादेव तदानन्तर्यसिद्धेर्वचनानर्थक्यात्। अपकृष्टान्यपि च सपिण्डीकरणोत्तरमवशिष्टानि यथाकालं पुनः कार्याणि।

अर्वाक् संवत्सराद्यत्र सपिण्डीकरणं कृतम्।
षोडशानां द्विरावृत्तिं कुर्यादित्याह गौतमः॥

इति गालवोक्तेः। अत्र षोडशोक्तावपि प्राप्तकालानामेव पुनरनुष्ठानम्। तथा च—

काष्र्णाजिनिः।

अर्वागब्दाद्यत्र यत्र सपिण्डीकरणं कृतम्।
तदूर्ध्वं मासिकानां स्याद्यथा कालमनुष्ठितिः॥ इति।

अथवा त्रैपक्षिकोनमासिकप्राप्त्यर्थं षोडशग्रहणम्। तदूर्ध्वं मासिकानां स्यादित्यत्र मासिकग्रहणेन त्रैपक्षिकादेः प्राप्त्यभावात्। वृद्धिनिमित्तं तु पुनः क्रियमाणान्यपि अपकर्षणीयानि।

सपिण्डीकरणादर्वाक् अपकृष्य कृतान्यपि।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात्॥

इति स्मृतेः। अपकृष्यन्त इति वर्तमानापदेशोऽप्यप्राप्तार्थत्वाद्विधिः। शाण्ड्यादिष्विव निषेधनं च।

निर्वर्त्य वृद्धितन्त्रन्तु मासिकानि न तन्त्रयेत्।
अयातयाममरणं न भवेत्पुनरस्य तु॥

इति कात्यायनेनोक्तम्। अत्र वृध्युत्तरं मासिकावृत्तौ प्राप्तपितृभावोऽपि प्रेतः पुनर्मृतः स्यात्। तस्मान्न तन्त्रयेदिति निषेधाद् वृद्धिनिमित्ते

सपिण्डनापकर्षेऽप्येतानि न पुनः कार्याणीति गम्यते । एतच्च सपिण्डीकरणं प्रेतस्य पित्रादिषु त्रिषु जीवत्सु न कर्त्तव्यम् । पितृत्वप्राप्त्यभावेनाफलत्वात् । तथा च—

सुमन्तुः ।

त्रयाणामपि पिण्डानामेकेनापि सपिण्डने ।
पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थितः ॥ इति ।

त्रिषु च जीवत्सु नैतत्संभवतीत्यर्थः । त्रयाणां प्रेतपिण्डात्पूर्वेषामिति शेषः । एवं च प्रेतस्य पितृपितामहानामन्यतरस्मिन्मृते यो जीवति तमतिक्रम्य तदुत्तरेभ्यः त्रिभ्यो दद्यादिति समुदायार्थः । तथा च—

ब्रह्मपुराणे ।

मृते पितरि यस्याथ विद्यते तु पितामहः ।
तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः ॥ इति ।

प्रेतस्य पितरि जीवति पितामहे मृते प्रपितामहे च जीवति कर्त्ता प्रेतपिण्डं प्रेतपितरं परित्यज्य पितामहपिण्डे प्रेतप्रपितामहं परित्यज्य तत्पूर्वजयोः पिण्डयोः संयोजयेदित्याद्युदाहरणम् । तथा च—

ब्रह्मपुराणे ।

न देयो जीवते पिण्डः स च यस्मान्मृतो भवेत् ।
पिण्डस्तु जीवतो हस्ते शिरश्छेदसमो भवेत् ॥ इति ।

सपिण्डनं च प्रेतपित्रादिभिरसंस्कृतैरपि सह कर्त्तव्यम् । न तु तेषामपि सपिण्डनं कृत्वा तैः सह कर्त्तव्यं, न वा तत्सापिण्डनं यावत्प्रेतसपिण्डनमुत्कर्षव्यम् तथा च—

कात्यायनः ।

असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः ।
पितरं तत्र संस्कुर्यादिति कात्यायनोऽब्रवीत् ॥

अत्र पूर्वग्रहणं सपिण्डनानुयोगिपरं पौत्रादिग्रहणं कर्तृपरं पितृग्रहणं प्रेतपरं द्विवचनमविवक्षितमिति । असंस्कृतौ=दाहसपिण्डनादिसंस्काररहितौ । संस्कुर्यात्=सपिण्डयेत् , वचनादिति भावः । एवं कृते दर्शश्राद्धमपि असंस्कृताभ्यामपि कर्त्तव्यं 'पितुः सपिण्डनं कृत्वा कुर्यान्मासानुमासिकम्" इति सामान्यतः कात्यायनोक्तेः । स्त्रीसपिण्डने तु शङ्खः ।

मातुः सपिण्डीकरणं कथं कार्यं भवेत्सुतैः ।
पितामह्यादिभिः सार्धं सपिण्डीकरणं स्मृतम् ॥ इति ।

मृतपितृकस्य विशेषमाह—

यमः।

जीवत्पिता पितामह्या मातुः कुर्यात्सपिण्डनम्।
प्रमीतपितृकः पित्रा पितामह्याथवा सुतः॥ इति।

पित्रा=पितृवर्गेण। पितामह्या=तद्वर्गेणेत्यर्थः। यत्तु—

मृते पितरि मातुर्न पुत्रैः कार्या सपिण्डता।
पितुरेव सपिण्डत्वे तस्या अपि कृतं भवेत्॥

इति शातातपवचनं तद्यदि समूलं तदा मातृपितृसपिण्डीकरणासमर्थविषयं सहगमनविषयं वा द्रष्टव्यम्। अपुत्रायास्तु पतिकर्तृकं सपिण्डनं श्वश्र्वादिभिरेव।

अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डनम्।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्॥

इति पैठीनसिवचनात्। एवकारो भिन्नक्रमः। श्वश्र्वादिभिरेवेत्यर्थः। यत्तु—

सपिण्डीकरणं स्त्रीणां पुत्राभावे न विद्यते।

इति तत्पत्यभावसहिते पुत्राभावे वेदितव्यम्। अपुत्रायां मृतायां त्विति पूर्वोदाहृतवचनात्। अन्वारोहणे तु भर्त्रैव सपिण्डनम्।

मृता यानुगता नाथं सा तेन सहपिण्डताम्।
अर्हति स्वर्गवासोऽपि यावदाभूतसम्प्लवम्॥

तथा—

पत्या चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः।
सा मृतापि हि तेनैक्यं गता मन्त्राहुतिव्रतैः॥

इति शातातपयमोक्तिभ्याम्। एकेनेति पितामह्यादिपक्षनिवृत्त्यर्थम्। पत्या=पतिवर्गेण। सपिण्डनस्य पार्वणोपजीव्यत्वात्। इति केचित्। मन्त्राः यदेतद्धृदयं तवेत्यादयः। आहुतयो=विवाहहोमाः। व्रतानि=ब्रह्मचर्यादीनि। स्मृत्यर्थसारे तु-तस्यैव सह न तु पतिवर्गेणेत्युक्तम्। युक्तं चैतत्।

पुरुषस्यार्द्धदेहं तु भार्या वेदेषु गीयते।
अर्धाङ्गमात्मनो ह्येष यज्जायेति ह वै नृप॥
तस्मात्पत्या सहैवास्याः सपिण्डीकरणं स्मृतम्।

इतिभविष्यपुराणे हेतुनिर्देशात्। अत्र स्मृत्यर्थसारे विशेषः। अन्वारोहणैकादिनमरणे स्त्रियाः पृथक् सपिण्डनं न कार्यं पत्युः कृते स्त्रियाश्च कृतं भवति। दिनान्तरमृते पुत्रः स्वपितृपितामहपिण्डमध्ये कुशानन्तर्धाय पित्रैकेन मातुः सापिण्ड्यं कुर्यात्सर्वत्र भर्त्रा पत्न्याः सापिण्ड्यमे-

केनैव श्वशुरेण निषिद्धमिति । पुत्रिकासुतेन तु पुत्रिकासपिण्डनं पुत्रिकापित्रादिभिः सह कार्यम् । तथाच—

बौधायनः ।

आदिशेत्प्रथमे पिण्डे मातरं पुत्रिकासुतः ।
द्वितीये पितरं तस्यास्तृतीये च पितामहम् ॥ इति ।

एतद् यद्यपि पार्वणविषयं तथाप्यर्थापत्त्या सपिण्डनमप्येवं कल्पयन्ति । अन्यथैकक्रमकपार्वणानुपपत्तेः । यत्तूशनोवचनं—

पितुःपितामहे यद्वत्पूर्णे संवत्सरे सुतैः ।
मातुर्मातामहे तद्वदेषा कार्या सपिण्डना ॥ इति ।

तदप्येतत्परम् । बौधायनकवाक्यतायामेकश्रुतिकल्पनालाघवात् । मातामहे=तद्वर्गे । आसुरगान्धर्वराक्षसपैशाचविवाहोढासुतो मातामह्यादिभिर्मातामह्यां जीवन्त्यां मातुः पितामह्यादिभिस्तस्यामपि जीवन्त्यां मातुःप्रपितामह्यादिभिर्मातामह्यादिभिर्वा सपिण्डीं कुर्यात् । तथाच—

शातातपः ।

तन्मात्रा तत्पितामह्या तच्छ्वश्र्वा वा सपिण्डनम् ।
आसुरादिविवाहेषु विप्राणां योषितां स्मृतम् ॥ इति ।

तन्मात्रा=तस्या मातुर्मात्रा । मातुः पितामह्या । तृतीयस्तच्छब्दः पितामहीपरः पितामह्याश्च श्वश्र्वा मातुः प्रपितामह्येत्यर्थः । "पितुः पितामहे तद्वत्" इति सुमन्तुवचनान्मातामहेन वा कुर्यात्पुत्रिकायामिवात्रापि प्रवृत्तेः । अत्रासुरादीति विशेषोपादानादन्ये पक्षा ब्राह्मादिविवाहोढासुतविषया विज्ञेयाः । मातृसपिण्डने मातामह्यादौ जीवति पितृसपिण्डनन्यायातिदेशो—

ब्रह्मपुराणे ।

मातर्येव मृतायां तु विद्यते च पितामही ।
प्रपितामहीतः सर्वस्तु कार्यस्तत्राप्ययं विधिः ॥ इति ।

अयं विधिः=जीवदतिक्रमेण परैः सह सपिण्डनमिति ।

एवं येन केनापि मातुः सापिण्ड्ये वृद्ध्यष्टकादिश्राद्धेषु पितामह्यादिभिरेव सह पार्वणं कार्यमित्युक्तं मदनपारिजाते । पठन्ति च वचनम्—

नान्दीमुखेऽष्टकाश्राद्धे गयायां च मृतेऽहनि ।
पितामह्यादिभिः सार्धं मातुः श्राद्धं समाचरेत् ॥

इति शातातपनाम्ना । केचित्तु—व्युत्क्रमेण मृते सपिण्डनमेव नेच्छन्ति । "व्युत्क्रमेण प्रमीतानां नैव कार्या सपिण्डना" इति वचनादिति । अपरे तु मातृपितृभर्तृभिन्नस्य न कार्यम् । मात्रादीनां तु कार्यमेव ।

व्युत्क्रमेण मृतानां च सपिण्डीकृतिरिष्यते ।
यदि माता यदि पिता भर्त्ता नैष विधिः स्मृतः ॥

इति माधवे स्कान्दोक्तेरित्याहुः । युक्तं चैतत् ।

मृते पितरि यस्याथ विद्यते च पितामहः ।
मातर्यथ मृतायां तु विद्यते च पितामही ॥

इत्यादिब्रह्मपुराणे तथैवाभिधानात् ।

सपिण्डीकरणविधिरुक्तः—

कूर्मपुराणे ।

सपिण्डीकरणं प्रोक्तं पूर्णे संवत्सरे पुनः ।
कुर्याच्चत्वारि पात्राणि प्रेतादीनां द्विजोत्तमः ॥
प्रेतार्थं पितृपात्रेषु पात्रमासेचयेत्ततः ।
ये समाना इति द्वाभ्यां पिण्डानप्येवमेव हि ।

बैजवापः ।

चत्वार्युदपात्राणि प्रयुनक्ति, एकं प्रेताय, त्रीणि पितृभ्यः, तत्प्रेतपात्रं पितृपात्रेष्वासिञ्चति, ये समाना इति द्वाभ्यामेवं पिण्डोऽप्यभिमृशति ।

एष वोऽनुगतः प्रेतः पितरस्तं ददामि वः ।
शिवमस्त्विति शेषाणां जायतां चिरजीविता ॥
समानीव आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥

एतदर्घसंयोजनं प्रेतार्घदानानन्तरमवशिष्टेन जलेन पितामहार्घदानात्पूर्वं कार्यम् । तदुक्तं—

ब्रह्मपुराणे ।

चतुर्भ्यश्चार्घपात्रेभ्य एकं वामेन पाणिना ॥
गृहीत्वा दक्षिणेनैव पाणिना च तिलोदकम् ।
(१)संसृजतु त्वा पृथ्वी ये समाना इति स्मरन् ॥
प्रेतविप्रस्य हस्ते तु चतुर्भागं जलं क्षिपेत ।
ततः पितामहादिभ्यस्तत्तन्मन्त्रैः पृथक् पृथक् ॥
ये समाना इति द्वाभ्यां तज्जलं तु समर्पयेत् ।
अर्घ्यं तेनैव विधिना प्रेतपात्राच्च पूर्ववत् ॥
तेभ्यश्चार्घ्यं निवेद्यैव पश्चाच्च स्वयमाचरेत् ।

अयमर्थः । एकं तिलोदकं प्रेतपात्रस्थं जलं चतुर्भागं कृत्वैकं भागं

(१) सम्मार्जयित्वा पृथिवीमिति श्राद्धतत्त्वोद्धृतः पाठः ।

प्रेतविप्रहस्ते क्षिपेद्दद्यात् । ततस्तदनन्तरं पितामहादिभ्यस्तत्तदर्घ्यपात्रं तत्तन्मन्त्रैः पार्वणार्घ्यदानप्रसिद्धैरुत्सर्गमात्रं कृत्वा ये समाना इति मन्त्राभ्यां तदर्घ्यं प्रेतार्घ्यं तेनैव विधिना=मुख्यचतुर्भागरूपेण । प्रेतपात्रात्=प्रेतपात्रेण । पूर्ववत्पितामहादिक्रमेण पितामहादिपात्रेषु, समर्पयेत्=संयोजयेत् । अथवा पूर्ववदिति तेभ्यश्चार्घ्यमित्युत्तरेण सम्बध्यते । तेभ्यः=पितामहादिभ्यः । चकार आवृत्त्यर्थः । पूर्वं तत्तदर्घ्यपात्रैरसंसृष्टैरर्घ्यं दत्त्वा इदानीं पुनरपि संसृष्टजलैरर्घ्यं निवेद्य दत्त्वा आचामेत् । विज्ञानेश्वरस्मृत्यर्थसारादयस्तु अर्घ्यसंयोजनानन्तरं प्रेतपात्रावशिष्टजलेन प्रेतायार्घ्यं दद्यादित्याहुः।मदनरत्ने तु-"ततः पितामहादिभ्य" इत्यत्र पितामहादिपात्रेष्वित्यर्थः।प्रेतपात्रं पितृपात्रेष्वासिञ्चतीत्याद्यनेकस्मृतिभ्यस्तन्मन्त्रैः पितामहादिसम्बन्धैरमुकगोत्रप्रेतार्घ्यममुकगोत्रपितामहार्घ्येण संसृजामीत्यादिमन्त्रैर्ये समाना इति द्वाभ्यां च तज्जलम् । अर्घ्यम्=अर्घ्यावशिष्टम् । प्रेतपात्रात्=प्रेतपात्रेण । समर्पयेत्=संयोजयेत् । तेन विधिना=प्राचीनावीतित्वादिना । पूर्ववत=मुख्यचतुर्भागरूपेणेति ।

अन्ये तु ब्राह्मणहस्ते संयोजनमाहुः । तेषां मते वाक्यस्यायमर्थः । प्रेतहस्तेऽर्घ्यचतुर्भागदानानन्तरं पितामहादिभ्यः प्रेतार्घ्यशेषजलं समर्पयेत् दद्यात् । अर्घ्यं तेनैव विधिना=पार्वणार्घ्यदानोक्तविधिना पितामहादिभ्यः समर्पयेदिति सानुषङ्गश्छेदः । प्रेतपात्राच्च पूर्ववत्तेभ्यश्चार्घ्यं निवेद्येति च्छेदः । पूर्ववत्संसृजतु त्वा पृथ्वी ये समाना इति मन्त्रैरिति ।

पिण्डसंयोजनमपि पात्रसंयोजनानन्तरमुक्तम् ।

ब्रह्मपुराणे ।

अथ तेनैव विधिना दर्भमूलेऽवनेजनम् ।
पितुर्दत्वा तु पिण्डं तु दद्याद्गन्धा तु पूर्ववत् ॥

पितामहादिभ्यः पिण्डान् दत्वेत्यर्थः ।

दत्वा पिण्डमथाङ्गुष्ठं ध्यात्वा तत्रस्थमीश्वरम् ॥
सुवर्णरूप्यदर्भैस्तु तं पिण्डं तु ततस्त्रिधा ।
कृत्वा पितामहादिभ्यः पितृभ्यः प्रेतमर्पयेत् ॥

पितामहादिपिण्डेषु प्रेतपिण्डमंशतः संयोजयेदित्यर्थः ।

संसृजतु त्वा पृथ्वी वायुरग्निः प्रजापतिः ॥
एतं मन्त्रं जपेद्गन्धा समानीयांतमेव च ।
ये समाना इति द्वाभ्यां पितृभ्यः प्रेतमर्पयेत् ॥
सुवर्तुलांस्ततस्तांस्त्रीन् पिण्डान् कृत्वा प्रपूजयेत् ।
अर्घ्यपुष्पैस्तथा धूपैर्दीपमाल्यानुलेपनैः ।

मुख्यं तु पितरं कृत्वा पुनस्त्वन्यान् यथाक्रमम् ॥ इति ।

अत्र पूर्वोदाहृतवाक्येषु संयोजने प्रेतादित्वमुक्तम् । कचित्तु काठकश्रुतिरित्युपन्यस्य—

दत्वा पिण्डान् पितृभ्यस्तु पश्चात् प्रेताय पार्श्वतः ।
तं तु पिण्डं त्रिधा कृत्वा आनुपूर्व्याथ सन्ततिम् ।
निदध्यात्त्रिषु पिण्डेषु एष संसर्जने विधिः ॥

इत्यादौ प्रेतान्तत्वमुक्तम् । तच्छाखाभेदेन व्यवस्थापनीयम् ।

विष्णुस्तु पाद्योदकसंसर्गं कर्षूपिण्डसंयोजनं चाधिकमाह ।

संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय तत्प्रपितामहाय ब्राह्मणान् देवपूर्वान् भोजयेदग्नौकरणमावाहनं पाद्यं च कुर्यात् संसृजतु त्वा पृथिवी समानीव इति पाद्यं पात्रत्रये योजयेत् उच्छिष्टसन्निधौ पिण्डचतुष्टयं कुर्यात् । ब्राह्मणांश्च स्वाचान्तान् दक्षिणाभिश्चानुव्रज्य विसर्जयेत् । ततः प्रेतपिण्डं पाद्यपात्रोदकवत्पिण्डत्रये निदध्यात् । कर्षूत्रयसन्निकर्षेऽप्येवम् । पाद्यार्थमुदपात्रचतुष्टयं प्रेतपाद्यार्थं पाद्यपात्रस्थमुदकं प्रेतपाद्योदकेन प्रेताय पाद्यं दत्वा तच्छेषमितरपाद्योदकेषु योजयित्वा तैरुदपात्रैरितरेभ्यः पाद्यानि कुर्यादित्यर्थः । एवं पिण्डेषु तत्र विशेषः । कर्षूत्रय इति । प्रेतकोद्दिष्टसम्बन्धिकर्षूत्रयसहितानपि पिण्डान् प्रेतपिण्डसंसृष्टेषु पिण्डेष्वेकैकं त्रिधा कृत्वा एकैकं भागमेकैकस्मिन् संसृजेदित्यर्थः । कर्षूत्रयादि विष्णुनैवोक्तम् । एकोद्दिष्टविधावेकमेव तन्नामगोत्राभ्यां पिण्डं निर्वपेत् । भुक्तवत्सु ब्राह्मणेषु दक्षिणयाभिपूजितेषु प्रेतनामगोत्राभ्यां दत्ताक्षय्योदकेषु चतुरङ्गुलायता चतुरङ्गुलान्तराला अधःखाता वितस्त्यायतास्तिस्रः कर्षूः कुर्यात् । कर्षूणां समीपे चाग्नित्रयमुपसमाधाय परिस्तीर्य तत्रैकैकस्मिन्नाहुतित्रयं जुहुयात् । सोमाय पितृमते स्वधा नमः, अग्नये कव्यवाहनाय स्वधानमः, यमायाङ्गिरस्वते स्वधा नमः । स्थानत्रये च प्राग्वत् पिण्डनिर्वपणं च कुर्यात्ततो दधिघृतमांसैः कर्षूत्रयं पूरयित्वा एतत्त इति जपेत् । एवं मृताहं प्रतिमासं कुर्यादितीति ।

आश्वलायनपरिशिष्टे ।

न चात्र दैवं योजयेत् । प्रागेव दैवेऽर्घ्यमन्त्राद्यं च दत्वा गन्धमाल्यैः पात्रमर्चयित्वा हुतशेषं पितृभ्यः पाणिषु दद्यादिति । पित्र्यपदार्थैः सह दैवपदार्थानामनुसमयं न कुर्यात् किं तु दैवे काण्डानुसमयः कार्य इत्यर्थः ।

मातुः पिण्डोदकदानादौ गोत्रनिर्णयमाह ।

मार्कण्डेयः ।

ब्राह्मादिषु विवाहेषु यातूढा कन्यका भवेत् ।
भर्तृगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया ॥
आसुरादिविवाहेषु पितृगोत्रेण धर्मवित् । इति ।

लौगाक्षिः ।

मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाः ।
कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः ॥ इति ।

एतच्च पुत्रिकाया एव पुत्रत्वे "अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यती"ति नियोगे च बोध्यम् । नच पितृकुलोत्पन्नायाः कथं स्वगोत्रप्राप्तिरिति वाच्यम् ।

स्वगोत्राद् भ्रश्यते नारी विवाहात् सप्तमे पदे ।
स्वामिगोत्रेण कर्तव्यास्तस्याः पिण्डोदकक्रियाः ॥

तथा ।

चतुर्थीहोममन्त्रैस्तु मांसमज्जास्थिभिः सह ।
एकत्वं सा गता भर्त्तुस्तस्मात्तद्गोत्रभागिनी ॥

इति हारीतबृहस्पतिवचनाभ्यां तत्प्राप्त्यवगतेः । प्राग्विवाहात् गोत्रमेव उत्पत्तिप्राप्तपितृगोत्रत्वनाशे कारणाभावात् ।

पराशरः ।

अप्रत्तायां पिता कुर्यात् प्रत्तायां तु पतिस्तथा ।
स्वेन स्वेनैव गोत्रेण संस्थितायां तिलोदकम् ॥
संस्थितायां तु भार्यायां सपिण्डीकरणान्तिकम् ।
पैतृकं भजते गोत्रमूर्ध्वं तु पतिपैतृकम् ॥
एकमूर्त्तित्वमायाति सपिण्डीकरणे कृते ।
पत्नीपतिपितॄणां तु तस्मात्तद्गोत्रभागिनी ॥

तिलोदकम्=और्ध्वदैहिकानुपलक्षणम् ।

भार्यायामासुरादिविवाहकर्तुरिति शेषः, अप्रत्तायामित्युपक्रमात् । सपिण्डीकरणान्तिकं=तत्पर्यन्तम् । भजते इत्यत्र भार्येति शेषः ।

ऊर्ध्वं=सपिण्डीकरणात् । पतिपैतृकम्=पैतृकं तत्र पतिनिमित्तं गोत्रं भर्तृगोत्रमित्यर्थः । एवं च निन्दितविवाहोढायाः भर्तृगोत्रप्राप्तिर्न पाणिग्रहणादिना, किन्तु सपिण्डीकरणेनैवेत्युक्तं भवति । इति प्रकरणम् ।

प्रत्याशां परिवर्द्धतेऽर्थिजनतादैन्यान्धकारापहे
श्रीमद्वीरमृगेन्द्रदानजलधिर्यद्धक्रचन्द्रोदये ।
राजादेशितामित्रमिश्रविदुषस्तस्योक्तिभिर्निर्मिते
ग्रन्थेऽस्मिन् खलु पूर्णतां समगमत् शुद्धिप्रकाशोऽद्भुतः ।

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलश्रीमन्महाराजाधिराजप्रतापरुद्रतनूजश्रीमन्महाराजमधुकरसाहसूनुश्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकरश्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनुसकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातुश्रीमन्मित्रमिश्रकृते श्रीवीरमित्रोदयाभिधानिबन्धे

शुद्धिप्रकाशः

समाप्तः ।



श्रीगणेशाय नमः।

## अथ वीरमित्रोदयशुद्धिप्रकाशस्य

# शुद्धिपत्रम्।

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| श्राभूमी नकुलः। | श्रीभूमीनकुलः। | ५ | ७ |
| तत्र | तत्र | ९ | ८ |
| श्चिते | चित्ते | ” | ११ |
| बाह्यं | बाह्यं | ” | १७ |
| देशान्तरीथनिमित्त | देशान्तरीयजनन मरणनिमित्त | ” | ३० |
| शुद्ध्यर्थं | शुद्ध्यर्थं | १२ | ३२ |
| परिजाते | पारिजाते | १३ | १७ |
| दैव | दैवे | ” | २६ |
| यिज्ञेय | विज्ञेय | १४ | १३ |
| अन्येषा | अन्येषां | १६ | २ |
| मितिः | मिति | १८ | ३२ |
| वनु | दनु | २४ | ११ |
| मृतो | मृते | २४ | १५ |
| रेकाराम्रस्य | रेकराम्रस्य | २५ | १८ |
| स्त्वेत्यादि | स्त्वित्यादि | ” | २२ |
| भात्रादि | भाभ्रादिगृहे | २८ | ९ |
| सप्तपदा | सप्तपदी | २९ | ४ |
| प्रतिलोभ | प्रतिलोम | २९ | २९ |
| पितृस्वसु | पितृष्वसु | ३६ | २ |
| पितृस्वसु | पितृष्वसु | ” | ३ |
| द्विकं | द्विक | ३७ | ११ |
| सोदस्य | सोदरस्य | ३९ | २ |
| चतुस्त्येक | चतुस्त्र्येक | ४० | २६ |
| रणाज्योतींषि | रणज्योतींषि | ४१ | ३ |
| मातृककम् | मातृकम् | ४७ | १६ |
| ऽष्टात्पर | ऽब्दात्पर | ५० | ६ |
| भेदात्त्रिकटोऽपि | भेदान्त्रिकटोऽपि | ५१ | २१ |
| व्याघ्रादयः | व्याघ्रादयः | ५३ | २० |
| दंष्ट्रिव्यश्च | दंष्ट्रिभ्यश्च | ५६ | १८ |
| स्त्वेकस्मा | स्त्वकस्मा | ” | ३४ |
| महादण्डता | महादण्डहता | ५८ | ११ |
| त्याहु | त्याहुः | ६१ | ७ |
| शास्त्रविहित | शास्त्राविहित | ” | ८ |
| क.स्स्यै | किस्स्यै | ” | १२ |
| ह ते | हते | ” | १३ |
| म्रियन्ते। | म्रियन्ते, | ” | २५ |
| भर्तृमरणे ? | भर्तृमरणे, | ” | ” |
| मरणजन्मनि | मरणजन्मनी | ७३ | ११ |
| सजातीय | सजातीया | ७९ | १८ |
| नेती | नेति | ८० | ३४ |
| कृच्छ | कृच्छ्र | ९३ | २१ |
| विक्रेयं | विक्रेयं, | १०६ | ३० |
| वाक्यात्। | वाक्यात् | १०६ | ३० |
| वाल | बाल | १०८ | ६ |
| अभोक्ष्यान्नाना | अभोज्यान्नाना | १०९ | २ |
| संसर्गिण | संसर्गिणा | १०९ | ८ |
| निणिक्तं | निर्णिक्तं | १११ | १५ |
| शङ्कांस्पदं | शङ्कास्पदं | १११ | १६ |
| हुन्य | हृव्य | १११ | २१ |
| निलेंप | निर्लेपं | ११४ | १२ |
| न्नेवम् | श्चैवम् | ११४ | १४ |
| रूप्य | रूप्य | ११७ | २५ |
| तावधात | तावघात | ११८ | २९ |
| क्षौमदुकूलानां, | क्षौमदुकूलानां | ११८ | ३२ |
| श्वीनानां, | श्वीनानां | ११८ | ३३ |
| गोमन्न | गोमूत्र | ११९ | १९ |
| कुतुपानां | कुतपानां | ११९ | ३१ |
| मलवत्वे | मलवत्त्वे | १२० | १२ |
| कुसुम्म | कुसुम्भ | १२० | २६ |
| क्षाल्याना | क्षालना | ११० | २७ |
| यक्वाकै | पक्वाकै | १२० | ३ |

| अशुद्धम् | शुद्धम् | पृष्ठे पङ्क्तौ | अशुद्धम् | शुद्धम् | पृष्ठे पङ्क्तौ |
|---|---|---|---|---|---|
| राशिकृत | राशीकृत | १२१ १९ | कुतरस्यां | रूत्तरस्यां | १६९ २९ |
| कोशीधान्या | कोशीधान्यानां | १२४ ८ | सुदुष्ककरं | सुदुष्करं | १७० ७ |
| भूभि | भूमि | १२४ ३० | चान्तरेणोरु | चान्तरेणोरू | १७१ १४ |
| तास्र | ताम्र | १२९ ३० | प्रोक्षण्यादीना | प्रोक्षण्यादीनां | ,, २४ |
| यमदग्नि | जमदग्नि | १२९ १६ | अन्तरेणोरु | अन्तरेणोरू | ,, २८ |
| द्धिः | शुद्धिः | १३० ३४ | नेष्टयष्टवावस्ये | नेष्टयेष्टवोद्वस्ये | १७२ २ |
| पधाते | पद्याते | १३६ २१ | संस्थितते | संस्थितो | ,, २ |
| समानाति | समानानि | १३७ १० | पिड्यौ | पिण्डयौ | ,, २९ |
| न्यैकादश | न्येकादश | १३७ १० | पाठत्वा | पठित्वा | १७५ १३ |
| थमः | यमः | १३७ २१ | सक्तु पिण्डं | सक्तुपिण्डं | ,, १४ |
| विशुद्धति | विशुद्ध्यति | १३८ ६ | लोकाधिष्ठत्र्यै | लोकाधिष्ठात्र्यै | १८० ९ |
| विश्ववात् | विस्रवात् | १३८ १२ | ब्रह्मणो | ब्रह्मणे | ,, ११ |
| वशा | वसा | १३८ २२ | मृतिकया | मृत्तिकया | १८२ ४ |
| जल पार | जलपार | १३९ ३८ | भात्म | दात्म | ,, २७ |
| निगिरणं | निगरणं | १४१ ३२ | दर्का कर्यं | दर्कं कार्यं | ,, ३९ |
| निगिरणं | निगरणं | १४१ ३४ | पत्युश्च | पत्युश्चै | १८३ १९ |
| स्नानर्हा | स्नानार्हा | १४४ ३३ | त्तयोः | तयोः | १८४ १४ |
| देहादि | स्नानादि | १४५ १ | वल्यादि | बल्यादि | १९३ १९ |
| स्पृष्ठा | स्पृष्ट्वा | १४६ २७ | हविनिर्वण | हविर्निर्वपण | १९५ १७ |
| देहादि | स्नानादि | १४७ १ | स्पर्शतो | स्पर्शतो | १९७ २९ |
| वाराहांश्च | वराहांश्च | १४८ ३ | स्वंस्कारो | संस्कारो | १९८ २१ |
| स्नानेहतुः | स्नानहेतुः | १४८ १७ | वयवास्तत्रत्य | वयवांस्त-त्रत्यं | २०० १४ |
| रूद्धं | ऊर्ध्वं | १४८ २४ | वा सश्च | वासश्च | २०१ ११ |
| साविाका | साविका | १४८ ३४ | पिडयज्ञा | पिण्डयज्ञा | २०२ २६ |
| स्पर्शादिकाम | स्पर्शादि काम | १४९ ११ | मुक | मुद्क | २०४ ३४ |
| इति | रिति | १४९ १७ | गौरसलषंपा | गौरस-सर्पपा | २०६ १६ |
| भूमिस्थं | भूमिष्ठं | १५१ ३० | स्पर्शिनो | स्पर्शिनो | ,, २२ |
| वराहेन | वराहेण | १५२ १९ | अन्न | अन्नं | २११ ६ |
| शान्ति | शान्ति | १५२ २३ | जयाशीः | जपाशीः | २१६ ३९ |
| उसर्पणम् | उपसर्पणम् | १५५ २४ | एकोदिष्ट | एकोद्दिष्ट | २२० २ |
| नेयं | नयं | १५६ ९ | पतिष्ठता | तिष्ठता | २२२ २ |
| यागात् | यागान् | १५७ १९ | रजरतस्य | रजतस्य | २२४ २० |
| शोड़शकं | षोड़शकं | १५८ १४ | द्वितीये | द्वितये | २२५ ३१ |
| मुमूर्षंकृत्य | मृतकृत्य | १५९ १ | न्मन्त्र | मन्त्र | २२९ ३१ |
| सौवर्णां | सौवर्णीं | १६५ २ | श्वश्रा | श्वश्रा | २३२ १८ |
| पूर्वपत्नी | पूर्व पत्नी | ,, २० | श्वश्रा | श्वश्रा | ,, २१ |
| कात्यानोक्तेः | कात्यायनोक्तेः | १६७ २२ | घुरीण | धुरीण | २४४ ११ |
| करणद्वय | [illegible]णद्वय | १६८ १२ | | | |

इति शुद्धिप्रकाशशुद्धिपत्रम्।

